अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः ।
शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थयेत्यनेन

न च वृषभोग्यरोहिणीयुक्ता पौर्णमासी कदाचनापि तुलादित्ये भवति। एवं वृश्चिकस्थे रवौ न मिथुनभोग्यार्द्रायुक्ता। धनुस्थे च रवौ न कर्कटभोग्येन पुष्येण। मकरस्थे रवौ न सिंहभोग्य-मघया। कुम्भस्थे च रवौ न कन्याभोग्येन हस्तेन। मीनस्थे च न तुलाभोग्यस्वात्या। मेषस्थे च न वृश्चिकभोग्यानुराधेन। वृषे च न धनुर्भोग्येन मूलेन। सिंहे च न मीनभोग्येनोत्तरभाद्र-पदेन। कन्यायाञ्च न मेषभोग्याश्विनीभरणीभ्याम् सर्व्वत्र सूर्य्यावस्थितराशेरष्टमराशौ चन्द्रस्यावस्थानात् परविप्रकर्षस्य पौर्णमासीलक्षणस्यानुपपत्तेः। अन्योन्यमुभयोः सप्तमराशिस्थ-त्वेनैव तत्सम्पत्तेः। तस्माच्चान्द्र एव योगसम्भवात् तद्वाचकत्वमेव माघादिपदानाम्*। न च रूढ़िर्योगमपहरतीति न्यायस्यायं विषयः क्लृप्तरूढ़िविषयत्वात्तस्य।

---

* अन्त्योपान्त्य इत्यादि। अन्त्यः आश्विनः उपान्त्यः भाद्रश्च त्रिभः रेवत्यश्वि[नी]भरण्यन्यतमनक्षत्रविशिष्टपौर्णमासीयुक्तो भवति एवं भाद्रश्च शतभिषादित्रितयान्यत[म]नक्षत्रविशिष्टपौर्णमासीयुक्तो भवति। तुलादित्ये सौरकार्त्तिके न च इत्यस्य भव[ति] इत्यनेन सम्बन्धः। तथाच रोहिण्या वृषराशिघटकतया तत्स्थचन्द्रस्य तुलादित्यापि[...] अष्टमराशिस्थतया सप्तमराश्यवस्थानाभावात् रोहिणीनक्षत्रयुक्ता पौर्णमासी तुला[...] सौरकार्त्तिके कदापि न भवितुमर्हतीति भावः। एवं वृश्चिकस्थे रवौ सौरमार्गे, धनु[...] रवौ सौरपौषे, मकरस्थे रवौ सौरमाघे च यथाक्रमम् आर्द्रापुष्यामघायुक्ताः पौर्णमा[सी] कदापि न भवितुमर्हन्ति सूर्य्याचन्द्रमसोः षड़ष्टकेनावस्थानात्। एवं कुम्भस्थरव्यादि-[...] फाल्गुनादि-कन्यास्थरविपर्य्यन्तेषु सौराश्विनपर्य्यन्तेषु यथाक्रमं हस्तस्वात्यनुराधामूलो[...]

तदुक्तम् ।

लब्धात्मिका सती रूढ़िर्भवेद्योगापहारिणी ।
कल्पनीया तु लभते नात्मानं योगबाधतः* ॥

अतएव प्रोक्षणीशब्दस्य यौगिकत्वमङ्गीकृतं न रूढ़िः†। अत्रोच्यते।

---

भाद्रपदभरणीनक्षत्रयुक्ताः पौर्णमास्यः कदापि न भवितुमर्हन्तीत्यर्थः । अन्योन्यं परस्परम् उभयोः सूर्य्याचन्द्रमसोः तत्सम्पत्तेः पौर्णमासीसम्पन्नेः । तस्मात् नक्षत्रेण युक्तः काल इत्यादि-पाणिनिसूत्रानुसारात् चान्द्र एव शुक्लप्रतिपदादिदर्शान्तरूपमुख्यचान्द्र एव न सौरादौ योगसम्भवात् मघादिनक्षत्रयुक्तपौर्णमासीयोगसम्भवात् तद्वाचकत्वमेव मुख्यचान्द्रवाचकत्वमेव माघादिपदानां माघादिशब्दानामित्यर्थः ।

* रूढ़िः रूढ़िशक्तिः योगं योगार्थम् अपहरति अस्य न्यायस्यायं योगरूढ़िविषयो पु[न]र्नेत्यर्थः कुत इयत आह क्लृप्तरूढ़िविषयत्वात् शुद्धरूढ़िविषयत्वादित्यर्थः लब्धात्मिका प्र[सि]सती रूढ़िरिति रूढ़िशक्तिः लब्धात्मिका सती लौकिकालौकिकप्रयोगबाहुल्येन सुप्रसिद्धा च [स]ती योगापहारिणी भवेदित्यर्थः यथा लौकिकालौकिकप्रयोगबाहुल्येन तृणादिनिर्म्मित-विश[ि]ष्टगृहशक्तस्य मण्डपपदस्य रूढ़िशक्त्या मण्डपानकर्तृत्वरूपयोगार्थस्यापहारकत्वम् । कल्प-वार[क]नीया शक्तिस्तु योगं बाधित्वा आत्मानं स्वरूपं न लभते । तथाच योगार्थसहकारित्वेन मात्र[श]क्त्या योगरूढ्यर्थमाविष्करोति । यथा पङ्कजपदं कुमुदादौ पङ्कयोनिकर्तृत्वरूपयोगार्थ-[सत्]त्वेऽपि न तत्र शक्तिं बोधयति ।

† परन्तु तादृशयोगार्थसहकारित्वेन पद्मत्वावच्छिन्न एव शक्तिं बोधयति अतएवेति । दर्शि[त]त एव न्यायक्लृप्तरूढ़िविषयत्वम् अतएवेत्यर्थः । प्रोक्षणीशब्दस्य यौगिकत्वं योगार्थमात्र-यो[ग]ङ्गीकृतं न रूढ़िः न रूढ्यर्थः तदेव प्रकटीकरोति अधिकरणमालायां नवमाधिकरण-[मु]पारचयति । प्रोक्षणी: संस्कृतिर्जातिर्योगी वा सर्व्वभूमिषु । तथोक्तिः संस्कृतिर्जातिः स्याद्रूढ़ेः प्रबलत्वतः । अन्योन्याश्रयतो नाद्यो न जातिः कल्प्यशक्तितः । योगः स्यात् क्लृप्तशक्तित्वात् क्लृप्तिर्व्याकरणाद्भवेत् । दर्शपौर्णमासयोः श्रूयते । प्रोक्षणीरासादयेति । तत्र प्रोक्षणीशब्दस्याभिमन्त्रणासादनादिसंस्कृतिः प्रवृत्तिनिमित्तं कुतः सर्व्वेषु वैदिकप्रयोग-

प्रष्टव्योऽत्रभवान् योगवादी किममी* पाठकादिवद्योगानुसारिप्रयोगा माघादिशब्दाः। यत्र यत्र योगस्तत्र तत्र प्रवर्त्तन्ते†। पङ्कजादिवद्वा योगानुसारियोगव्यवस्थिते प्रयोगे तत्र योगसद्भावाद्यौगिकाः‡। अत्र न तावदाद्यः कल्पः§ निरात्रपञ्चरात्रदशरात्राद्यवच्छिन्नेषु कालेषु सत्यपि तन्नक्षत्रान्वितपौर्णमासीयोगे

---

प्रदेशेषु संस्कृतानामेवापां प्रोक्षणीशब्देनोच्यमानत्वादित्येकः पक्षः लोके जलक्रीड़ायां प्रोक्षणीभिरुद्वेजिताः स्म इत्यसंस्कृतास्वपि प्रयोगादर्हिरादिशब्दवज्जातौ रूढ़त्वात् उदकत्वजातिः प्रवृत्तिनिमित्तं। न च प्रकर्षेणोक्ष्यत आभिरिति योगोऽत्र शङ्कनीयः। रूढ़ेः प्रबलत्वादिति पक्षान्तरं तत्र न तावत् संस्कारो युक्तः अन्योन्याश्रयत्वात् विहितेष्वभिमन्त्रणादिषु संस्कारेष्वनुष्ठितेषु पश्चात् संस्कृतास्वपि प्रोक्षणीशब्दप्रवृत्तिः तत्प्रवृत्तौ सत्यां प्रोक्षणीशब्देनापोऽनुद्याभिमन्त्रणादिविधिरिति नापि जातिपक्षो युक्तः उदकजातौ प्रोक्षणीशब्दस्य वृद्धव्यवहारे पूर्व्वमक्लृप्तत्वेन इतः परं शक्तेः कल्पनीयत्वात् ततो गोशब्दवदश्वकर्णादिशब्दवच्च रूढ़ो न भवति योगस्तु व्याकरणेन क्लृप्तः सोपसर्गाद्धातोः करणे ल्युट्प्रत्ययेन व्युत्पादनात् तस्मात् प्रोक्षणीशब्दो यौगिकः घृतादेः प्रोक्षणं प्रयोजनम्।

* अत्र प्रकारद्वयेन पृच्छति किममी इत्यादि। अमी माघादिशब्दाः।

† अत्र दृष्टान्तमाह पाठकादिशब्दवदिति। पठति पाठकः पचति पाचक इत्यादिशब्दो यथा यौगिकः तद्वत् किम् अमी माघादिशब्दाः प्रयोगानुसारेण प्रयुज्यन्ते योगानुसारिप्रयोगः केवलयौगिक एवश्चेत् यत्र यत्र योगः सम्भवति तत्र तत्र वर्त्तन्ते यौगिकशब्दा इति शेषः।

‡ पङ्कजादिवद्वेति। वाकारोऽयं पक्षान्तरद्योतनार्थम्। तथाच यथा पङ्कजादिशब्दाः योगानुसारियोगव्यवस्थिते प्रयोगे योगानुसारेण योगार्थसहायेन रूढ्यर्थान्विते योगसद्भावात् योगार्थसहकृते रूढ्यर्थसद्भावात् यौगिका योगरूढ़िका इत्यर्थः। यौगिकत्वेन योगरूढ़िकत्वेन च कल्पद्वयी व्यवस्थिते।

§ प्रथमकल्पं दूषयति अत्र न तावदाद्यः कल्पः इति माघशब्दो न यौगिक इत्यर्थः।

माघादिपदप्रयोगादर्शनात्*। अतएव सास्मिन्निति सूत्रे जयादित्येन मासार्द्धमाससंवत्सराणामेषा संज्ञेत्यभिधायोदाहृतम्। पौषो मासः पौषोऽर्द्धमासः पौषः संवत्सर इति इह न भवति। पौषी पौर्णमासी अस्मिन् दशरात्र इति। भृतकमासे च न भवतीत्युक्तम्। भृतकमासः सावनं भृतिगणनार्थत्वात्। सावननिषेधाच्चान्द्रसौरयोः प्रयोगोऽभ्यनुज्ञातः†। अथ द्वितीयः सञ्ज्ञायामिति प्रसिद्ध्युपसंग्रहात् यत्रास्य प्रयोगस्तत्र योगो निमित्तं

---

* अत्र हेतुं दर्शयति त्रिरात्रपञ्चरात्रदशरात्राद्यवच्छिन्नेष्वित्यादि। कालेषु खण्डकालेषु तत्तन्नक्षत्रान्वितपौर्णमासीयोगे मघादिनक्षत्रान्वितपौर्णमासीयोगे सत्यपि माघादिपदप्रयोगादर्शनादिति। तथाहि यत्र यत्र योगः तत्र तत्र यौगिका इत्युक्तेः त्रिरात्रादिरूपखण्डकालेषु मघादियुक्तपौर्णमासीयोगसत्त्वेऽपि माघः त्रिरात्रः माघः पञ्चरात्र इत्यादि प्रयोगदर्शनाभावात्। न माघादिपदानां यौगिकत्वं। अत एव त्रिरात्रादिखण्डकालेषु माससंज्ञकनक्षत्रयोगसत्त्वेऽपि न माघादिसंज्ञा।

† अतएवेत्यर्थः जयादित्येन पाणिनिविवृतिकारेण सास्मिन्निति सूत्रे। इह न भवति इत्यत्रोदाहरणद्वयं स्पष्टयति पौषीत्यादि। पुष्ययुक्ता पौर्णमासी पौषी अस्मिन् दशरात्रे इत्यत्र पौषादिसंज्ञा न भवति एवं भृतकमासे च सावनमासे च पौषादिसंज्ञा न भवति इत्युक्तम् इति जयादित्येनेति पूर्व्वेण सम्बन्धः। भृतिगणनार्थत्वादिति। भृतिः कर्म्मवेतनं तस्य गणना संख्यया स्थिरीकरणं एकमासकर्म्मकरणे इयत्संख्यकमुद्रा प्राप्या एवंरूपा सा एव अर्थः प्रयोजनं यस्य तद्रूपत्वात् मासेन यास्यति मासेनायास्यति इति नियमेन सावनमासस्य वेतनप्रयोजकत्वादित्यर्थः। सावननिषेधात् सावनमासस्य पौषमाघादिसंज्ञानिषेधात्। प्रयोगः पौषमाघादित्वेन प्रयोगः अभ्यनुज्ञातः स्वीकृतः।

मासादिषु चास्य प्रयोगो* न दशरात्रिष्विति†। नैतत् सावने मासि सत्यपि योगे प्रयोगादर्शनाच्चान्द्र एव चेन्न‡ द्वितीया-तृतीयाद्यारब्धेषु पूर्व्वतिथिसमापनीयेषु चान्द्रेष्व§ प्रयोगात्। प्रतिपदादिदर्शान्त एव मासीति चेत् नैतत्। मघादिनक्षत्रयोगा-

---

* अथ द्वितीय: संज्ञायामिति। द्वितीयसूत्रमित्यर्थ:। इति इत्यनेन संज्ञायामिति पाणिनिद्वितीयसूत्रेण प्रसिद्ध्युपसंग्रहात् प्रसिद्धेरमरादिकोषप्रसिद्धेरुपसंग्रहात् ग्रहणात् यत्र चान्द्रे मासि अस्य पौषमाघादे: प्रयोग: तत्र तत्रैव योग: पुष्यादियुक्तपौर्णमासीयोग निमित्तं मासादिषु च मासार्द्धमासवत्सरेष्वेव चोऽवधारणे अस्य पौषमाघादे: प्रयोग पौषमाघादिपदप्रयोग इत्यर्थ:।

† अत्र चकारस्यावधारणार्थत्वात् स्वयं व्यावृत्तिं दर्शयति न दशरात्रादिष्विति। आदिना त्रिरात्रपञ्चरात्रादिपरिग्रह:।

‡ पुष्यमघादियुक्तपौर्णमासीयोगे यौगिकं पौषमाघादिपदमिति आद्यकल्पं दूषयित्वा तादृशपौर्णमासीयोगे योगरूढिकं पौषमाघादिपदमिति द्वितीयकल्पं दूषयितुं विचारमवतारयति नैतदिति। सत्यपि योगे पुष्यादियुक्तपौर्णमासीयोगे प्रयोगादर्शना[त्] सावने पौषमाघादिरूपसंज्ञाया अभावात् चान्द्र एव चान्द्रमास्येव तत् पौषमाघादिसंज्ञा इति चेन्नेति चान्द्रमासो त्रिविध: पूर्व्वतिथिसमाप्यत्रिंशत्तिथिसाधारणतिथिचान्द्र: एक अपरश्च शुक्लप्रतिपदादिदर्शान्तो मुख्यचान्द्र: कृष्णप्रतिपदादिपौर्णमास्यन्तगौणचान्द्रश्च तत्र तिथिचान्द्रपक्षं दूषयति चेन्नेति।

§ तिथिचान्द्र: क: तदेव स्पष्टयति द्वितीयातृतीयाद्यारब्धेषु इत्यादि। तथा[हि] शुक्लप्रतिपत्समापनीय: त्रिंशत्तिथ्यात्मकस्तिथिचान्द्र: एवं शुक्लतृतीयाद्यारब्ध: शुक्लद्वितीया[दि]समापनीयत्रिंशत्तिथ्यात्मकतिथिचान्द्र:। तथाच ज्योतिर्वचनम्—

एका तिथि: कापि तदादिभूता तिथिस्तृतीयेऽपि तिथिप्रबन्ध:।
मास: स चान्द्रस्तिथिनाम्नि यस्माच्चान्द्रीं कलां प्राप्य सदा प्रवृत्त:॥

अस्यार्थ:। कापि एका शुक्लद्वितीया तदादिभूता या तिथि: सा यदि तृतीय[ा]वारत्रयं गणनप्रतियोगिनी भवेत् तथाहि एका शुक्लद्वितीया तदादिभूतत्वेन प्रथमं गणनाया

भावे अश्लेषादिनक्षत्रयुक्तपौर्णमासीसम्बन्धेऽपि दर्शान्ते मासि माघादिपदप्रयोगदर्शनात् यौगिकत्वानुपपत्तेः* ।

अथ ।

> अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः ।
> शेषा मासा द्विभा ज्ञेयाः कार्त्तिकादिव्यवस्थया ।

अत्र कृत्तिकादिव्यवस्थयेत्यभिधानात् । कृत्तिकाद्या द्विभा मासा इति† सम्भ्रमपाठात् कार्त्तिकोपक्रमगणनेनान्त्य आश्विनः

---

प्राप्ता प्रतिपत् ततो द्वितीया तृतीयाचतुर्थ्यादिक्रमेण गणनया कृष्णपक्षीयप्रतिपदपि पञ्चदशत्वेन प्राप्ता भवति ततः कृष्णद्वितीयादिक्रमेण गणनया शुक्लप्रतिपदपि त्रिंशत्तिथित्वेन पुनः प्राप्ता। ततश्च शुक्लद्वितीयादिक्रमेण गणनायां प्रतिपत् आदिभूततिथित्वेन एकवारं प्राप्ता पुनर्द्वितीयात्तृतीयादिक्रमेण गणनया पञ्चदशतिथिपूरणीभूतत्वेन कृष्णपक्षीयत्वेन च प्रतिपदपि पुनः प्राप्ता अतो वारद्वयं प्राप्ता भवति पुनरपि कृष्णद्वितीयादिक्रमेण त्रिंशत्तिथिपूरणीभूतत्वेन मासान्तत्वेन च गणनप्रतियोगितया शुक्लप्रतिपदपि प्राप्ता एवंरीत्या वारत्रयगणनप्रतियोगितया शुक्लद्वितीयादिशुक्लप्रतिपदन्तस्त्रिंशत्तिथ्यात्मक एकत्रितिथिचान्द्रमास[illegible] भवति इति वर्त्तुलार्थः ।

* तादृशतिथिचान्द्रमासोऽत्र न गृह्यते तत्र हेतुमाह अप्रयोगादिति । द्वितीयाद्यारब्ध[illegible]प्रतिपदादिसमापनीयेषु त्रिंशत्तिथ्यात्मकतिथिचान्द्रेषु पौषमाघाद्यप्रयोगात् प्रतिपदादिदर्श[illegible]न्त एव मासि चेत् शुक्लप्रतिपदादिदर्शान्तरूपमुख्यचान्द्रमासि माघादिपदप्रयोगसम्भवात् योग[illegible]रूढित्वसम्भवमिति चेन्न मघादिनक्षत्रयोगाभावे इत्यादि यौगिकत्वानुपपत्तेः । यौ[illegible]रूढित्वानुपपत्तेरित्यर्थः ।

[illegible] † कृत्तिकादिव्यवस्थया इत्यभिधानादिति । शेषा मासाः अन्त्योपान्तफाल्गुन[illegible]ताः मासाः द्विभा इत्यन्वयः कृत्तिकादिव्यवस्थया ततश्च कार्त्तिकाद्या कार्त्तिकादि[illegible]न्ताः चैत्रादिश्रावणान्ताश्च मासा द्विभा इत्याद्यभिधानात् कृत्तिकारोहिण्यन्यतरनक्षत्र-

त्रिभो रेवत्यश्विनीभरणीनामन्यतमयुक्तपौर्णमासीयोगात् उपान्त्यो भाद्रः* शतभिषापूर्व्वोत्तरभाद्रपदाभिः फाल्गुनश्च त्रिभः पूर्व्वोत्तरफाल्गुनीहस्तैः। इतरे तु कार्त्तिकादयः कृत्तिकादिनक्षत्रद्विकयोगेन† प्रत्येतव्याः तेन‡ कृत्तिकारोहिणीभ्यां कार्त्तिकः। मृगशीर्षार्द्राभ्यां मार्गशीर्षः। पुनर्वसुपुष्याभ्यां पौषः। अश्लेषामघाभ्यां माघः। चित्रास्वातीभ्यां चैत्रः। विशाखानुराधाभ्यां वैशाखः। ज्येष्ठामूलाभ्यां ज्यैष्ठः। पूर्व्वोत्तराषाढ़ाभ्याम् आषाढ़ः।

---

युक्तपौर्णमासीयोगे कार्त्तिको मासो भवति। एवं मृगशिरआर्द्रान्यतरनक्षत्रयुक्तपौर्णमा[सी]योगे मार्गशीर्षो मासो भवति एवं पुनर्व्वसुपुष्याद्यन्यतरनक्षत्रयुक्तपौर्णमासीयोगे पौषाद[यो] मासाः द्विभा भवन्ति।

* सम्भ्रमपाठादिति। सम्भ्रमेण घूर्णनेन प्रतिलोमक्रमेण इति यावत् पाठात् पठि[त]त्वात् तदेव व्याकरोति कार्त्तिकोपक्रमगणनेति। कृत्तिकादिव्यवस्थया इत्युपक्रमेणोक्ता[त्]... कृत्तिकादिनक्षत्रयुक्तपौर्णमासीयोगघटितत्वेन कार्त्तिकोपक्रमगणनासिद्धिः ततश्च का[र्त्ति]कोत्तरः मार्गशीर्षः तदुत्तरः पौषः। तदुत्तरो माघ इत्याद्युपक्रमेण गणनया आश्विनो [अन्त्यो] भवति भाद्रश्च उपान्त्यो भवति अन्त्यसमीपस्थितत्वात् एष एव सम्भ्रमपाठः। आश्विनो[त्तर]कार्त्तिकस्तु साहजिकः पाठः न तु सम्भ्रमपाठः। अन्त्य आश्विनः त्रिभो रेवत्यश्विनीभ[रणी]नामन्यतमयुक्तपौर्णमासीयोगात् भवतीत्यर्थः। उपान्त्यो भाद्रश्च।

† शतभिषापूर्व्वोत्तरभाद्रपदाभिरिति। शतभिषापूर्व्वोत्तरभाद्रपदाभिर्नक्षत्रै[र्युक्त]पौर्णमासीयोगात् त्रिभो भवतीत्यर्थः। फाल्गुनश्च त्रिभः पूर्व्वोत्तरफाल्गुनीहस्तैरिति [पूर्व]फाल्गुन्युत्तरफाल्गुनीहस्तनक्षत्रयुक्तपौर्णमासीयोगात् फाल्गुनोऽपि त्रिभो भवतीत्य[र्थः]। कृत्तिकादिनक्षत्रद्विकयोगेनेति। कृत्तिकादिद्विकद्विकनक्षत्रयुक्तपौर्णमासीयोगेनेत्यर्थः।

‡ उपसंहरति तेनेति। तेन द्विभत्रिभान्यतरान्यतमनक्षत्रयुक्तपौर्णमासीयं[योगे]न कार्त्तिकादिमासविधानेन।

श्रवणाधनिष्ठाभ्यां श्रावणः । तेन रोहिणीयुक्तापि* पौर्णमासी कार्त्तिकी भवति । तद्योगान्मासः कार्त्तिकः । एवम् आर्द्रायोगान्मार्गशीर्षः । पुनर्वसुना पौषः । अश्लेषेण माघः । हस्तेन फाल्गुनः । स्वात्या चैत्रः । अनुराधेन वैशाखः । मूलेन ज्यैष्ठः । धनिष्ठया श्रावणः । शतभिषेण भाद्रः । रेवतीभरणीभ्यामाश्विन इति कथं न यौगिकः† । नैतत् विद्विषामस्य वादस्य हास्यास्पदत्वात् । रोहिणीपदाद्धि नक्षत्रेण युक्तः काल इति विहितेनाण्प्रत्ययेन रौहिणी पौर्णमासी भवति रौहिणीपदाच्च सास्मिन् पौर्णमासीति संज्ञायामित्यणन्तरेण रौहिणपदनिष्पत्तेः रौहिणः मासः स्यान्नतु कार्त्तिकः‡ । एवमार्द्रायोगादार्द्रो मासः । इत्यादयः भवेयुः । अतो रोहिण्यादियोगात् कार्त्तिकादिपदानि यौगिकानीति वदतां महार्घे

---

* रोहिणीयुक्तापीति । अपिः भिन्नक्रमेण तेन न केवलं कृत्तिकानक्षत्रयुक्तपौर्णमासी कार्त्तिकी रोहिणीयुक्तापीत्यर्थः ।

† कथं न यौगिक इति । कृत्तिकादिव्यवस्थया शेषा मासाः कार्त्तिकादिमासा विभा[illegible] इति वचनोपदिष्टत्वात् इति शेषः ।

‡ दूषयति नैतदिति । विद्विषां विवादिनाम् अस्य वादस्य वदै व्यक्तायां वाचि इति [illegible]धात्वनुसारेण निष्पन्नत्वात् कृत्तिकानक्षत्राभावे रोहिणीनक्षत्रयुक्तपौर्णमासीयोगी रौहि[illegible]णोऽयमिति वक्तव्ये कार्त्तिकोऽयमिति कथनस्य हास्यास्पदत्वात् अयोग्यत्वेन उपहसनी[illegible]यत्वादित्यर्थः । रोहिणीपदात् रोहिणीपदोत्तरं नक्षत्रेण युक्तः काल इति सूत्रेण [illegible]अण्प्रत्ययात् रौहिणीनक्षत्रयुक्तपौर्णमासी रौहिणी भवति । संज्ञायामिति द्वितीयसूत्रेण [illegible] रौहिणीपदोत्तरम् अपराण्प्रत्ययेन मासो रौहिणो भवेदित्यर्थः । न तु कार्त्तिकः अनेन [illegible]स्य योगरूढ़त्वं व्याहन्यते इति भावः ।

लोकान् संवर्द्धयति। (१) कलम्बीत्यन्वयोह्यूहः कृतः पुरस्कृत एव स्यात्*। अथोच्यते। मासानां द्विभत्त्रिभत्वप्रतिपादनं ताव-द्दृश्यते तस्य चैतदेव प्रयोजनम्। यत् कृत्तिकारोहिण्यन्यतर-युक्तपौर्णमासीति योगात् कार्त्तिकपदं यौगिकं भवतु। एव-मितरेष्वपि। कथं चैतत् स्यात्† यदि कृत्तिकादयो रोहिण्या-दिकमपि लक्षयन्ति तेन कृत्तिकारोहिण्योरन्यतरयोगेन कार्त्तिकपदं यौगिकं एवमन्यान्यपीति तदयुक्तं नहि द्विभत्त्रिभत्व-वचनं रोहिण्यादियोगेऽपि कार्त्तिकादयो यौगिका इत्याह न च पौर्णमास्या द्विभत्वादिकं किन्तु मासानामेव न च पाणिनिरपि रोहिण्यादियोगेऽपि कार्त्तिकादिपदानि पौर्णमासीषु अयोगच्च कार्त्तिकादिमासेषु कार्त्तिकादिपदानि यौगिकानीति आह‡।

(१) कलम्बीत्यन्वयो हि दृढ़ीकृत्य पुरस्कृत एव स्यादिति क्वचिदादर्शपुस्तके पाठः

* अस्य हास्यास्पदत्वं व्याकरोति यौगिकानीति वदतामित्यादि। महार्घे तृतीयार्थे सप्तमी महामूल्यत्वेनेत्यर्थः। कलम्बी शाकविशेषः तथाच कृत्तिकायो रोहिणीनक्षत्रयोगे रौहिणोऽयं मास इति वक्तव्ये कार्त्तिकोऽयं मास इति निकृष्टापि कलम्बी महामूल्यत्वेन यथा लोकान् संवर्द्धयति इत्यन्वयो हि दृढ़ीकृत्य पु स्यात् इति क्वचिदादर्शे पाठः। ऊहः कृतः पुरस्कृतः स्यात् ऊह वितर्कं वितर्कीकृ पुरस्कृतः स्यात्।

† तस्य द्विभत्वत्रिभत्वप्रतिपादनस्य प्रयोजनं दर्शयति यत् कृत्तिकारोहिण्य त्यादि। यौगिकं भवतु योगरूढ़िकं भवतु। एवमितरेष्वपि मार्गशीर्षादिष्वपि एतत् स्यात् केन प्रकारेण एतत् रोहिण्यादियोगे कार्त्तिकादिपदं योगरूढ़िकं स्यात्।

‡ प्रकारं दर्शयति यदीत्यादि। लक्षयन्ति कृत्तिकानक्षत्रयुक्तपौर्णमासी कृत्तिकापदं लक्षणया यदि कृत्तिकारोहिण्योरन्यतरार्थं भवति इत्यर्थः। तेन का

न चाभिधीयमानमपि प्रमाणान्तरविरोधेन ग्रहणार्हं न च प्रकृतिपदस्य मुख्यलाक्षणिकवृत्त्याश्रयणेन यौगिकत्वं क्वचिदपि व्युत्पन्नं यदि चैवं स्याद्रथकारपदस्यापि रथमकुर्व्वत्यपि सौधन्वनजातीये रथकरणार्हतालक्षणया तदन्यलक्षणया वा यौगिकत्वात् त्रैवर्णिकेऽपि तत्सम्भवाद्वर्षासु रथकार आदधीतेत्यत्र त्रैवर्णिकाधिकारी दुर्वारः स्यात्* । एवं गच्छतीति गौरिति व्युत्पत्तौ गमन-

---

कृत्तिकापद`ग कृत्तिकारोहिण्यन्यतरार्थकत्वेन यौगिकं योगरूढ़िकं एवमन्यान्यपि मार्गशीर्षादिपदानि इत्यर्थः । नहि द्विभत्रिभत्ववचनमित्यनेन आहेत्यस्य सम्बन्धः इत्याह बोधयति वचनस्य कथनासम्भवात् । न च पौर्णमास्या द्विभत्वादिकं किन्तु मासानामेवमिति तथाच रोहिणीयुक्तपौर्णमासीपक्षे कृत्तिकायोगाभावात् कार्त्तिकपदस्य योगरूढ़ित्वाभावेऽपि मासानां द्विभत्वादिविशेषणत्वे शुक्लप्रतिपदादिदर्शान्तस्य मुख्यचान्द्रमासस्य त्रिंशत्तिथिसमुदायात्मकतया कदाचिदपि तत्र कृत्तिकाविरहस्यासम्भवात् रोहिणीनक्षत्रयुक्तपौर्णमासीपक्षेऽपि त्रिंशत्तिथ्यात्मकमुख्यचान्द्रमासमध्ये कृत्तिकायोगस्यावश्यम्भावात् कार्त्तिकत्वसिद्धौ कदापि योगरूढ़ित्वव्याघात इति भावः । ननु यद्यपि कार्त्तिकादिसंज्ञायां योगरूढ़िल-सिद्धौ मासानामेव द्विभत्वादिविशेषणदाने दूषणान्तरं न दर्शितं तथापि मासानां द्विभत्वादिनिवेशे कृत्तिकानक्षत्रयुक्तमासः कार्त्तिकः एवं मृगशिरोनक्षत्रादियुक्तमासः मार्गशीर्षादिरपि भवितुमर्हति परन्तु द्वादशमासेषु कृत्तिकायोगसम्भवात् द्वादशमासाः कार्त्तिकाः स्यात् एवं मृगशिरोनक्षत्रादियोगसम्भवात् द्वादशमासा अपि मार्गशीर्षादिरपि स्यात् इत्युक्तदोषश्चात्र द्रष्टव्यः । न च पाणिनिरपीत्याह अनेनास्यान्वयः तथाच रोहिण्यादियोगेऽपि पौर्णमास्यां रोहिण्यादियोगेऽपि पौर्णमासीषु तद्योगात् रोहिण्यादियोगात् कार्त्तिकादिपदानि च कार्त्तिकादिमासेषु न च यौगिकानि पाणिनिरपि इत्याह ।

* न चाभिधीयमानमपीति । पौर्णमासीषु कृत्तिकादियोगाभावेऽपि रोहिण्यादियोगे कार्त्तिकादिमासेषु योगरूढ़ित्वं विधीयमानमपि प्रमाणान्तरविरोधेन मुख्यार्थबाधक-

गौणार्थग्राहकप्रमाणान्तरं विना ग्रहणार्हं ग्राह्यं न च इत्यर्थः। न च प्रकृतिपदस्येति स्वार्थाद्यर्थबोधकलिङ्गरूपकृत्तिकादिपदस्य प्रकृतिरुक्ता शब्दशक्तिप्रकाशिकायां यथा—

स्वेतरार्थानवच्छिन्ना यत् स्वार्थस्यावबोधने।
यच्छब्दनिश्चयो हेतुः प्रकृतिः सा तदर्थिका॥

अस्यार्थः। स्वेतरशब्दार्थविशेषितस्य यादृशस्वार्थस्य अन्वयबोधं प्रति स्वाव्यवहितोत्तरत्वसंसर्गेण यादृशशब्दवत्ताया निश्चय एव हेतुः तादृशस्तथाविधार्थे प्रकृतिरित्यर्थः। तथाच यदा कृत्तिकादियोगस्तदा मुख्यया वृत्त्या यदा रोहिणीयोगस्तदा लक्षणया वृत्त्या इत्यर्थः। मुख्यलाक्षणिकवृत्त्याश्रयणेन शक्तिलक्षणान्यतराश्रयणेन यौगिकत्वं योगरूढ़त्वं क्वचिदपि व्युत्पन्नं स्वीकृतं न चेत्यर्थः यदि चैवं स्यात् क्वचिच्छक्त्या क्वचिल्लक्षणया योगरूढ़त्वमङ्गीकृतञ्चेदित्यर्थः रथकारपदस्य वर्षासु रथकार आदधीत इत्यत्र रथकारपदस्य रथमकुर्व्वति रथकरणानुकूलकृतिविरहेऽपि सौधन्वनजातीये सुधन्वाचार्य्यसङ्करजातीये।

तथाच मनुः।

वैश्यात्तु जायते व्रात्यात् सुधन्वाचार्य्य एव च।
कारुषश्च विजन्मा च मैत्रः स्वात्वत एव च॥

अत्र कुल्लुकभट्टः। वैश्यात् पुनर्व्रात्यात् सवर्णायां सुधन्वाचार्य्यकारुषविजन्ममैत्रस्वा[illegible] ताख्या जायन्ते एकस्य चैतान्यपि नामानि तथा रथकारपदस्य लक्षणया रथमकुर्व्वत्य[illegible] सौधन्वनजातीये रथकरणार्हता दुर्व्वारः स्यात् इत्येकवाक्यार्थः तदन्यलक्षणया वा तदन्यसि[illegible] सौधन्वजातिभिन्ने रथकारपदस्य लक्षणया वा यौगिकत्वात् योगरूढ़त्वात् त्रैवर्णिकेऽ[illegible] ब्राह्मणादिवर्णत्रयेऽपि तत्सम्भवात् लक्षणया योगरूढ़त्वसम्भवात् वर्षासु रथकार आदधी[illegible] इत्यत्र वर्षाकालीनरथकारकर्तृकत्वेन विहिताधानकर्म्मणि त्रैवर्णिकाधिकारः ब्राह्मण[illegible] क्षत्रियवैश्याधिकारोऽपि दुर्व्वारः स्यादित्यपरो वाक्यार्थः। तथाच कात्यायनीयश्रौतसू[illegible] व्याख्याने शबरस्वामिमतानुसारिकर्काचार्य्ययाज्ञिकदेवः। रथकारस्याधाने अग्न्याधेयकर्म्मणि[illegible] अधिकारी भवति वर्षासु रथकार आदधीत इति श्रुतेः। अत्रेदं सन्दिह्यते। कि[illegible] त्रैवर्णिकानामन्यतमो रथकरणयोगात् रथकारः आहोस्वित् नियतं किञ्चिज्जात्यन्तरमिति[illegible] किन्तावत् प्राप्तं त्रैवर्णिकानामन्यतम एवेति कुतः सोऽपि हि रथं करोतीति योगा[illegible]

रथकार इत्युच्यते तस्य च त्रैवर्णिकत्वादाधानं प्राप्तमेव ऋतुमात्रं विधेयं तथा सत्येकार्थ-विधानाद्वाक्यभेदो न भवति लाघवञ्च जात्यन्तरपक्षे तस्याधानं विधातव्यं ऋतुसम्बन्धश्च तथा सति वर्षास्वादधीत रथकार आदधीतेत्येवं वाक्यभेदः स्यात् । अपिच शूद्रस्त्वसामर्थ्यात् प्रतिषिद्धः तस्मात् त्रैवर्णिकानामन्यतम एवेति पूर्व्वपक्षः ।

सिद्धान्तमाह नियतश्चेति । चो वार्थे वाशब्दश्च पूर्व्वपक्षनिरासार्थः । न त्रैवर्णिको रथकारः तस्य शिल्पोपजीवनस्य प्रसिद्धत्वात् किन्तु नियतं जात्यन्तरमेव तच्च केचिदेव-माहुः वैश्यायां क्षत्रियादुत्पन्नो माहिष्यः शूद्रायां वैश्यादुत्पन्ना करणी तस्यां करण्यां माहिष्यादुत्पन्नो रथकार इति । तदुक्तं स्मृतौ । "माहिष्योग्रौ प्रजायेते विट्शूद्राङ्गनयो-र्नृपात् । शूद्रायां करणो वैश्याद्विति ।"

याज्ञवल्क्योऽपि ।

वैश्याशूद्र्योस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।

वैश्यायां करणः शूद्रात् विन्नास्वेष विधिः स्मृतः ॥

विन्नासु विधिना परिणीतासु ।

तथा ।

"माहिष्येन करण्यान्तु रथकारः प्रजायते" इति ।

अतो रथकारशब्द एवंविधसङ्करजातौ रूढः रूढिश्च योगाद्बलीयसीति न्यायात् रथं तेतीति योगं बाधित्वा जात्यन्तरमेव रथकारशब्देनोच्यते । तस्येदमाधानं कालविशिष्टं विधीयते विशिष्टविधानाच्च वाक्यभेदोऽपि न भवति । अपरे त्वाहुः रथकारशब्देनात्र सौधन्वनानां ग्रहणम् ऋभूनां त्वित्याधानमन्त्रवर्णनात् । सौधन्वनाश्च ऋभवः । सौधन्वना ऋभव इति ऋक्संहिता सामानाधिकरण्यनिर्देशात् ।

तथा चाह मनुः ।

व्रात्यात् तु जायते वैश्यात् सुधन्वाचार्य्य एव च ।

कारुषश्च विजन्मा च मैत्रः स्वात्वत एव च ॥ इति ।

अतो मनूक्तो यः सुधन्वा व्रात्यवैश्यपुत्रः तत्पुत्राणां सौधन्वनानामृभूनामेवात्राधिकारः यस्तु याज्ञवल्क्येनोक्तो न तस्याधिकारः सत्यपि रथकारशब्दवाच्यत्वे मन्त्रवर्णनाच्छागन्यायेन

मगमनमपि लक्षयतीति गच्छत्यगच्छत्यपि यौगिकत्वं स्यात्* । एवं प्रासादपदमपि प्रक्षेपणलक्षणया यौगिकं स्यात् नायौगिकं किञ्चित् स्यात्† । तस्मात् प्रकृतिपदस्य मुख्यानुयोगादेव यौगिकत्वं नान्यथा यत्र तु मुख्यार्थयोगो नास्ति तत्र रूढ़िरेव‡ । किञ्च

---

सौधन्वनानामेवाधिकार इति । तथाच जैमिनिः । सौधन्वनास्तु हीनत्वान्मन्त्रवर्णात् प्रतीयेरन्निति सौधन्वना नाम जातिः हीनास्ति किञ्चित् त्रैवर्णिकेभ्यो जात्यन्तरं न च ते शूद्रा न वैश्या न क्षत्रिया न ब्राह्मणा इति । तेषामिदमाधानं कथं प्रसिद्धिः । मन्त्रवर्णात् मन्त्रवर्णो हि भवति सौधन्वना ऋभव इति ऋभूनां वेति च रथकारस्याधानमन्त्रः । तस्मात् सौधन्वना ऋभवश्च रथकाराः अपि च तं नेमिमृभवो यथेति च ये नेमिं नमन्ति ते ऋभव इत्युच्यन्ते रथकाराश्च नेमिं नमन्ति तस्मादत्रैवर्णिकानामशूद्राणामेतदाधानमिति शबरस्वामिन इत्यादि ।

* एवं गच्छतीति गौरिति व्युत्पत्ताविति । गमेर्डौ इति सूत्रात् गमनार्थे डौप्रत्ययेन गौरिति पदं साधु । अत्र गमनम् अगमनमपि लक्षयति तथाच गच्छति अगच्छत्यपि । अगच्छतीत्यत्र अकारो निषेधार्थः न गच्छतीत्यर्थः । न तु न गच्छति नञ्तत्पुरुषादगच्छति इति मुख्याख्यातेन सह समासासम्भवात् । यौगिकत्वं योगरूढ़िकत्वं स्यात् तथाच गोश्च(?) केवलरूढ़ित्वं सर्व्वमतसिद्धं व्याहन्येत ।

† एवं प्रासादपदमपीति । प्रासादो देवभूभुजामिति कोषात् देवगृहे राजगृहे च रूढ़िः इदं प्रासादपदं यदि प्रक्षेपणलक्षणया योगरूढ़िकं स्यात् तदा सर्व्वलोकसिद्धरूढ़ित्वमस्य व्याहन्यते नायौगिकं किञ्चित् स्यात् इति यदि लक्षणया योगरूढ़ित्वम् अङ्गीक्रियते किञ्चित् किमपि पदं न योगरूढ़िकं सर्व्वमेव पदं योगरूढ़िकं पदस्य रूढ़ित्वं व्याहन्यते ।

‡ उपसंहरति तस्मादिति । प्रकृतिपदस्य लिङ्गपदस्य मुख्यानुयोगादेव मुख्यत्वं शक्त्याश्रयत्वं तथाच शक्तिलभ्ययोगादेव यौगिकत्वं योगरूढ़ित्वं वा नान्यथा न लक्षणया तथाच पौर्णमास्यां कृत्तिकादियोगादेव योगरूढ़ित्वेन कार्त्तिकत्वं मासस्य न पौर्णमास्या रोहिणीयोगे यत्र तु मुख्यानुयोगो नास्ति शब्दशक्त्या योगार्थो न प्रतीयते तत्र रूढ़िरेव लौकिकालौकिकप्रयोगप्राचुर्य्येण शब्दशक्त्या रूढ़ित्वमेव प्रतीयते ।

कृत्तिकादिपदानां रोहिण्यादिलक्षणया यौगिकत्वेऽपि मुख्यकृत्तिकादियोगेन यौगिकत्वस्य शीघ्रमवगमात् कार्त्तिकादिमासविहितं कर्म्म मुख्यनक्षत्रयोग एव व्यवतिष्ठेत* न लाक्षणिकयोगे† मुख्य-

---

* प्रतिवन्धिमाह किञ्चेति । कृत्तिकादिपदानाम् आदिना मृगशीर्षादिमाससंज्ञक-नक्षत्रादिपरिग्रहः रोहिण्यादि इत्यत्र आदिना आर्द्रादिनक्षत्रपरिग्रहः मुख्यकार्त्तिकादि-योगेन कार्त्तिकादिमासघटकमाससंज्ञककृत्तिकानक्षत्रादियोगेन शीघ्रावगमादिति तथाच यत्र मुख्यकृत्तिकानक्षत्रयुक्तः तत्र कृत्तिकानक्षत्रयुक्तपौर्णमासीरूपकार्त्तिकीयोगस्य साक्षा-देवावगतेः कार्त्तिकपदाद्यौगिकत्वस्य शीघ्रप्रतीतिर्भवतीति कार्त्तिकमासविहितं कर्म्म मुख्य-नक्षत्रयोग एव मुख्यत्वं शक्त्याश्रयत्वं तथाच मुख्यमाससंज्ञोपयोगिकृत्तिकादिनक्षत्रयुक्त-पौर्णमासीरूपकार्त्तिकीयोगयुक्तमासेष्वेव व्यवतिष्ठेत विदधीत ।

† न लाक्षणिकयोगे इति । तथाच यत्र तु रोहिणीयोगस्तत्र तु कार्त्तिकपदात् कृत्तिकाप्रतीतौ तत्र कृत्तिकाया अभावात् कृत्तिकापदलक्षणया रोहिणीयुक्तपौर्णमासीरूप-गौणकार्त्तिक्यादियोगे कार्त्तिकपदात् यौगिकत्वप्रतीतेर्विलम्बितत्वात् न तत्र कार्त्तिकमास-विहितं कर्म्म व्यवतिष्ठेत ।

अतएवोक्तम् ।

गौणे सदपि सामर्थ्यं न प्रमाणान्तरं विना ।
आविर्भवति मुख्ये तु शब्दादेवाविरस्ति तत् ॥
तात्पर्य्यञ्च ततो मुख्ये गौणार्थपरता पुनः ।
प्रमाणान्तरविज्ञेया तदभावान्न सिध्यति ॥

अस्यार्थः । गौणे अर्थे गौणार्थविषयकशाब्दबोधे सामर्थ्यं शब्दस्य तादृशशाब्दबोध-निरूपितानुकूलाकाङ्क्षादिमत्त्वं प्रमाणान्तरं विना मुख्यार्थबाधकगौणार्थबोधकप्रमाणं विना नाविर्भवति न गौणार्थबोधोपधानप्रयोजकं भवति मुख्ये तु मुख्यार्थबोधे तु शब्दादेव शब्दा-न्मुख्यार्थोपस्थितादेव एवशब्दात् प्रमाणान्तरापेक्षं व्यवच्छिद्यते । तच्छब्दनिष्ठमुख्यार्थबोध-धायकत्वमाविरस्ति स्फुटीभविष्यति ।

लाक्षणिकयोगनिमित्तयोरतुल्यत्वेन तुल्यवद्विधानानुपपत्तेः* । मुख्यग्रहणे च तस्य नित्यमप्राप्ते(१)†राभाका इत्यादि नित्यवद्विधानं न स्यात्‡ । न च मुख्याभावे लाक्षणिकग्रहणार्थं वचनान्तरम-

(१) नित्यप्राप्तेरिति क्वचिदादर्शे पाठः ।

ननु मुख्यार्थतात्पर्य्यग्रहासत्त्वे कथं शब्दादेव मुख्यार्थबोधः इत्यत आह तात्पर्य्यञ्चेति। औत्सर्गिकमिति शेषः तथाच मुख्यार्थबाधकाभावे तात्पर्य्यग्रहस्य प्रायःसम्भवादिति भावः। गौणार्थपरता गौणार्थतात्पर्य्यं तदभावात् प्रमाणान्तराभावात् न सिद्ध्यति न विषयीभवति । तथाच मुख्यार्थबाध एव गौणार्थतात्पर्य्यकल्पनादिति तात्पर्य्यरूपकारणस्य मुख्यार्थेऽसत्त्वे सामग्रीविरहात् न मुख्यार्थबोधस्तत्रैव प्रमाणान्तरसहकारगणनगौणार्थतात्पर्य्यग्रहाद्गौणार्थ-बोधः । मुख्यार्थबोधे तु न गौणार्थतात्पर्य्यबाधकाद्यपेक्षेति भावः ।

* अत्र हेतुं दर्शयति मुख्यलाक्षणिकेत्यादि । मुख्यकृत्तिकादिनक्षत्रयुक्तपौर्णमासी-रूपमुख्यकार्त्तिकीयोगरूपस्य कृत्तिकापदलक्षणीयरोहिणीनक्षत्रयुक्तपौर्णमासीरूपगौण-कार्त्तिकीयोगरूपस्य च निमित्तयोः अतुल्यत्वेन मुख्यगौणरूपतया तुल्यबलत्वाभावेन । तुल्य-वत् विधानानुपपत्तेरिति मुख्याभावे गौणार्थग्रहणस्य प्रमाणान्तरगम्यतया समविधानत्वा-भावात् ।

† मुख्ययोगमात्रस्य ग्राह्यत्वे पुनः प्रतिबन्दिं दर्शयति मुख्यग्रहणे चेत्यादि । मुख्य-ग्रहणे च मुख्यार्थमात्रग्रहणे च तस्य मुख्यार्थमात्रस्य नित्यप्राप्तिः नियमेन प्राप्तिरित्यर्थः । नित्यमप्राप्तेरिति पाठे तु मुख्यग्रहणे मुख्यार्थमात्रस्य ग्रहणे तस्य च गौणार्थस्य च नित्य-मप्राप्तिः नियतत्वेनानुपस्थितेः इति तु नित्यवद्विधानं न स्यादित्यस्य हेतुः ।

‡ आभाका इत्यादीति । आभाका सितपक्षेषु मैत्रश्रवणरेवती । आदिमध्यावसानेषु प्रस्वापावर्त्तबोधनमिति आभाका सितपक्षेषु शयनावर्त्तनादिकमिति वचनद्वयस्थाना-माभाकापदानाम् आदिना आकामावैष्णवन्तकमिति वचने आकामावैपदानाञ्च प्रसिद्ध-शब्दैकदेशतया तत्तत्पदलक्षणीयानाम् आषाढ़भाद्रकार्त्तिकानाम् आषाढ़कार्त्तिकमाघवैशाख-मासानां च नित्यवद्विधानं न स्यादित्यर्थः ।

स्तीति यौगिकत्वव्युत्पादनमप्यफलं स्यात्*। यदेव कृत्तिकापदस्य लाक्षणिकत्वे दूषणं तदेव कार्त्तिकादिपदस्य रोहिण्यादियुक्तपौर्णमासीमध्यके मासि लाक्षणिकत्वेऽपीति हेयमेवैतत्†। आषाढ़पदमात्रन्तु यौगिकं वक्तुं शक्यते‡ पूर्व्वोत्तराषाढ़योरुभयोरप्याषाढ़त्वात्। किञ्च यदा योगो निमित्तं पदानां तदा किं कृत्स्ननक्षत्रयोगः कृत्स्नपौर्णमास्याः अर्द्धपादादियोगोऽपि वा§। तत्र कृत्स्न-

---

* ननु वचनान्तरादेव लाक्षणिकार्थग्रहणं भविष्यतीति कथमनुपपत्तिरित्याशङ्क्यते न च मुख्याभावे इत्यादि। इतीति इति हेतौ अव्ययानामनेकार्थत्वात् यौगिकत्वव्युत्पादनं योगरूढ़िलकथनम् अल्योपाल इत्यादिवचनेनेति शेषः। तथाहि अल्योपाल; चिभः शेय इति वचनस्यान्यथानुपपत्त्या कल्प्यमानाया लक्षणाया निरूढ़त्वेन शक्तितुल्यतया तत्कल्पनमपि न दूषणावहमिति भावः।

† ननु अगत्या लक्षणास्वीकारेऽपि मुख्ययोगाभावे कृत्तिकापदस्य कार्त्तिकपदस्य च उभयलक्षणास्वीकारे अतीव गौरवम् इत्याशङ्क्य निराकरोति यदेवेत्यादि। रोहिण्यादियुक्तपौर्णमासीमध्यके मासि रोहिण्यादियुक्तपौर्णमासी मध्ये यस्य तादृशे मासि मुख्यचान्द्रमासीत्यर्थः तथाच शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थया इत्यनेन कृत्तिकादिपदस्य रोहिण्यादिलक्षणया कृत्तिकारोहिण्यन्यतरनक्षत्रयुक्तपौर्णमासी कार्त्तिकी तद्योगात् कार्त्तिकः अत्र कृत्तिकापदस्य लक्षणा अथवा रोहिण्यादियुक्तपौर्णमासीमध्ये मासि रौहिणेयमासि लक्षणया कार्त्तिकत्वं हेयमेवैतदिति लक्षणां विना मुनिवचनस्योपपत्त्यभावात् लक्षणादूषणस्याकिञ्चित्करत्वमिति भावः।

‡ लक्षणां विना उपपत्तिं दर्शयति आषाढ़पदमात्रमिति। अत्र मात्रपदेन आषाढ़भिन्नज्यैष्ठादिमासानां सर्व्वदा मुख्ययौगिकत्वव्यवच्छेदः।

§ आषाढ़मात्रस्य मुख्ययौगिकत्वं साधयति पूर्व्वोत्तराषाढ़योरित्यादि। आषाढ़त्वात् आषाढ़पदवाच्यत्वात् तथाच शेषा मासा द्विभा ज्ञेया इत्यनेन पूर्व्वोत्तराषाढ़मात्रस्य द्विभत्वेन तद्युक्तपौर्णमासीयोगात् नवाषाढ़स्य मुख्ययौगिकत्वव्याघात इति भावः। योगनिमित्तं

योगस्तावदनेकवत्सरैरेकस्यां कदाचिदिति न तेनाभाका इत्यादि व्यवहारो नित्यवत् शक्यः। एकदेशयोगे तु मासान्तरीयनक्षत्र-योगस्यावश्यम्भावान्न मूलापूर्व्वाषाढ़योर्योगे स एव चान्द्रो ज्यैष्ठश्चाषाढ़श्चेति स्यात्। उत्तराषाढ़ाश्रवणयोश्च योगे आषाढ़: श्रावणश्चेति स्यात्। एवमितरत्रापि माससङ्करान्न कर्म्मणां व्यवस्थितिः स्यात्*। अल्पयोगेनापि यौगिकत्वात् भूयोऽवयवयोगा-

---

योगः तत्तन्नक्षत्रयुक्तपौर्णमासीयोगः कृत्स्ननक्षत्रयोगः पूर्णनक्षत्रयोगः सम्पूर्णपौर्णमास्यां सम्पूर्णत्वं षष्टिदण्डव्यापित्वम्।

यथा स्कान्दपुराणम्।

प्रतिपत्प्रभृतयः सर्व्वा उदयादोदयाद्रवेः।
सम्पूर्णा इति विख्याता हरिवासरवर्ज्जिताः॥
आदित्योदयवेलाया आरभ्य षष्टिनाड़िका।
तिथिस्तु सा हि शुद्धा स्यात्सर्व्वतिथ्यो ह्ययं विधिः॥

इति नारदीयात्। एकत्र निर्णीतः शास्त्रार्थो बाधकमन्तरेण अन्यत्रापि तथा इति न्यायात् नक्षत्रेऽपि तथा कल्प्यते।

* तच्च सर्व्वदा न सम्भवति इत्याह कृत्स्नयोगस्तावदित्यादि। अनेकवत्सरैः अनेकवत्सरात् परतः कदाचिदिदं सम्भवतीत्यर्थः। तेन साकल्ययोगयुक्तत्वेन आभाका आषाढ़-भाद्रकार्त्तिक इति व्यवहारो नित्यवत् सदा न शक्यः वक्तुमिति शेषः। एकदेशयोगे तु तिथिनक्षत्रयोः पादादियोगे तु मासान्तरीयनक्षत्रयोगस्य मासान्तरीयमाससंज्ञाप्रयोजकनक्षत्रान्तरयोगस्य अवश्यम्भावात् एकस्यां पौर्णमास्यां सम्भवात् मूलाषाढ़योर्ज्यैष्ठश्च आषाढ़श्चेति। यदा पौर्णमास्यां मूलायोगः तदा द्वे द्वे चित्रादितारायां पूर्णपर्व्वेन्दुसंयुते। मासाश्चैत्रादयो ज्ञेया इति वचनेन मूलानक्षत्रयुक्तपौर्णमासीयोगात् य एव चान्द्रमासः ज्यैष्ठसंज्ञको भवति तस्यां पुनः पौर्णमास्यां पूर्व्वाषाढ़नक्षत्रयोगात् स एव चान्द्रमास आषाढ़संज्ञकश्च भवतीत्यर्थः। एवं यस्यां पौर्णमास्याम् उत्तराषाढ़नक्षत्रयोगात् य एव चान्द्र आषाढ़नामको

दिति* चेत् न उभयोस्तुल्ययोगे एकस्यापि भूयोऽवयवयोगाभावा-द्विनामकत्वापत्तेः†। किञ्च पूर्व्वमासीयनक्षत्रस्यैकस्यां पौर्णमास्यां भूयोऽवयवयोगेन तन्नामप्रवृत्तावपरपौर्णमास्याञ्च परमासीयनक्षत्रस्य भूयोऽवयवयोगेन परमासीयनामप्रवृत्तौ मध्यमासो विलुप्येत‡। दृष्टञ्चैतत् तथाहि चतुर्द्दशोत्तरसहस्रशाकवर्षे लिख्यमाने तुलास्थभास्करे अश्विनीभरणीभ्यां व्याप्ता पौर्णमासी तावदाश्विनी। ततस्तत्रैव वत्सरे वृश्चिकस्थे भास्करे कृत्तिकारोहिणीभ्यां व्याप्ता पौर्णमासी तेन सा कार्त्तिक्येव। तद्योगाच्चासौ

---

भवति पुनस्तस्यां पौर्णमास्यां श्रवणनक्षत्रयोगात् स एव चान्द्रः श्रावणनामकश्च भवति, एवमितरत्रापि। एकस्यां पौर्णमास्यां धनिष्ठाशतभिषायोगात् स एव चान्द्रमासः श्रावणो भाद्रश्च भवति। माससङ्करादित्यादि। एकस्य चान्द्रमासस्य मासद्वयात्मकत्वात् सङ्कल्पवाक्ये कस्य वा मासस्योल्लेखः स्यादित्यर्थः।

* अल्पयोगेनापि यौगिकत्वात् भूयोऽवयवयोगादिति। अल्पयोगेनापि अल्पकालवृत्तिनक्षत्रयोगेनापि भूयोऽवयवयोगात् अधिककालवृत्तिनक्षत्रयोगात्। तथाहि अल्पकालेनापि यौगिकत्वात् तदपेक्षया भूयोऽवयवयोगात् भूयोऽवयवयोगानुसारेण मासविहितकर्म्मणो व्यवस्था भवतीत्यर्थः।

† दूषयति चेन्नेति। उभयोः नक्षत्रयोः तुल्ययोगे समानकालयोगे। तथाहि यत्र पौर्णमासी षष्टिदण्डात्मिका पूर्व्वार्द्धे एकनक्षत्रयोगः अपरार्द्धे अपरनक्षत्रयोगः तत्र एकस्यापि अधिककालवृत्तित्वाभावात् विनामकत्वापत्तेः नामशून्यत्वापत्तेः।

‡ दूषणान्तरमाह किञ्चेति। पूर्व्वमासीयनक्षत्रस्य पूर्व्वचान्द्रमासप्रयोजकीभूतस्य नक्षत्रस्य एकस्यां पौर्णमास्यां भूयोऽवयवयोगेन अधिककालवृत्तित्वेनेत्यर्थः। तन्नामप्रवृत्तौ वैशाखाद्यन्यतममासनामप्रसक्तौ। एवम् अपरपौर्णमास्यां परमासीयनक्षत्रस्य वैशाखाद्यन्यतमचान्द्रमाससंज्ञाप्रयोजकीभूतनक्षत्रस्याधिककालवृत्तित्वेन परमासीयनामप्रवृत्तौ पूर्व्वमासात् तृतीयमासस्य नामप्रसक्तौ मध्यमासः पूर्व्वाव्यवहितोत्तरमास इत्यर्थः।

कार्त्तिक एव। भवतान्मते तदनन्तरञ्च धनुःस्थभास्करे पौर्णमास्यां मृगशिरोनक्षत्रं नास्त्येव आर्द्रायुक्ता तु भूयोभिरवयवैः शेषे तु त्रयोदशदण्डा एव परं पुनर्व्वसुव्याप्ताः। तेन सा मार्गशीर्षी न तु पौषी अल्पयोगात्*। मकरादित्ये च पुष्याश्लेषाभ्याम् अर्द्धार्द्धव्याप्ता तेन सा न पौषी न च माघीति स्यात्†। भवतु वा कथञ्चिदेकद्विकदण्डगणननक्षत्राधिकयोगात् सा पौषी तद्-योगाच्च पौषः। माघी वा तद्योगात् माघः,‡ अन्यतरस्तु विलु-

* एतच्च दृष्टान्तप्रदर्शनेन दृढ़ीकरोति दृष्टञ्चैतदिति। चतुर्द्दशोत्तरसहस्रशाकवर्षे चतुर्द्दशाधिकसहस्रशकाब्दे तुलास्थभास्करे सौरकार्त्तिके अश्विनीभरणीभ्यां व्याप्ता युक्ता आश्विनी तद्योगादाश्विन इति यथासम्भवक्रमेणोक्तमेतत्। वस्तुतस्तु अन्त्योपान्तस्त्रिभो ज्ञेय इति नियमात् रेवत्यश्विनीभरण्यन्यतमयुक्ता या पौर्णमासी सापि आश्विनी तद्योगात् स एव चान्द्रमास आश्विन एव भवति। ततस्तदनन्तरं वृश्चिकस्थभास्करे सौरमार्गे मासि कृत्तिका-रोहिणीभ्यां व्याप्ता युक्ता भवतान्मते पौर्णमास्याम् अधिककालवर्त्तित्वेनैव नक्षत्रस्य मास-संज्ञाप्रयोजकतेति वादिनान्मते इत्यर्थः तदनन्तरञ्च सौरमार्गादेः परतश्च धनुस्थे भास्करे सौरपौषे भूयोऽवयवैः अधिककालं व्याप्य आर्द्रायुक्ता पौर्णमासी भवति तेन अधिककाला-र्द्रानक्षत्रसम्बन्धेन सा पौर्णमासी मार्गशीर्ष्येव भवति न पौषी अल्पयोगात् अल्पकालपुनर्व्वसु-सम्बन्धात्।

† मकरादित्ये च सौरमाघे च पुष्याश्लेषाभ्याम् अर्द्धार्द्धव्याप्ता इति। सा न पौषी न च माघीति तथाच यत्र सौरपौषे पौर्णमास्यां पौषसंज्ञाप्रयोजकपुष्यनक्षत्रस्यार्द्धप्राप्तिः एवं माघसंज्ञाप्रयोजकाश्लेषानक्षत्रस्यार्द्धप्राप्तिः तत्र अधिकेन व्यपदेशा भवन्ति इति न्याया-स्पर्शात् समव्याप्तिस्थले अधिकव्याप्त्यभावात् तेनार्द्धपरिमितपुष्यनक्षत्रयोगेन सा पौर्णमासी न पौषी, एवम् अर्द्धपरिमिताश्लेषनक्षत्रयोगेन सापि पौर्णमासी न माघीति। तयोर्योगे स चान्द्रमासो न पौषः नापि माघश्चेति।

‡ अधिकव्याप्तिमङ्गीकृत्य समाधत्ते भवतु वा कथञ्चिदेकद्विकदण्डगणननक्षत्राधिक-

ष्येत* । कुम्भस्थादित्ये हि पौर्णमास्याः पञ्चदशदण्डा एव परं मघाव्याप्ताः पूर्व्वफल्गुन्या तु भूयसामवयवानां योगात् सा फाल्गुनीति तद्योगात् स फाल्गुनः स्यान्नास्ति माघः । मीनादित्ये तु पूर्णिमोत्तरफाल्गुनीहस्ताभ्यां व्याप्ता सोऽपि फाल्गुन एव द्विर्भवेत्† । अथ प्रथमं येन युक्ता पूर्णिमा तेन व्यपदिश्यते तद्योगाच्च तन्नामा मास इति नास्ति मासलोपः । नैतदपि तस्मिन्नेवाब्दे वृषसंक्रान्तिदिने प्रथमं स्वातीयुक्ता पूर्णिमा, असौ चैत्रः, वृषशेषे च पूर्णिमा अनुराधादण्डैकद्विकयुक्ता प्रथमं,

---

योगात् एकस्य द्विकस्य दण्डस्य गणनेन नक्षत्रस्याधिकयोगादित्यर्थः इति यदि पुष्यनक्षत्रस्य दण्डैकद्विकाधिक्यमङ्गीक्रियते तदा सा पुष्ययुक्तपौर्णमासी पौषी भवितुमर्हति । एवं पुष्यापेक्षया अश्लेषानक्षत्रस्य दण्डैकद्विकाधिक्यमङ्गीक्रियते तदा सा माघ्यपि भवितुमर्हति । अतस्तयोर्योगात् स चान्द्रमासोऽपि पौषो माघो वा भवति ।

* अन्यतरस्तु विलुप्येत इति । यदा पुष्याद्यपेक्षया आर्द्रादेरधिकव्याप्तिस्तदा तन्मासस्य मार्गशीर्षत्वेन पौषो विलुप्येत यदा वा मघाद्यपेक्षया पूर्व्वफाल्गुन्यादेर्व्याप्त्याधिक्यं तदा तन्मासस्य फाल्गुनतया माघो वा विलुप्येत ।

† अधिकव्याप्तिं दर्शयति कुम्भस्थादित्ये इत्यादि । पौर्णमास्याः पञ्चदशदण्डाः एवं पञ्चदशदण्डमात्रमेव परं व्याप्ताः न भूयसामवयवानां पौर्णमास्या योग इति शेषः पूर्व्वफल्गुन्या भूयसामवयवानां योगात् पूर्व्वफल्गुन्या व्याप्ता सा पौर्णमासी फाल्गुन्येव परं भवतीत्यर्थः नास्ति माघः पौर्णमास्यामल्पकालमघासम्बन्धात् इति भावः । मीनादित्ये तु सौरचैत्रे पूर्णिमोत्तरफल्गुनीहस्ताभ्यां व्याप्ता उत्तरफाल्गुनीहस्ताभ्यां व्याप्ता पूर्णिमा । सोऽपि सौरचैत्रगतचान्द्रमासोऽपि फाल्गुन एव द्विर्भवेत्, सौरफाल्गुनगतचान्द्रमासोऽपि फाल्गुनः पूर्व्वफाल्गुन्याः पौर्णमास्यामधिककालव्यापनात्, एवं सौरचैत्रगतचान्द्रमासोऽपि फाल्गुन एव उत्तरफाल्गुनीहस्तयोः पौर्णमास्यां बहुकालव्यापित्वात् ।

तेनासौ वैशाखः स्यात्, ज्यैष्ठो लुप्येत*। मिथुनादित्यपूर्णिमाया आषाढ़द्वयव्याप्तत्वादाषाढ़त्वस्य, कर्कटस्थसूर्य्ये च पौर्णमास्याः श्रवणधनिष्ठाव्याप्तत्वेन श्रावणत्वस्य च निर्विवादत्वात्। वृषशेष-पौर्णमास्याञ्चानुराधायोगाभावे वैशाखो लुप्येत†। तथा सिंह-सूर्य्ये शतभिषापूर्व्वभाद्रपदाभ्यां व्याप्तत्वादसौ भाद्र एव। कन्या-सूर्य्ये च प्रथममुत्तरभाद्रपदयोगादसावपि भाद्र एव स्यात्। अवि-शिष्टयोगमात्रस्य निमित्तत्वे तु माससङ्करान्न कर्म्मणामनुष्ठान-व्यवस्थितिः स्यात्‡। तुलास्थे च भास्करे अश्विनीभरणीभ्यां युक्ते

---

* एतत्पूर्व्वपक्षे उत्तरयति अथेति। प्रथमं येन माससंज्ञाप्रयोजकीभूतनक्षत्रेण संयुक्ता पूर्णिमा भवति तेन नक्षत्रेणैव वैशाखीत्यादिना यथासम्भवं व्यपदिश्यते व्यवह्रियते, तद्योगाच्च तन्नक्षत्रयुक्तपौर्णमासीयोगाच्च यथासम्भवं वैशाखाद्यन्यतममासो भवतीत्यर्थः। अत्र प्राथमिकत्वेन तत्तन्नक्षत्रयुक्तपौर्णमासीयोगस्यैव तत्तन्नामकमासव्यवहृतौ नियामकता न तु बहुकालव्यापित्वेनापि। अतो मासलोपो नास्ति। तथाच कुम्भादित्ये पौर्णमास्यां मघा-सम्बन्धितया पञ्चदशदण्डकालस्य स्वल्पत्वेऽपि मघानक्षत्रयोगस्य प्राथम्यात् कुम्भादित्यगत-श्चान्द्रमासो माघ एव भवति न फाल्गुन इति भावः। नैतदपि प्रथमं स्वातीयुक्तपूर्णिमा असौ स्वातीयुक्तपूर्णिमामध्यकश्चान्द्रमासश्चैत्र एव, तथाच द्वे द्वे चित्रादितारानामिति वचनेन चित्रास्वात्योरन्यतरनक्षत्रस्य चैत्रसंज्ञाप्रयोजकत्वात् तद्योगस्य प्राथम्याच्च। अनुराधा-दण्डैकद्विकयुक्ता तेन असौ चान्द्रमासः वैशाखः, विशाखानुराधयोरन्यतरनक्षत्रस्य वैशाख-संज्ञाप्रयोजकत्वात् तद्योगस्य प्राथम्याच्च। ज्यैष्ठो विलुप्यते।

† तत्साधयति मिथुनादित्ये इत्यादि। सौराषाढ़े पूर्णिमाया आषाढ़द्वयस्य व्याप्त-त्वात् आषाढ़त्वस्य निर्विवादत्वादित्यग्रिमेण सम्बन्धः। कर्कटस्थे सूर्य्ये सौरश्रावणे श्रवण-धनिष्ठाव्याप्तत्वेन श्रावणत्वस्य च निर्विवादत्वात्। वृषशेषपौर्णमास्याम् अनुराधाभावे वैशाखो लुप्येत इति।

‡ पूर्णिमा अनुराधादण्डैकद्विकयुक्ता इति प्राक् दर्शितम् इदानीन्तु अनुराधाभावे

ह्यसावाश्विनः पूर्व्वञ्च कन्यायामपि रेवतीयोगादाश्विन इति द्विर्भाद्रो द्विराश्विनश्च स्यात्, तथा त्रयोदशोत्तरसहस्रशकाव्दशेषे मीनस्थे सूर्य्ये पूर्व्वोत्तरफाल्गुनीव्याप्ता पूर्णिमा, तदनन्तरं मेषसूर्य्ये हस्तचित्राभ्यां युक्ता पूर्णिमा हस्तयोगात् फाल्गुनोऽप्यसौ त्रयोदशोत्तरसहस्राव्दीयकुम्भादित्यात् प्रभृति चतुर्द्दशोत्तरसहस्राव्दान्तमीनभोगपर्य्यन्तेन मासद्वयलोपः। भाद्राश्विनयोरावृत्तत्वं,* फाल्गुनस्य द्विरावृत्तत्वं,† मासानाञ्च सङ्करः स्यात्। मासलोपे सङ्करे च सति नियतक्रमावस्थितचान्द्रद्वादशमासगोचरो माघादिपदप्रयोगो बाध्यते‡। न च तद्युक्तं प्रयोगानुसारित्वात् स्व-

---

वैशाखोऽपि विलुप्येत इति दर्शयति। अविशिष्टयोगमात्रस्य अनियतयोगमात्रस्य हेतुत्वे तु यद्यपि परस्परविरुद्धानाम् एकत्रावस्थानं सङ्करः पृथिवीत्वतेजस्त्वादिना घटत्वं यदि नाना इत्यादिना उदाहृतं तथापि सोऽत्र न ग्राह्यः। अतएव स्वयमुदाहृतं भाद्राश्विनयोरावृत्तत्वं फाल्गुनस्य द्विरावृत्तत्वं मासानाञ्च सङ्करः स्यादित्यादि। माससङ्करात् मासानां साङ्कर्य्ये द्वित्वलोपादेः सम्भवात् न कर्म्मानुष्ठानव्यवस्थितिः कर्म्मानुष्ठानव्यवस्था न स्यात्।

* द्वित्वलोपादिकं क्रमेण दर्शयति तुलास्थे चेत्यादि। कुम्भादित्यात् सौरफाल्गुनमारभ्य मीनभोगपर्य्यन्तेन सौरचैत्रपर्य्यन्तेन। मासद्वयलोपः वैशाखज्यैष्ठयोर्लोपः भाद्राश्विनयोरावृत्तत्वं द्वित्वं द्विर्भाद्रः द्विराश्विनश्च भवतीत्यर्थः।

† फाल्गुनस्य द्विरावृत्तत्वमिति। तथाच सौरफाल्गुनमारभ्य सौरचैत्रपर्य्यन्तेषु मध्ये फाल्गुनस्य वारद्वयप्राप्तत्वात्। त्रयोदशोत्तरसहस्रशकाव्दीयसौरफाल्गुनगतचान्द्रमासस्य एवं तदव्दीयसौरचैत्रगतचान्द्रमासस्य च फाल्गुनत्वम् इति पूर्व्वाव्दे फाल्गुनस्य द्वित्वम्, एवं चतुर्द्दशोत्तरसहस्रशकाव्दीयकुम्भमीनगतचान्द्रफाल्गुनस्य द्वित्वमिति द्विरावृत्तत्वम्।

‡ माससङ्करे लोपे च दोषं दर्शयति नियतक्रमेत्यादि। नियतक्रमावस्थितः वैशाखोत्तरज्यैष्ठस्तदुत्तराषाढ़ इत्यादिरूपः द्वादशमासः वैशाखादिचैत्रान्तः। तथाच नियतक्रमेण अवस्थिता ये चान्द्रा चान्द्ररूपाः द्वादशमासाः तद्गोचरस्तद्विषयः तद्विषयको यो

निमित्तबाधाक्षमत्वात् सङ्करलोपयोश्च क्रमान्तरापत्तेः। अथोच्यते यस्मिन् दर्शान्ते मासि मघादियुक्तपूर्णिमा,* तत्र माघादिप्रवृत्तिः, सूर्य्यचन्द्रयोर्हि पूर्णिमान्त एवान्योऽन्यं समसप्तकेनावस्थानात् परो विप्रकर्षो भवति। आदौ तु षड़ष्टकेनाप्यवस्थानात्†। तथाहि त्रयोदशोत्तरसहस्रशाकान्ते मीनसूर्य्ये पूर्णिमा पूर्व्वोत्तरफाल्गु-नीभ्यां व्याप्ता, तत्र पौर्णमास्याः शेषपञ्चदशदण्डाष्वेव परं कन्या-याञ्चन्द्रः‡ पूर्व्वं सिंह एव, तथा चतुर्दशोत्तरसहस्राब्दादौ मेषसूर्य्ये

---

माघादिपदप्रयोगः स बाध्यते इति वाक्यार्थः। ननु मलमासे सति मासस्य द्वित्वात् क्रम-भङ्गेऽपि सति न क्षतिः तद्वदत्रापि भवतु को दोष इति चेन्न, द्वादशमासाः संवत्सरः क्वचि-त्त्रयोदशमासा इति श्रुत्या मलमासपाते त्रयोदशमाससंवत्सरस्य श्रौतत्वात् तदितरत्र द्वादश-माससंवत्सरस्य श्रुतिप्रतिपादितत्वेन द्वित्वलोपे च श्रुतिविरोधापत्तेः।

* न च तदयुक्तमिति। मघादिपदप्रयोगबाधो न युक्त इत्यर्थः। योगस्य पौर्णमास्यां नक्षत्रयोगस्य प्रयोगानुसारित्वात् प्रयोगसमनियतत्वात् स्वनिमित्तबाधाक्षमत्वात् स्वनिमित्तस्य प्रयोगस्य बाधितुमयोग्यत्वात् सङ्करलोपयोश्च सतोः क्रमान्तरापत्तेः क्रमान्यथापत्तेः। सिद्धान्तयति अथोच्यते यस्मिन् दर्शान्ते मासि यस्मिन् मुख्यचान्द्रे मासि मघादियुक्तपूर्णिमा न तु अश्लेषादियुक्तपूर्णिमा तत्र चान्द्रमासि माघादिप्रवृत्तिः माघादिसंज्ञाप्रवृत्तिः।

† अत्र हेतुमाह सूर्य्यचन्द्रयोर्हि पूर्णिमान्ते एवान्योऽन्यं समसप्तकेनावस्थानात् अन्योऽन्यं परस्परं समसप्तकेन सूर्य्यभोग्यराशितश्चन्द्रभोग्यराशिः सप्तमः एवं चन्द्रभोग्य-राशितः सूर्य्यभोग्यराशिः सप्तमः तेनावस्थानात् परो विप्रकर्षो भवति, तथाच सूर्य्याचन्द्र-मसोर्यः परो विप्रकर्षः सा पौर्णमासीति गोभिलसूत्रात्। आदौ तु षड़ष्टकेनावस्थानादिति आदौ अश्लेषानक्षत्रयोगे तु तथाच अश्लेषानक्षत्रस्य कर्कटघटकतया तद्राशिस्थे चन्द्रे कुम्भा-दिस्थे तु सूर्य्याचन्द्रमसोः षड़ष्टकेनावस्थानं भवति।

‡ तथाहीत्यादि। मीनसूर्य्ये सौरचैत्रे मासि पूर्णिमा पूर्व्वोत्तरफल्गुनीभ्यां व्याप्ता पौर्णमास्याः शेषपञ्चदशदण्डेष्वेव परं कन्यायां चन्द्रः इति अत्र पूर्व्वोत्तरफल्गुनीभ्यां व्याप्ता

पूर्णिमा हस्तचित्राभ्यां व्याप्ता, तत्र तुलासम्बन्धिनश्चित्रापरार्द्धस्य त्रयोदशदण्डा एव परं पूर्णिमान्ते भूताः। तदितरांशे तु पौर्णमास्याः कन्यायामेव चन्द्रो, मेषे च सूर्य्यः। तथा तद्वत्सर एव वृषसूर्य्ये,* पूर्णिमा स्वातीविशाखाभ्यां व्याप्ता. तत्स्वात्यंशे विशाखापदत्रये तुलायाञ्चन्द्रः वृश्चिकसम्बन्धिविशाखाशेषैरष्टाभिरेव दण्डैः परमन्ते व्याप्ता, तेनान्त एव नियतं चन्द्रसूर्य्ययोरन्योऽन्यं सप्तमराश्यवस्थानं, न पुनरादावपि। तदेवमवच्छिन्नपूर्णिमात्रयेऽपि प्रथमं सूर्य्यात् षड़ष्टकेनैव चन्द्रस्यावस्थानम्।

---

इत्युपादानात् एकस्यां पौर्णमास्यां सम्पूर्णोभयनक्षत्रयोर्व्याप्त्यसम्भवात् पूर्व्वफल्गुनीशेषार्द्धोत्तरफल्गुनीपूर्व्वार्द्धाभ्यां व्याप्ता पौर्णमासीत्युपलभ्यते, सम्भाव्यते च ततश्चोत्तरफल्गुन्या द्वितीयपादः पौर्णमास्याः शेषपञ्चदशदण्डेष्वेव परमवतिष्ठते तस्य द्वितीयपादस्य कन्याघटकतया च कन्यायां चन्द्र इत्युक्तं सङ्गच्छते।

* पूर्व्वं सिंह एव इति। मघापूर्व्वफल्गुन्युत्तरफल्गुनीपादः सिंह इत्युपादानादत्र पूर्व्वफल्गुन्याः शेषार्द्धस्य उत्तरफल्गुन्याः प्रथमपादस्य च सिंहघटकतया च पूर्व्वं सिंह इत्यपि सङ्गच्छते। तथाच चतुर्द्दशसहस्राब्दादौ मेषसूर्य्ये पूर्णिमा हस्तचित्राभ्यां व्याप्ता इत्यादि अत्र तुलासम्बन्धिनश्चित्राशेषार्द्धस्य तुलासम्बन्धिनश्चित्रातृतीयपादस्य त्रयोदशदण्डा एव परं प्रथमत्रयोदशदण्डा एव परं पूर्णिमान्ते पूर्णिमान्तपर्य्यन्तं व्याप्य भूता अवस्थिता। यद्यप्यत्रापि पूर्व्ववत् सम्पूर्णहस्तचित्राभ्यां व्याप्त्यसम्भवात् हस्तशेषार्द्धचित्रापूर्व्वार्द्धाभ्यां व्याप्ता वक्तुमुचिता, तथापि चित्रापूर्व्वार्द्धस्य कन्याघटकतया कन्यास्थे चन्द्रे मेषस्थसूर्य्ये च षड़ष्टकेनावस्थित्या समसप्तकेनावस्थित्यभावात् परमविप्रकर्षाभावेन पौर्णमास्यपि न घटते, अतोऽगत्याप्यत्र हस्तचतुर्थपाद-किञ्चिन्न्यून-चित्रापादत्रयाभ्यां व्याप्ता वक्तव्या, यदि चात्र नक्षत्रपादस्य पञ्चदशदण्डात्मकतया त्रयोदशदण्डेति कथनमनुचितं भवति तथापि तदानीन्तनतिथिपरिमाणमवधार्य्य ग्रन्थकारेण लिखितमतो नानुचितं किञ्चित्। तदितरांशे चित्रापूर्व्वार्द्धादौ। वृषसूर्य्ये सौरज्यैष्ठे।

अतएव मार्कण्डेयः ।

"आदिपादार्द्धमात्रेण नक्षत्रस्यान्वयेऽप्यसौ ।
तिथिरन्तेऽपि संयुक्ता विपरीता न सा पुनः ॥" (१)

अस्यार्थः । सूर्य्यात् सप्तमराशिसम्बन्धिना नक्षत्रेणान्त एव नियत इति । तदन्ते तु तन्नक्षत्रयोगात् कार्त्तिकादिपदानि यौगिकानीति*। तदप्ययुक्तम् । चतुर्दशोत्तरसहस्रशाकाब्दे वृश्चिकस्थे धनुस्थे च सूर्य्ये पौर्णमास्यां मृगशिरोयोगस्याभावात् तदन्तयोगस्य सुतरामभावान्मार्गशीर्षमासविलोपापत्तेः† । किञ्च द्विभत्रिभलमन्तरेणापि प्रतिपदादिदर्शान्ते चान्द्रे मासि कार्त्तिकादिपद-

(१) हेमाद्रौ तथाच शङ्करगीता इति कृत्वा एतद्वचनं लिखितं परन्तु तृतीयचरणे तिथिरन्तेऽपि इत्यत्र तिथिरर्द्धेऽपीति पाठो दृश्यते ।

* स्वातीविशाखाभ्यां व्याप्ता इति । अत्रापि पौर्णमास्यन्यथानुपपत्त्या सप्तदण्डावशिष्टस्वाती त्रयःपञ्चाशद्दण्डमात्रावस्थितविशाखाभ्यां व्याप्तेति वक्तव्या, तत्स्वात्यंशे स्वातीशेषसप्तदण्डे विशाखाशेषैरष्टाभिर्दण्डैः पञ्चचत्वारिंशद्दण्डात् परतः षट्चत्वारिंशद्दण्डमारभ्य अष्टाभिर्दण्डैरित्यर्थः । तदेवमवच्छिन्नपूर्णिमात्रये नक्षत्रचत्रावच्छिन्नमीनमेषवृषगतपूर्णिमात्रयेऽपीत्यर्थः यतएव अन्तयोगस्य ग्राह्यता अतएवेत्यर्थः । अन्वये सूर्य्यात् सप्तमराशौ अर्थात् स्थितस्य नक्षत्रस्य आदिपादार्द्धमात्रेणापि अन्ते एव संयुक्ता चेत् तदैव अपिरेवार्थे अव्ययानामनेकार्थत्वात् असौ पौर्णमासी तिथिः पौर्णमासीतिथिपदवाच्या, विपरीता अन्तभिन्ने संयुक्ता चेत् सा पौर्णमासी तिथिर्न भवतीत्यर्थः । यौगिकानि योगरूढ़िकानीत्यर्थः ।

† तदप्ययुक्तमिति । अथोच्यते इत्यारभ्य वृषसूर्य्ये इत्याद्यन्तं यदुक्तं तदप्ययुक्तमित्यर्थः । वृश्चिकस्थे धनुस्थे च सूर्य्ये सौरमार्गे सौरपौषे च मृगशिरोयोगस्याभावात् मृगशिरःपदस्योपलक्षणतया मृगशिरआर्द्रायोगस्यात्यन्ताभावादित्यर्थः । अन्यथा मृगशिरआर्द्रायोगस्य मार्गशीर्षघटकतया मार्गशीर्षविलोपापत्तेरित्यसङ्गतं भवेत् ।

प्रयोगदर्शनात् द्विभत्रिभयोगादपि कथं यौगिकत्वम्। किञ्च सकलतिथिः किं योगो निमित्तम्। अथ सकलभस्य योगो वा, बहुयोगो वा, आदौ वा, अन्ते वा, योगमात्रं वा, सर्व्वं व्यभिचरति। इदन्तु नोपभोगिनि रवावुपक्रान्ते* चतुर्दशोत्तरदशशत-शाकाब्दे कार्त्तिके चान्द्रे तत्पूर्णिमाश्विनीभरणीभ्यां व्याप्ता। न च कृत्तिकादियुगयोगः। न च नासौ कार्त्तिक इति† नियमात्तत्र प्रयोगस्य‡। तथाहि चतुर्दशोत्तरसहस्रशाकाब्दे तुला-

---

* प्रतिबन्ध्यन्तरं दर्शयति किञ्चेति। द्विभत्रिभत्वमन्तरेण व्यतिरेकेणापि प्रतिपदादि-दर्शान्ते मासि मुख्यचान्द्रे मासि कार्त्तिकादिपदप्रयोगदर्शनात् इति। तथाच—"कृष्णपक्षे तृतीयायां मासार्द्धं जायते यदि। तत्त्रयोदशगे सूर्य्ये राहुणा ग्रस्यते शशी॥" मासार्द्धं कार्त्तिकादौ कृत्तिकादि। ततश्च कृष्णतृतीयायां मासार्द्धयोगे तत्पूर्व्वपौर्णमास्यां कृत्तिका-रोहिण्यादिरूपद्विभत्वादियोगाभावस्य सिद्धिः सुतरामेव। अपिच मासार्द्धमित्यस्य कार्त्तिकादौ कृत्तिकादिर्वक्तव्यत्वादेव कार्त्तिकादिप्रयोगोऽपि सिद्ध एव। सकलतिथिः सम्पूर्णतिथिः। सकलभस्य सम्पूर्णनक्षत्रस्य। सर्व्वं व्यभिचरति सर्व्वत्रानुगतत्वेन द्विभत्वादि-योगो न सम्भवति। इदन्तु सर्व्वं व्यभिचरति सकलतिथेरित्यादि यदुक्तम् इदन्तु सर्व्वं व्यभिचरतीत्यर्थः उपभोगिनि राश्युपभोगिनि राशिस्थे सूर्य्ये अर्थात् सौरे मासि उपक्रान्ते आरब्धे सति दर्शान्ते मासि न भवति।

† तदेव दर्शयति चतुर्दशोत्तरदशशतशाकाब्दे इत्यादि। कार्त्तिके चान्द्रे मुख्य-चान्द्रकार्त्तिके मासि तत्पूर्णिमा तन्मुख्यचान्द्रकार्त्तिकमाससम्बन्धिनी पूर्णिमा अश्विनी-भरणीभ्यां व्याप्ता अश्विनीभरणीभ्यामेव व्याप्ता न तु कृत्तिकायुगयोगः कृत्तिकायुगस्य कृत्तिकारोहिण्योर्योगो न त्वित्यर्थः। न च नासौ कार्त्तिकः असौ कार्त्तिको न भवति इति न अर्थात् कार्त्तिको भवत्येव इत्यर्थः।

‡ अत्र हेतुं दर्शयति नियमात्तत्र प्रयोगस्य इति। तत्र अश्विनीभरणीव्याप्तपौर्ण-मासीयुक्तचान्द्रमासि प्रयोगस्य कार्त्तिकप्रयोगस्य नियमात् शास्त्रेण विहितत्वात्।

स्यादित्याष्टमदिनोपक्रान्तस्य प्रतिपदादिदर्शान्तमासस्य पौर्णमास्यश्विनीभरणीभ्याम् व्याप्ता कृत्तिकारोहिण्योरन्यतरयोगाच्च* कार्त्तिकः।† तथा तदनन्तरितस्य वृश्चिकादित्यसप्तमदिनोपक्रान्तस्य प्रतिपदादिदर्शान्तमासस्य पूर्णिमा कृत्तिकारोहिणीभ्यां व्याप्ता मृगशिरआर्द्रयोश्चान्यतरयोगान्मार्गशीर्षः‡। एवंविध

---

* तदेवोपपादयति तथाहीति। तुलास्थादित्याष्टमदिनोपक्रान्तस्य सौरकार्त्तिकाष्टमदिनारब्धस्य प्रतिपदादिदर्शान्तमासस्य मुख्यचान्द्रमासस्य पौर्णमास्याम् अश्विनीभरणीभ्यां व्याप्तायां कृत्तिकारोहिण्योरन्यतरयोगाच्च।

† कार्त्तिक इति। कृत्तिकारोहिण्योरन्यतरयोगयुक्तः स चान्द्रमास इति शेषः चकारात् अश्विनीभरणीव्याप्तपौर्णमासीयुक्तः स चान्द्रमासोऽपि कार्त्तिकः तथा यथा स चान्द्रमासः कार्त्तिकः तथा इत्यर्थः। तदनन्तरितस्य तदव्यवहितसौरकार्त्तिकानन्तरमागतस्य वृश्चिकादित्यसप्तमदिन उपक्रान्तस्य सौरमार्गस्य सप्तमदिनारब्धस्य प्रतिपदादिदर्शान्तमासस्य पूर्णिमायां कृत्तिकारोहिणीभ्यां व्याप्तायां मृगशिरआर्द्रयोरन्यतरयोगाच्च।

‡ मार्गशीर्ष इति। मृगशिरआर्द्रायुक्तः स च चान्द्रमास इति शेषः। चकाराच्च कृत्तिकारोहिणीयुक्तोऽपि स चान्द्रमासः मार्गशीर्ष एव भवतीत्यर्थः यद्यपि वक्ष्यमाणपद्मपुराणवचनात् भरणीयुक्तत्वेऽपि चान्द्रमासस्य कार्त्तिकत्वं वाचनिकम्। अत्र तादृशवचनाभावात् कथं कृत्तिकारोहिणीयोगे चान्द्रमासस्य मार्गशीर्षत्वम् इति चेन्न भरणीनक्षत्रयोगे चान्द्रमासस्य वाचनिककार्त्तिकत्वात् तदनन्तरागतस्य चान्द्रमासस्य तादृशवचनाभावेऽपि कार्त्तिकोत्तरमार्गशीर्ष इति क्रमनियमादेव तस्य मार्गशीर्षत्वे निर्विवादात्। अत्र क्वचित् पुस्तके पौर्णमास्यश्विनीभरणीभ्यां व्याप्तां कृत्तिकारोहिण्योरन्यतरयोगाच्च कार्त्तिकः तथा तदनन्तरितस्य इत्यादि कृत्तिकारोहिणीभ्यां व्याप्तां मृगशिरआर्द्रयोरन्यतरयोगाच्च मार्गशीर्ष इति। क्वचिच्च व्याप्तामित्यत्र व्याप्ता इति बिन्दुरहितपाठो दृश्यते तदुभयपाठोऽपि प्रामादिक एव। अन्यथा उत्तरत्रान्यतरयोगाच्चेत्यनन्वयापत्तेः व्याप्तायामित्येव पाठः समीचीनः।

एव कार्त्तिको द्वापञ्चाशदधिकनवशतसंख्याते शकाब्दे अम्बुकादिर्दर्शितवान्(१)*। न च तौ कार्त्तिकमार्गशीर्षौ न भवत एवेति वाच्यं† द्वयोरेव(२) तुलावृश्चिकादित्यारब्धत्वाद्वा ‡ वृश्चिकधनुःसंक्रान्तिचिह्नितत्वाद्वा। कार्त्तिकमार्गशीर्षपदप्रयोगाविवादात्। तत्रैव च प्रयोगेण योगस्य यन्त्रितत्वात्। अनेनैवं धृते दर्शान्तेऽपि सावनमासेषु प्रयोगात्।

अतएव पद्मपुराणम्।

कार्त्तिक्यान्तु यदा ऋक्षमाग्नेयम्भवति क्वचित्।
महती सा तिथिर्ज्ञेया स्नानदानादिकर्म्मसु॥
यदा याम्यन्तु भवति तिथौ तस्यां नराधिप।
तिथिः सापि महापुण्या ऋषिभिः परिकीर्त्तिता॥

(१) अम्बुकादिभिर्दर्शितवान् इति मूं पुं पाठः।

(२) क्वचिदादर्शपुस्तके द्वयोरेव तुलावृश्चिकादिमासेषु च प्रयोगादित्येवमाधमस्ति। तत अतएव इत्यस्ति, तुलावृश्चिकादित्यारब्धत्वादित्यादिकं नास्ति।

* अत्र ग्रन्थकारीयसंवादं दर्शयति एवंविध एव च कार्त्तिक इत्यादि। अश्विनीभरणीभ्यां युक्तः अम्बुकादिभिः अम्बुकभट्टादिभिः दर्शित इत्येव पाठः साधुः दर्शितवानिति तु अपपाठः अम्बुकादिभिरित्यनन्वयापत्तेः।

† तदुभयोः कार्त्तिकत्वं मार्गशीर्षत्वञ्च विचारमुखेन साधयति न च तावित्यादि। तौ चान्द्रमासौ कार्त्तिकमार्गशीर्षौ न भवत एवेति वाच्यं न चेत्यर्थः।

‡ तत्साधकं हेतुद्वयं क्रमेण दर्शयति द्वयोरेव इत्यादि तुलावृश्चिकादित्यारब्धत्वात्। तथाच तुलास्थरव्यारब्धचान्द्रमासत्वं कार्त्तिकत्वम्, एवं वृश्चिकस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तत्वं मार्गशीर्षत्वमिति लक्षणम्। यदाह व्यासः। मीनादिस्थो रविर्येषामारब्धप्रथमक्षणे। भवेत्तेऽब्दे चान्द्रमासाश्चैत्राद्या द्वादश स्मृता इति॥ आरब्धप्रथमक्षणे आद्यक्रियाद्यसमये।

तस्यां कार्त्तिक्यां याम्यं भरणी तद्योगेऽपि कार्त्तिकत्वमव्याहतमेव प्रतीयते। अतएव* तस्मिन् कार्त्तिके देवोत्थानमविवादम्, अन्यथा वृश्चिके देवोत्थानं क्रियमाणं न चान्द्रे न वा सौरे कार्त्तिके कृतं स्यात्†। तुलास्थसूर्य्यसप्तमदिवसे अमावास्यायां लक्ष्मीप्रबोधस्य भूतत्वात्तदनन्तरितशुक्लपक्षे च देवोत्थानस्य तस्मिन् शुक्ले सदा विष्णुरिति नियतत्वात्‡ किञ्च फाल्गुनः त्रिभो

---

* वृश्चिकधनुःसंक्रान्तिचिह्नितत्वादेति। मेषगरविसंक्रान्तिः चान्द्रमासे यत्र भवति स चैत्रः। एवं वृषादिगरविसंक्रान्तिरित्यादिना वैशाखादयो ज्ञेया इति ब्रह्मगुप्तकृतचान्द्रमासलक्षणाभिप्रायेणोक्तम्। कार्त्तिकमार्गशीर्षपदप्रयोगाविवादात् कार्त्तिकमार्गशीर्षपदवाच्यत्वे विरोधिपक्षाभावादित्यर्थः। तत्रैव च तुलादित्याष्टमदिनोपक्रान्तवृश्चिकादित्यसप्तमदिनोपक्रान्तचान्द्रमासयोरेव च प्रयोगेण कार्त्तिकमार्गशीर्षलक्षणाक्रान्तत्वेन योगस्य पौर्णमास्या नक्षत्रयोगस्य यन्त्रितत्वात् नियमितत्वात्। अनेन निरुक्तप्रकारेणैवम्भूते एवमवष्टते दर्शान्ते मुख्यचान्द्रमासे सावनमासेषु तिथिसावनमासेषु च गौणचान्द्रमासेषु च इत्यर्थः प्रयोगात् कार्त्तिकादित्वविधानात्। यतएव पौर्णमास्यां भरणीयोगेऽपि कार्त्तिकत्वम् अतएवेत्यर्थः। कार्त्तिक्यां चान्द्रकार्त्तिकपौर्णमास्याम् आग्नेयम् अग्निदेवताकत्वात् कृत्तिका सा तिथिः स्नानदानादिषु महती महाफलदा इत्यर्थः। याम्यं यमदेवताकत्वात् भरणी तिथिः सापि भरणीयुक्तपौर्णमासीतिथिरपि। अव्याहतमेव अखण्डितमेव। यतएव तुलादित्यारब्धचान्द्रमासस्य कार्त्तिकत्वम् अतएवेत्यर्थः।

† तस्मिन् कार्त्तिके तुलादित्यारब्धचान्द्रकार्त्तिके देवोत्थानं हरेरुत्थानम् अविवादम् इति। तस्माच्चान्द्रमासस्य कार्त्तिकत्वेन तत्र हरिबोधने न कस्यापि असम्मतत्वम्। अन्यथा तस्य कार्त्तिकत्वास्वीकारे वृश्चिके सौरमार्गे क्रियमाणं देवोत्थानं हरेरुत्थानम्। न चान्द्रे कार्त्तिके न वा सौरे कार्त्तिके कृतं भवेत्। तथाच कार्त्तिके परिबुध्येत शुक्लपक्षे हरिर्दिने इत्यनेन विरुध्येत इति भावः।

‡ तुलास्थसूर्य्यसप्तमदिवसे अमावास्यायां लक्ष्मीप्रबोधस्य भूतत्वादित्यादि। तथाच मार्कण्डेयः। अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति। तस्मिन् शुक्ले सदा विष्णु-

मत इति पूर्व्वसिद्धं फाल्गुनमुद्दिश्य त्रिभत्वं त्रेयं*। विहितत्रिभसम्बन्धादेव फाल्गुनत्वमितरेतराश्रयं स्यात्†। न चैकनक्षत्रयोगनिमित्तं फाल्गुनमुद्दिश्य नक्षत्रान्तरयोगोऽपि निमित्तत्रयविधानमिति‡ पूर्व्वावधृतनिमित्तविरोधो§ त्रिभपदे च विध्यनुवाददोषा-

---

तुलायामथ वृश्चिके॥ तस्मिन् शुक्ले सदा विष्णुरिति नियतत्वात् तस्मिन् शुक्ले सदा विष्णुरिति माण्डव्यवचनेन नियमितत्वादित्यर्थः।

* प्रतिबन्ध्यन्तरमाह किञ्चेति। फाल्गुनस्य त्रिभो मत इति पूर्व्वसिद्धफाल्गुनमुद्दिश्य त्रिभत्वं विधेयं विहितत्रिभसम्बन्धादेव फाल्गुनत्वमितरेतराश्रयत्वमिति तथाहि पूर्व्वसिद्धं नक्षत्रत्रितयान्यतमयुक्तपौर्णमासीयोगेन पूर्व्वसिद्धं फाल्गुनत्वमुद्दिश्य फाल्गुनस्य त्रिभो मतः इत्यनेन वचनेन यदि त्रिभत्वं विधेयं स्यात्।

† पूर्व्वप्रसिद्धत्वं दर्शयति विहितत्रिभसम्बन्धादेव फाल्गुनत्वमिति। ततश्च त्रिभत्वस्य फाल्गुनलक्षणघटकतया नागृहीतविशेषणबुद्धिर्विशिष्ये चोपजायते इति न्यायात् लक्षणप्रतीतौ त्रिभत्वज्ञानमपेक्षते। पुनः पूर्व्वप्रसिद्धफाल्गुनत्वमुद्दिश्य त्रिभत्वे विधेये विधेयत्रिभत्वप्रतीतौ च विहितत्रिभत्वसम्बन्धि फाल्गुनत्वज्ञानमप्यपेक्षते च। इति त्रिभत्वज्ञानापेक्षफाल्गुनत्वज्ञानं फाल्गुनत्वज्ञानापेक्षञ्च त्रिभत्वज्ञानमिति इतरेतराश्रयत्वम्। तल्लक्षणन्तु स्वग्रहसापेक्षग्रहसापेक्षग्रहकत्वम् इति।

‡ इतरेतराश्रयदोषं परिहर्त्तुमुपक्रमते न चैकनक्षत्रयोगनिमित्तमित्यादि। एकनक्षत्रं निमित्तं यस्य तं फाल्गुनत्वमुद्दिश्य। तथाच लाघवात् फाल्गुनीनक्षत्रयुक्तपौर्णमासीयोग एव निमित्ततया फाल्गुनलक्षणे निवेशनीयो न तु नक्षत्रत्रितयान्यतमयुक्तपौर्णमासीयोगो लक्षणशरीरे निवेशनीयो गौरवात्। तादृशफाल्गुनमुद्दिश्य फाल्गुनस्य त्रिभो मत इति वचनेन नक्षत्रान्तरयोगात् अन्यनक्षत्रयोगात् अधिकारात् स नक्षत्रयोग इति। इति निमित्तत्रयविधानं निमित्तीभूतत्रिभविधानं, ततश्च लक्षणशरीरे त्रिभत्वाप्रवेशात् इतरेतराश्रयदोषो न घटते इति भावः।

§ अत्र हेतुं दर्शयति पूर्व्वावधृतनिमित्तविरोध इति। तथाच फाल्गुनस्य त्रिभो

पत्तेः। पूर्व्वोक्तविकल्पकलापस्य च पूर्णिमान्तेऽपि मास्यविशेषात्तत्रापि यौगिकत्वं निरस्तं वेदितव्यम्। अस्मिंश्च दूषणगणे गणितज्ञेभ्यो यथोक्तं कालक्रममवगम्य विद्वद्भिः श्रद्धातव्यम्। किञ्च पूर्णिमान्तो मासः क्वचिदपि श्रुतिस्मृतिगोचरो न वैशाखादिपदैर्निर्द्दिष्टः*। यस्तु वणिग्जनमात्रप्रयोगविषयः स चान्यथाप्युपपन्नः दर्शद्वयातिक्रमेण त्वधिमासद्विराषाढ़त्वादिकञ्च वदन्तो मुनयो दर्शान्त एव मासे वैशाखादिपदमिति दर्शयन्ति, तदन्तस्यैव तदानीं नियमेन सूर्य्यसंक्रान्तिवर्ज्जितत्वेनाधिमासत्वात्†,

---

मत इत्यनेन त्रिभानां निमित्तता अवधृता एकनक्षत्रयोगनिमित्तं फाल्गुनमुद्दिश्य त्रिभत्वे विधेयेऽपि एकनक्षत्रमात्रयोगस्य निमित्तत्वात् त्रयाणां पूर्व्वावधृतनिमित्तविरोध इत्यर्थः।

* त्रिभपदे च विध्यनुवादापत्तेरिति। एकनक्षत्रयोगनिमित्तं फाल्गुनमुद्दिश्य फाल्गुनश्च त्रिभो मत इति प्रागुक्तवचनेन त्रिभत्वे विधेये त्रयाणां नक्षत्राणां तन्मध्ये अप्राप्तनक्षत्रांशे विधिः। विधिरत्यन्तमप्राप्ताविति स्मरणात्। प्राप्तांशे अनुवादः प्राप्तग्रनुसारित्वादनुवादस्य। पूर्व्वोक्तविकल्पकलापस्य सौरचान्द्रसावननाक्षत्रभेदेन चतुर्व्विधत्वेन विकल्पितस्य मासस्य च मध्ये पूर्णिमान्ते मासि गौणचान्द्रे मास्यविशेषात्। चान्द्रत्वेन विशेषाभावात्। यौगिकत्वं तत्तन्नक्षत्रयुक्तपौर्णमासीयोगेन योगरूढ़िकत्वञ्च निरस्तं वेदितव्यम्। अस्मिन् दूषणगणे अस्माभिर्निर्द्दिष्टे दोषसमूहे इत्यस्य अग्रिमेण श्रद्धातव्यमित्यनेन सम्बन्धः। पूर्णिमान्तो मासः गौणचान्द्रमासः श्रुतिस्मृतिगोचरः सन् वैशाखादिपदैर्न निर्द्दिष्टः इत्यन्वयः। तथाच श्रुत्या स्मृत्या वा क्वचिदपि कुत्रापि वैशाखादिनामकत्वेन गौणचान्द्रमासो न विहित इत्यर्थः।

† ननु संक्रान्तिपौर्णमासाभ्यां तथैव नृपवैश्ययोरिति पारस्करवचनेन वैश्यसम्बन्धितया पौर्णिमान्तो मासः गौणचान्द्रमासो निर्द्दिष्ट एव कथम् अनिर्द्दिष्ट इत्याशङ्क्य निराकरोति यस्तु वणिग्जनमात्रेत्यादि। वणिग्जनो वैश्यः तन्मात्रप्रयोगविषयः तन्मात्रसम्बन्धितया पारस्करेणोक्तः स चान्यथाप्युपपन्न इति। अत्र पारस्करवचने वैशाखादिनामकत्वाश्रवणात्

न तिथ्यन्तरान्तस्य प्रतिपदुपक्रान्तमासद्वयस्यैव चैकराशिसूर्य्योपक्रान्तत्वेन द्विराषाढ़ादिप्रयोगविषयत्वात्।

तथाहि ज्योतिःशास्त्रम्।

"अमावास्याद्वयं यत्र रविसंक्रान्तिवर्ज्जितम्।
मलिम्लुचः स विज्ञेयः उत्तरश्चोत्तमः स्मृत इति॥
मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत्।
द्विराषाढ़ः स विज्ञेयः विष्णुः स्वपिति कर्कटे॥"

तस्मात् पूर्णिमान्तो न वैशाखादिपदवाच्यो दूरे यौगिकत्वानुसारः। अमावास्यान्तेऽप्ययौगिकत्वमेवाह विष्णुः।

मार्गशीर्षशुक्लपञ्चदश्यां मृगशिरःसंयुक्तायां* चूर्णित-

---

केवलपौर्णमास्यन्तमासश्रवणाच्च अन्यथा वैश्यस्य कुशीदप्रधानत्वात् पौर्णमास्याश्च सायं चन्द्रोदयेन सुव्यक्तज्ञानत्वादित्यादिना उपपन्नः। दर्शान्त एव मासे मुख्यचान्द्रमास एव न तु पौर्णमास्यन्तगौणचान्द्रमासे। वैशाखादिपदं वैशाखादिपदप्रयोगं दर्शयन्ति। तदन्तस्यैव दर्शान्तमासस्यैव सूर्य्यसंक्रान्तिवर्ज्जितत्वेन तदानीं नियमेन अधिमासत्वात् मलमासत्वात्।

* न तिथ्यन्तरान्तस्य पौर्णमास्यन्तगौणचान्द्रमासस्य। दर्शान्तमासस्य मलमासत्वं साधयति प्रतिपदुपक्रान्तेत्यादि। स्वाव्यवहितप्राक्क्षणावच्छेदे शुक्लप्रतिपदमारभ्य दर्शान्तमासस्यैव एकराशिसूर्य्योपक्रान्तत्वेन स्वाव्यवहितप्राक्क्षणावच्छेदे एकराशिस्थेन सूर्य्येणारब्धत्वेन द्विराषाढ़ादिप्रयोगविषयत्वात् एकलक्षणाक्रान्तत्वेन शुद्धाशुद्धभेदेन द्विराषाढ़ादिनामकत्वात् द्विराषाढ़ः स विज्ञेयस्तूत्तरश्चोत्तमः स्मृत इत्यादिवचनेनेति शेषः। तत्प्रमाणं दर्शयति ज्योतिषे। अमावास्याद्वयम् अमावास्यान्तक्षणद्वयं रविसंक्रान्तिवर्ज्जितं रविक्रियोत्पत्तिराश्यन्तरसंयोगाभ्यां वर्ज्जितमित्यर्थः तस्मात् मुख्यचान्द्रमासस्य मलमासत्वात् पूर्णिमान्तमासः गौणचान्द्रमासः न मासपदवाच्यः न मासपदशक्यः। दूरे यौगिकत्वानुसार इति कुतो यौगिक-

लवणस्य सुवर्णतुलाभम् (१) प्रस्थमेकं चन्द्रोदये ब्राह्मणाय प्रतिपादयेत्। अनेन कर्म्मणा रूपसौभाग्ययुक्ता जायते। पौषी चेत् पुष्यायुक्ता स्यात् तस्यां गौरसर्षपकल्केन वर्त्तितशरीरः(२) गव्यघृतपूर्णेन कुम्भेनाभिषिक्तः सर्व्वौषधिभिः* सर्व्वगन्धैः सर्व्ववीजैश्च स्नात्वा घृतेन भग-

(१) चूर्णितलवणस्य सुवर्णतुलाभमिति विष्णुसंहितायां पाठः।

(२) उद्वर्त्तितशरीर इति विष्णुपुराणे पाठः।

---

त्वानुसरणम्। तथाच गौणचान्द्रमासे मासपदाशक्यत्वात् कल्पनीया तु लभते नात्मानं योगबाधत एतन्न्यायस्याविषयत्वेन गौणचान्द्रमासे सर्व्वथा योगरूढ़ित्वाभाव इति भावः। अयौगिकत्वं यौगिकत्वासम्भवम्। पञ्चदश्यां पौर्णमास्यां पञ्चदशकलाक्रियारूपत्वात्। मृगशिरःसंयुक्तायामिति अनेन मार्गशीर्षपदस्य यौगिकत्वाभावो विज्ञापितः।

* चूर्णितलवणस्य सुवर्णतुलाभं प्रस्थमेकमित्यादि। अत्र विधिमाह हेमाद्रौ व्रतखण्डे।

मार्गशीर्षे ततः प्राप्य चिरात्रोपोषितः शुचिः।
संपूज्य देवं प्रद्युम्नं हुत्वाग्नौ घृतमेव च॥
भोजयेद्ब्राह्मणांश्चात्र भोजनं लवणोत्कटम्।
चूर्णितस्य ततः प्रस्थं लवणस्य द्विजातये॥
महारजतरक्तञ्च वस्त्रयुग्मं तथा गुरोः।
दद्याच्च कनकं राजन् कांस्यपात्रं तथैव च॥
मासेन लावण्यकरं प्रदिष्टं व्रतोत्तमं नाकगतिप्रदञ्च।
न केवलं यादव सर्व्वकामान् नरस्य दद्यात् पुरुषप्रधानम्॥

क्वचिदादर्शपुस्तके सुवर्णतुलाभमिति नास्ति। हेमाद्रावपि नास्ति, परन्तु महारजतरक्तञ्च वस्त्रयुग्ममेतदस्ति। सौभाग्यलावण्ययुक्ता जायते नारीति शेषः। पौषी पौषपूर्णिमा गौरसर्षपकल्केन श्वेतसर्षपखलिना उच्छासितशरीरः उन्मर्षितशरीरः गव्यघृत-

वन्तं वासुदेवं स्नापयित्वा पुष्पगन्धधूपनैवेद्यादिभिश्च अभ्यर्च्य वैष्णवैः शाकलैर्वार्हस्पत्यैश्च मन्त्रैः पावकं हुत्वा ससुवर्णेन घृतेन ब्राह्मणं स्वस्ति वाचयेत् वासोयुग्मं तदन्ते दद्यात्(१)। अनेन कर्म्मणा पुष्यति। माघी मघा-युक्ता चेत् स्यात् तस्यां तिलैः श्राद्धं कृत्वा पूतो भवेत्। फाल्गुनी फल्गुनीनक्षत्रयुक्ता चेत् स्यात् तस्यां ब्राह्मणाय संस्कृतं स्वास्तीर्णशयनं निवेद्य भार्य्यां रूपवतीं मनोज्ञां द्रविणवतीञ्चाप्नोति, नार्य्यपि भर्त्तारम्। चैत्री चित्रायुक्ता चेत् स्यात् तस्याञ्चित्रवस्त्रप्रदानेन सौभाग्यमाप्नोति। वैशाखी विशाखायुक्ता चेत् स्यात् तस्यां पौर्णमास्यां ब्राह्मणसप्तकं क्षौद्रयुक्ततिलैः सन्तर्प्य धर्म्मराजं प्रीणयित्वा पापेभ्यः पूतो भवतीति। ज्यैष्ठी ज्येष्ठायुक्ता चेत् स्यात् तस्यां छत्रोपानहप्रदानेन गवाधिपत्यमाप्नोति। आषा-

(१) वासोयुगं कर्त्रे दद्यादिति विष्णुपुराणे पाठः।

---

पूर्णेन कुम्भेनाभिषिक्तः गव्यघृतपूर्णकुम्भस्थघृतेन मर्द्दितसर्व्वशरीरः सर्व्वौषधिभिः सर्व्वौषधि-युक्तजलैः।

सर्व्वौषधिगण उक्तो वैद्यके।

मुरा मांसी वचा कुष्ठं शैलेयं रजनीद्वयम्।
शठी चम्पकमुस्तञ्च सर्व्वौषधिगणः स्मृतः॥

एषां पत्रादीनामपि ग्रहणं कषायावयवग्रहणे मत्स्यपुराणविष्णुधर्म्मोत्तरयोः।

एषां पत्राणि साराणि मूलानि कुसुमानि च।
एवमादीनि चान्यानि कषायाख्यगणः स्मृतः॥

ण्याम् आषाढ़युक्तायाम् अन्नपानप्रदानेन तदेवाक्षय्य-माप्नोति। श्रावण्यां श्रवणयुक्तायां* जलधेनुं† शान्तां

---

* सर्व्वगन्धैः सर्व्वगन्धयुक्तजलैः सर्व्वबीजैः यवादिसर्व्वबीजयुक्तजलैः अभ्यर्च्य पूजयित्वा वैष्णवैः विष्णुमन्त्रैः इदं विष्णुर्विचक्रमे इत्यादिमन्त्रैः शाकलैः देवकृतस्यैनसोऽवयजनमसीत्यादि सामवेदोक्ताष्टशाकलमन्त्रैः वार्हस्पत्यैः वृहस्पते: परिदीया इति वार्हस्पत्यमन्त्रैश्च पावकं हुत्वा वह्नौ होमं कृत्वा ससुवर्णेन घृतेन सुवर्णसहितघृतदक्षिणया स्वस्ति वाचयेत् स्वस्तिपदोच्चारणेन स्वीकारं कारयेत्। तदन्ते ससुवर्णघृतदानान्ते वासोयुगं वस्त्रयुगं दद्यात्। अनेन कर्म्मणा पुष्यति पुष्टियुक्तो वृद्धियुक्तो वा भवति। माघी माघपौर्णमासी तिलैः तिलादिभिः इत्यादिबहुवचनान्ता गणस्य संसूचका इति स्मरणात् तिलैरिति तिलपदोपादानं श्राद्धे तिलस्य प्राधान्यज्ञापनार्थम्। फाल्गुनी फाल्गुनपौर्णमासी तस्यां फल्गुनीयुक्तपौर्णमास्यां संस्कृतं संस्कारयुक्तं स्वास्तीर्णम् आस्तीर्णमिति क्वचित् पाठः आस्तरणयोग्यं विस्तृतं शयनं शीयते अस्मिन् शयनं शय्यां निवेद्य दत्त्वा मनोज्ञां मञ्जुलां द्रविणवतीं धनवतीम्। नारी वरेत् तादृशव्रतं करोति तदा धनिनं भर्त्तारं प्राप्नोतीत्यर्थः। चैत्री चैत्रपूर्णिमा क्षौद्रयुक्ततिलैः मधुयुक्ततिलैः। धर्म्मराजानमिति आर्षं धर्म्मराजः पितृपतिरित्यादि कोषात्। ज्यैष्ठी ज्यैष्ठपूर्णिमा उपानत् चर्म्मपादुका गवाधिपत्यं गोस्वामित्वं गोधनं प्राप्नोतीत्यर्थः। आषाढ्याम् आषाढ़पौर्णमास्यां तदेव अन्नपानादिकमेव अक्षय्यं क्षयरहितम्। श्रावण्यां श्रावणपौर्णमास्याम्।

† जलधेनुमाह—होता उवाच।

जलधेनुं प्रवक्ष्यामि पुण्येऽह्नि विधिपूर्व्वकम्।
गोचर्म्ममात्रं भूभागं गोमयेनोपलेपयेत्॥
तत्र मध्ये च राजेन्द्र पूर्णकुम्भन्तु विन्यसेत्।
जलपूर्णसुगन्धाढ्यं कर्पूरागुरुचन्दनैः॥
वासितां गन्धतोयेन तां धेनुं परिकल्पयेत्।
वत्सं तथापरं कल्प्यं घृतेन परिपूरितम्॥

वर्द्धनीकं महाराज पञ्चपुष्पैः समन्वितम्।
दूर्व्वाङ्कुरैरुपस्तीर्य्य स्रग्दामैश्च विभूषितम्॥
पञ्चरत्नानि निःक्षिप्य तस्मिन् कुम्भे नराधिप।
मांसीमुशीरं कुष्ठञ्च तथा शैलेयवालुकम्॥
आमला सर्षपाश्चैताः सर्व्वधान्यानि पार्थिव।
चतुर्दिक्ष्वपि पात्राणि चत्वार्य्येव प्रकल्पयेत्॥
एकं घृतमयं पात्रं द्वितीयं दधिपूरितम्।
तृतीयं मधुनश्चैव चतुर्थं शर्करावृतम्॥
सुवर्णं मुखचक्षूंषि शृङ्गं कृष्णागुरूणि च।
प्रशस्तपत्रश्रवणां मुक्ताफलमयेक्षणाम्॥
ताम्रपृष्ठां कांस्यदोहां दर्भरोमसमन्विताम्।
पुच्छं सूत्रमयं कृत्वा कृष्णाभरणघण्टिकाम्॥
कम्बलं पुष्पमालाञ्च गुडास्यां शुक्तिदन्तिकाम्।
जिह्वां शर्करया कृत्वा नवनीतेन च स्तनम्॥
इक्षुपादान्तु राजेन्द्र गन्धपुष्पोपशोभिताम्।
कृष्णाजिनोपरि स्थाप्य वस्त्रैराच्छादितान्तु ताम्॥
गन्धपुष्पैः समभ्यर्च्य विप्राय विनिवेदयेत्।
एवं धेनुं तदा दत्त्वा ब्राह्मणे वेदपारगे॥
साधुविप्राय राजेन्द्र श्रोत्रियायाहिताग्नये।
तपोवृद्धे वयोवृद्धे दातव्या च कुटुम्बिने॥
यो ददाति नरो राजन् यः पश्यति शृणोति च।
प्रतिगृह्णाति यो विप्रः सर्व्वे मुच्यन्ति पातकात्॥
ब्रह्महा पितृहा गोघ्नः सुरापो गुरुतल्पगः।
विमुक्तः सर्व्वपापेभ्यो विष्णुलोकं स गच्छति॥
योऽश्वमेधेन यजते समाप्तवरदक्षिणः।
जलधेनुञ्च यो दद्यात् सममेतन्नराधिप॥

वासोयुगाच्छादितां गां दत्त्वा स्वर्गलोकमाप्नोति। प्रौष्ठपद्यां प्रौष्ठपदयुक्तायां गोदानेन सर्व्वपापविमुक्तो भवतीति। आश्वयुज्याम् अश्विनीगते चन्द्रमसि घृतपूर्णं भाजनं सुवर्णयुक्तं विप्राय दत्त्वा दीप्ताग्निर्भवति। कार्त्तिकी चेत् कृत्तिकायुक्ता स्यात् तस्यां सितमुक्षाण-मन्यवर्णं वा शशाङ्कोदये सर्व्वरत्नगन्धोपेतं ब्राह्मणाय दद्यात्, कान्तारभयं न पश्यतीति वचनम्*।

अत्र चेदित्यादिपदेभ्यो नक्षत्रयोगस्य पौर्णमास्यां कादाचित्कत्वावगमात् नित्यवन्मार्गशीर्षादिपदप्रयोगनिमित्तत्वानुपपत्तेः†।

---

गवाहारस्त्वेकदिनं तिष्ठेत्तु जलधेनुदी-
ऽप्यका हविस्त्वेकदिने यः पयोव्रतमास्थितः।
याहकोऽपि चिरान्नं वै तिष्ठेदेवं न संशयः॥
यत्र क्षीरवहा नद्यो मधुपायसकर्द्दमाः।
यत्र चाप्सरसां गीतं तत्र यान्ति जलप्रदाः॥
दाता च दापकश्चैव प्रतिग्राही च यो द्विजः।
ते सर्व्वे पापनिर्म्मुक्ता विष्णुलोकञ्च प्राप्नुयुः॥

इति वाराहे जलधेनुमाहात्म्यनामाध्यायः।

* प्रौष्ठपद्यां भाद्रपौर्णमास्याम्। आश्वयुज्याम् आश्विनपौर्णमास्याम्। भाजनं पात्रं दीप्ताग्निः अजीर्णत्वक्शून्यो भवतीत्यर्थः। कार्त्तिकी कार्त्तिकपौर्णमासी। सितं श्वेतम् उक्षाणं वृषम्। अन्यवर्णं कृष्णादिवर्णम्। शशाङ्कोदये चन्द्रोदये। सर्व्वशस्यरत्न-गन्धोपेतं धान्ययवादिसर्व्वशस्ययुक्तं रत्नगन्धोपेतं सुवर्णचन्दनयुक्तम् एतद्द्वयम् उक्षविशेषणम्। कान्तारभयं दुर्गवर्त्मभयं कान्तारो वर्त्म दुर्गममित्यमरः।

† अत्र चेदित्यादिपदेभ्यः यद्यर्थकचेदित्यादिशब्देभ्यः मार्गशीर्षादिपदप्रयोगनिमि-त्तत्वानुपपत्तेरिति। तथाहि मृगशिरसा युक्ता पौर्णमासी मार्गशीर्षी सा यस्मिन् मार्गशीर्षः।

अथ द्विभत्रिभत्वान्मासानां नक्षत्रान्तरयोगेऽपि तत्तत्पदप्रवृत्ते-श्चेच्छब्दस्योपपत्तिरिति। तन्न आषाढ्यामाषाढ़युक्तायाम् अन्न-पानदानेन तदेवाक्षय्यमाप्नोतीति न स्यात् आषाढ़द्वयमन्तरेणा-षाढ़ीपदाप्रवृत्तेः* आषाढ्यामित्यभिधायाषाढ़युक्तायामिति पुन-रभिधानानुपपत्तेः† आषाढ़योगादेवाषाढ़त्वात्।

तथा पद्मपुराणम्।

कार्त्तिक्यान्तु यदा ऋक्षमाग्नेयं भवति क्वचित्।
महती सा तिथिर्ज्ञेया स्नानदानादिकर्म्मसु॥

आग्नेयं कृत्तिका तद्युक्तपौर्णमास्या एव कार्त्तिकीत्वात् यदेति

---

एवंरीत्या यद्ययं मार्गशीर्षादिशब्दो यौगिकः तदा मार्गशीर्षादिपदादेव तत्पौर्णमास्यां तत्तन्नक्षत्रयोगस्य प्राप्तेः मार्गशीर्षपञ्चदश्यां मृगशिरसा युक्तायामित्यनुवादापत्तेः। एवं पौषी चेदित्यादि यद्यर्थकचेच्छब्दप्रयोगानुपपत्तेश्च न नैमित्तिकत्वममीषामिति भावः।

* तत्तन्माससंज्ञकनक्षत्राभावेऽपि चान्द्रमासशब्दस्य नैमित्तिकत्वं व्यवस्थापयति अथेति। द्विभत्रिभत्वात् अन्त्योपान्त्यः त्रिभः ज्ञेय इत्यादिवचनेन नक्षत्रद्वितयत्रितयज्ञापनात् नक्षत्रान्तरयोगेऽपि माससंज्ञकभिन्नापरनक्षत्रयोगेऽपि तत्तत्पदप्रवृत्तेः पौषमाघादिपदप्रवृत्तेः मासानामित्यनेनास्य सम्बन्धः चेच्छब्दस्योपपत्तिर्न वैयर्थ्यमित्यर्थः। दूषयति तन्नेति। आषाढ्याम् आषाढ़युक्तपूर्णिमायाम् अक्षय्यम् अक्षयम् आषाढ़द्वयमन्तरेणाषाढ़ीपदाप्रवृत्तेरिति पूर्व्वोत्तराषाढ़ाभ्यां नक्षत्राभ्यां विना आषाढ़ीपदस्याव्युत्पन्नत्वात्। तथाच अन्त्योपान्त्य इति वचनेन द्विभविधानेऽपि आषाढ़पदप्रवृत्तौ पूर्व्वोत्तराषाढ़योरेव प्राप्तेः आवश्यकत्वमिति भावः।

† तथाचान्यचान्यनक्षत्रयोगेन कार्त्तिक्यादिप्रयोगसिद्धौ चेदित्यादि शब्दप्रयोगोप-पत्तिसम्भवेऽपि पूर्व्वोत्तराषाढ़योरन्यतरयोगेनैवाषाढ़ीपदव्युत्पत्तेराषाढ्यामित्यनेनैव पूर्व्वोत्त-राषाढ़योगसिद्धेः पुनराषाढ़युक्तायामित्यस्यानुवादकतया वैयर्थ्यस्य दुष्परिहार इति भावः।

क्वचिदिति वचनं न स्यात्* तस्य तत्र नित्यसम्भवात्। तस्मात् कार्त्तिकादिपदानि निमित्तान्तरादेव न तु यौगिकानि कार्त्तिकाद्येः पौर्णमास्यः कार्त्तिक्यादिका इति सिद्धम्। भारतेऽपि माससम्बन्धेनैव पौर्णमासीनां महाफलत्वावगमात्।

यथा।

आषाढ़े कार्त्तिके वापि माघवैशाखयोरपि।
पौर्णमासीषु दातव्यं महादानं युधिष्ठिर॥

तथा मात्स्ये।

वैशाखपौर्णमास्यान्तु† ग्रहणे चन्द्रसूर्य्ययोः।
पौर्णमासी तथा माघे तस्यां दानं फलं महत्॥

तेन माघी चेत् मघायुक्ता स्यादित्यादिष्वपि सन्दिग्धेषु माससम्ब-

---

* अत्र हेतुं दर्शयति आषाढ़योगात् पूर्व्वोत्तराषाढ़योगात्। यदेति क्वचिदिति वचनं न स्यादिति इदन्तु न सम्यक्। शेषा मासा द्विभा ज्ञेयाः कृत्तिकादिव्यवस्थया इति नियमेन रोहिणीयोगेऽपि कार्त्तिकीपदप्रवृत्तेः यदेति क्वचिदिति वचनस्य सार्थक्यसम्भवात्। अत्र प्रागुक्तम् आषाढ़ीयुक्तायामिति पुनरभिधानानुपपत्तेरित्यादि दोषमात्रं साधीयः।

† माससम्बन्धेनैवेति। एवकारेण नक्षत्रसम्बन्धो व्यवच्छिद्यते। पौर्णमासीषु दातव्यं महादानमिति आषाढ़ादिमासानां पौर्णमासीषु यत् दातव्यं तन्महादानं महादानतुल्यफलजनकमित्यर्थः नतु महादानं दातव्यमिति तस्यार्थः। तथात्वे माससम्बन्धेनैव पौर्णमासीषु महाफलत्वावगमादिति ग्रन्थकारीयलिपेरसंलग्नापत्तेः। ननु ग्रन्थकारीयलिपेः साधुत्वे किं मानमिति चेन्न महादानं दातव्यमित्यन्वये दाधात्वर्थाविवक्षा स्यात् तत्सार्थक्याय मत्स्यपुराणवचनैकवाक्यतया यत्पदाध्याहारेणैव निरुक्तव्याख्यानस्य युक्तियुक्तत्वात्। पौर्णमास्यान्त्विति तुकारश्चार्थे उक्तसमुच्चयवाची।

न्यादेव पौर्णमासीनां माघीत्वादिकं निर्णीयते ।* यत्पुनः पञ्जिकाकारमिश्रैः पञ्चशारदीयस्य विषयशुद्ध्यर्थमुक्तं कार्त्तिकमाससम्भवासु विशाखानक्षत्रयोगिनीष्वमावास्यासु पञ्चभिर्वर्षैः पञ्च सुत्या भवन्तीति अत्राविच्छेदेन तावत्तथाविधामावास्या पञ्चसु वर्षेषु न प्राप्यते ।† तथाहि विशाखानक्षत्रयुक्तामावास्या तुलादित्यस्याष्टादशदिनेभ्यः परस्तादेव वृश्चिकादित्यस्य द्वादशदिनेभ्यः पुरस्तादेव परम्भवति‡ । तुलायामष्टादश-

---

* उपसंहरति तेनेति सन्दिग्धार्थेष्विति । तथाच मघायुक्ता पौर्णमासी माघी उत माघमाससम्बन्धिनी पौर्णमासी माघीति अयं सन्देहः माससम्बन्धादेव माघस्य पौर्णमासी माघीति निर्णीयते न तु मघायुक्तपौर्णमासीति । ततश्च माघीपदं रूढ़िकमेव न तु यौगिकमिति पूर्व्वपक्षिणोऽभिप्रायः ।

† मासपदस्य यौगरूढ़ित्वे पुनरपि व्यभिचारं दर्शयति यत् पुनरित्यादि । पञ्चशारदीयस्य पञ्चशारदीयनामकस्य कस्यचिद्यागविशेषस्य विषयशुद्ध्यर्थं विषयपरिदर्शनार्थं विशाखानक्षत्रानुयोगिनीषु विशाखानक्षत्रयुक्तासु । सुत्या सुत्यानामसोमकयागविशेषः पञ्चभिर्वर्षैरिति सप्तम्यर्थे तृतीया पञ्चसु वर्षेष्वित्यर्थः । सुत्या उक्ता श्रौतकात्यायने २४अ ४का १सू । यथा तापश्चितं दीक्षाः संवत्सरमुपसदश्च तथा सुत्या (१) । अत्र कर्कभाष्यम् । तापश्चितमिति सत्रनाम तत्र दीरं दीक्षावत्सरमित्यर्थः । भवन्ति उपसदः सुत्याश्च इदानीमहान्याह देवम् ।

अत्र सुत्या आह । गवामयनेनेयुः (२) । गनमेव गवामयनमेव कर्त्तव्यमित्यर्थः । अग्निष्टोमेन वा (३)। ईयुः अपूर्व्वश्चायमग्निष्टोमः नैकाहिकी न द्वादशाहिकः संस्थामात्रोपदेशात् (सं) । अग्निष्टोमसंस्थेन अग्निष्टोमसादृश्येनेत्यर्थः ज्योतिष्टोमेन पूरणं कर्त्तव्यं सुत्या भवन्ति अनुष्ठेया भवन्ति इत्यर्थः । अत्राविच्छेदेन यथाक्रमेण यथा प्रथमवर्षे न तथा द्वितीयादिवर्षे विशाखानक्षत्रयुक्तामावास्या प्राप्यते ।

‡ तथाहीति । अमावास्यायां कार्त्तिकमाससम्बन्धिन्यां प्रतिवर्षं विशाखानक्षत्रयोगा-

दिनानि चित्रास्वातीगतः सूर्य्य इति* निर्विवादम्। वृश्चिके तु द्वादशदिनेभ्यः पुरस्तादनुराधाज्येष्ठयोरेव। अतस्तेषु दिवसेषु विशाखायां यदा न चन्द्रः तदा कथममावास्या† तदन्ते सूर्य्याचन्द्रयोरेकनक्षत्रावस्थाननियमात्। तथा त्रयोदशोत्तरसहस्रशाकाब्दे तुलादित्यस्य सप्तदशदिने चित्रास्वातीव्याप्तामावास्या वृश्चिकादित्ये चानुराधाज्येष्ठाभ्यां युक्तेति। तद्वत्सरे तस्यां विशाखायोगो न वृत्त एवातो दर्शान्ते पौर्णमास्यन्ते वा कार्त्तिकपञ्चसु वर्षेषु विच्छेदेन प्राप्तेरभावाद्विच्छेदाभिप्रायं पञ्जिकाकारवचनं ग्राह्यम्। ‡ तत्र चेयं युक्तिः यदि वैशाखस्येयमिति

---

भावं दर्शयति। तुलादित्यस्य सौरकार्त्तिकस्य परस्तात् ऊर्द्ध्वं वृश्चिकादित्यस्य सौरमार्गस्य पुरस्तात् पूर्व्वम्। तुलायां सौरकार्त्तिके अष्टादशदिनानि प्राप्येति शेषः।

* चित्रास्वातीगतः सूर्य्य इति। तथाच रविर्मासं निशानाथः सपाददिवसद्वयमिति वचनेनैकमासेन नवनक्षत्रपादात्मकैकराशिभोगनियमेन विंशतिदण्डाधिकत्रयोदशदिनै रविणा एकनक्षत्रं भुज्यते। ततश्च सौरकार्त्तिकस्याष्टादशदिनैः चित्रास्वात्योः नक्षत्रयोः भोगः समाप्यते।

† निर्विवादमिति। सौरकार्त्तिकस्याष्टादशदिनात् परं सूर्य्याचन्द्रमसोर्विशाखगतत्वेन राश्येकांशावच्छेदेन सहावस्थानात् विशाखानक्षत्रयुक्तामावास्याया अवश्यम्भावः प्रतीयते इति भावः। वृश्चिके तु सौरमार्गे तु। पुरस्तात् पूर्व्वम्। अनुराधाज्येष्ठयोरेव सूर्य्य इति शेषः। तेषु दिवसेषु अनुराधाज्येष्ठयो रविभोगसमनियतदिवसेषु कथममावास्या अमावास्या न सम्भवतीत्यर्थः।

‡ अत्रामावास्याया असम्भवे हेतुमाह तदन्त इत्यादि। अमावास्याशेषयामे इत्यर्थः। एकनक्षत्रावस्थाननियमात् उपर्य्यधोभावापन्नयोः सूर्य्याचन्द्रमसोः समसूत्रपातन्यायेन राश्येकांशावच्छेदेन सहावस्थाननियमात् इत्यर्थः। त्रयोदशोत्तरसहस्रशाकाब्दे तुलादित्यस्य सौरकार्त्तिकस्य चित्रास्वातीव्याप्ता चित्रास्वातीभ्यां युक्ता। वृश्चिकादित्ये तु सौरमार्गे तु।

वैशाखी गृह्यते तदा वैशाखपदव्युत्पत्तिनिमित्तमणद्वयमवगम्य पुनरणन्तरेण वैशाखी प्रत्येतव्या*। तथाहि विशाखानक्षत्रयुक्ता तु एकेनैवाणप्रत्ययेनेति शीघ्रं शब्दावगतेरविच्छेदस्य† त्वशब्दार्थीभूतस्यौचित्यमात्रतोऽवगतेस्तस्य बाध एवेति तेषामभिप्रायः। पौषी चेत् पुष्यायुक्ता स्यादित्यादिषु चेच्छब्दात् पौषस्येति

---

तद्वत्सरे त्रयोदशाधिकसहस्रवत्सरे तस्याम् अमावास्यायां न वृत्त एव न प्राप्त एव। अतोऽमावास्यायां विशाखायोगाभावात् दर्शान्ते मुख्यचान्द्रे। पौर्णमास्यन्ते गौणचान्द्रे। अविच्छेदेन प्राप्तेरभावात् पञ्चसु वर्षेषु यथाक्रमेण अतिवर्षम् अमावस्यायां विशाखायोगस्याभावात् विच्छेदाभिप्रायं न क्रमनियमार्थमित्यर्थः।

* अत्र विच्छेदाभिप्रायकत्वे इयं वक्ष्यमाणा युक्तिः तां युक्तिं दर्शयति यदीति। अत्र यद्यपि कार्त्तिकमाससम्भवासु इत्युपक्रम्य विच्छेदाभिप्रायेण पञ्जिकाकारवचनं ग्राह्यमित्युक्तम् अत्रेयं युक्तिरित्युक्तौ तदुदाहरणत्वेन कार्त्तिकस्येयमिति मासपदव्युत्पत्तिप्रदर्शनं समुचितमेव न तु वैशाखस्येयमिति। तथात्वे अप्रस्तुताभिधानमपि स्यात्। तथापि पञ्जिकाकारवचने कार्त्तिकमाससम्भवास्वित्युक्तेस्तत्र कार्त्तिकीपदविरहेण सर्व्वथा व्युत्पत्तिप्रदर्शनासम्भवमाशङ्क्य वैशाख्याममावास्यायां सप्तदश मारुतीरित्यादिश्रुतौ वैशाखीपदश्रुतेः। तदेव सर्व्वथा व्युत्पत्तिकल्पनस्थानमवगम्य प्रदर्शयति यदि वैशाखस्येयमित्यादि। वैशाखपदव्युत्पत्तिनिमित्तं वैशाखपदयौगार्थसिद्धिनिमित्तम्। अण्द्वयमवगम्येति। तथाच विशाखानक्षत्रयुक्ता पौर्णमासी वैशाखी सा अस्मिन् मासे स वैशाखः इति अण्द्वयेन वैशाखपदं सिद्धमिति भावः। ततश्च पुनरणन्तरेण वैशाखी प्रत्येतव्या तथाच वैशाखस्येयमिति तृतीयाण्प्रत्ययेन वैशाखीपदं सिद्धमिति भावः।

† विच्छेदाभिप्रायं प्रकटीकरोति तथाहीति। विशाखानक्षत्रयुक्ता तु एकेन अण्प्रत्ययेन, तथाच नक्षत्रेण युक्तः कालः इति प्रथमसूत्रविहितेन अणा साधितवैशाखीतिशब्दात् विशाखानक्षत्रयुक्तपौर्णमासीरूपार्थस्यैव झटित्यवगतिमात्रं न तु विच्छेदार्थस्य अविच्छेदार्थस्य वेति भावः।

पौषीति वचनार्थः*। अथाचाप्यविच्छेदानुरोधः†। ततः संवत्सरे राजीवा आनयन्ति तांश्चैवोत्त्वः इत्यादिवचनबलात् तदा कार्त्तिके तदसम्भवात् वैशाखस्येयमिति वैशाख्यमावास्या ग्राह्या‡

---

* अविच्छेदार्थस्याप्राप्तौ हेतुमाह अशब्दार्थीभूतस्य प्रथमसूत्रविहितेन अणा साधित-वैशाखीशब्दादप्राप्तस्येत्यर्थः। ननु शब्दादप्राप्तस्य कथं बाधाशङ्का इत्यत आह औचित्य-मात्रतोऽवगतेरिति वाक्यार्थतात्पर्य्यमात्रतोऽवगतेरित्यर्थः। तथाच अशब्दार्थीभूतस्यापि वाक्यार्थतात्पर्य्यतोऽवगतिर्भवितुमर्हतीति भावः। तस्य अविच्छेदार्थस्य बाध एव अवि-वक्षा एवेत्यर्थः। तेषां पञ्जिकाकाराणाम्। पौषस्येति। पौषस्येयमिति इदमर्थे अण्प्रत्ययः न तु नक्षत्रेण युक्तः काल इति सूत्रानुसारेण पुष्ययुक्तपौर्णमासी पौषीति तथात्वे पुष्ययुक्ता चेदित्यनुवादापत्तेः चेच्छब्दवैयर्थ्यापत्तेश्च।

† औचित्यप्राप्ताविच्छेदार्थस्य विवक्षैवास्त्वित्यभिप्रेत्याह अथात्रापीति। अवि-च्छेदानुरोध इति अविच्छेदार्थस्वीकारोऽस्तु इत्यर्थः। ततः संवत्सरे इत्यादिवचनबलादिति तदा कार्त्तिके तदसम्भवादिति वैशाखस्येयमित्यादीति च। तथाहि अविच्छेदानुरोध इति तु कार्त्तिके तदसम्भवादित्यत्र हेतुः तदसम्भवात् कार्त्तिकमाससम्बन्धिन्यमावस्यायां पञ्चसु वर्षेषु अविच्छेदेन विशाखानक्षत्रयोगासम्भवादित्यर्थः। ततः संवत्सरे इत्यादि च वैशाखस्येयमित्यत्र हेतुः।

‡ तथाच वैशाख्याममावस्यायां सप्तदश मारुतीस्त्रिवर्षा अप्रवीता उपाकरोतीति श्रुतिप्राप्तवत्सतरीर्विशेषयति ततः संवत्सरे राजीवा आनयन्तीति। संवत्सरे प्रथम-संवत्सरे राजीवा राजीवपृश्नीरित्यर्थः। राजीवा राजीवाकाराणि पद्मवर्णानि पृश्नीनि मण्डलानि यासां ताः। तथाच कात्यायनश्रौतसूत्रभाष्यम्। पृश्नयो विचित्रवर्णा आलभ्यन्ते वत्सतर्य्यश्च त्रिवर्षा अप्रवीता वृषभेनाभुक्ताः पञ्चवर्णा वत्सतर्य्यः सन्ति। प्रथमे वर्षे राजीव-पृश्नयः द्वितीये नवनीतम् एवं तृतीये चतुर्थे पञ्चमे अरुणादयस्त्रयः (का. श्रौ. सू. २२ अ., ६ का., पृ. १०२१)। अपरञ्च दक्षिणा वत्सतराः पञ्चवर्णाः पृश्नयः (१२)। पृश्नयो विचित्राः। वत्सतर्य्यश्च त्रिहायण्योऽप्रवीताः पञ्चवर्णा राजीवपृश्नयः नवनीतपृश्नयः अरुणाः पिशङ्गयः सारङ्गय इति (१२)। अप्रवीता अप्रकामिताः राजीनयः पद्मपृश्नयः नवंश्नयः

नवनीतसदृशैश्चित्रैः अरुणा रक्ताः कपिलाः पिशङ्ग्यो मांसवर्णाः सारङ्ग्यो वर्णान्तरोप-ध्वस्ताः । पृश्न्यो विचित्रवर्णा वृषभेनाप्रवीताः असुक्ताः रोयः राजीवाकाराणि पद्मवर्णानि पृश्नीनि मण्डलानि यासां ताः नवनीतवर्णाः अरुणा अव्यक्तरागाः पिशङ्ग्यः कपिलाः सारङ्ग्यः वर्णान्तरोपनीताः कर्बुराः दक्षिणा भवन्ति । (२२ अ., का. ६, पृ. १०१२) ।

उक्तञ्च मीमांसादर्शनस्यैकादशाध्यायद्वितीयपादे शवरस्वामिना यथा। अस्ति पञ्च-शारदीयोऽहीनः मारुतीयः शारदीयो यः कामयेत बहु स्यामिति स एतेन यजेत इति । अत्र श्रूयते । वैशाख्याममावास्यायां सप्तदश मारुतीस्त्रिवत्सा अप्रवीता उपाकरोतीति । सप्तदश पृश्नीनुक्ष्णतान् पर्य्यग्निकृतान् प्रोक्षितानितरा आलभन्ते प्रेतरानुसृजन्ति इति । ततः संवत्सरे राजीवा आनयन्ति । तांश्चैवोक्ष्णः तान् पर्य्यग्निकृतान् पर्य्यग्निकरणं नाम आहवनीयात् उल्मुकेन पशुं पर्य्य ग्नकरोति इति इतरा आलभन्ते प्रेतरान् उत्सृजन्ति इति।

अत्र सैव चिन्ता, किमुक्ष्णामुत्सर्गः आरण्यवत् कर्म्मशेषः, अथवा प्राजापत्यवत् संस्कारकर्म्मप्रतिषेधः । तेषाञ्च सुत्यासु प्रतिप्रसवः, त्रींस्त्रीनुक्ष्णः एकैकस्मिन् अहनि आ-लभन्ते पञ्चोत्तमे इति । यदि कर्म्मशेषप्रतिषेधः प्रतिवर्षम् अन्ये उक्षाणः अथ संस्कारप्रति-षेधः, ततस्त एव पञ्चवर्षाणि उपरुध्यन्ते पुनः पुनः संस्क्रियन्ते, अन्त्यासु सुत्यासु आलभ्यन्ते इति पृ. ७२८।२९ ।

कात्यायनश्रौतसूत्रस्य त्रयोविंशाध्यायस्य चतुर्थकाण्डिकायां तृतीयसूत्रम्। पञ्चशार-दीयः । ३ । इतीयं संज्ञा । चतुर्थसूत्रमाह । तेन यक्ष्यमाणाः पञ्चवर्षाण्याश्वयुजीशुक्लेषु चतुस्त्रिंशतं पशूनालभते मारुतान् । ४ । तेनेति पञ्चशारदीयोपलक्षणम् । सं । आश्वयुजी-शुक्लपक्षे सप्तम्याम् अष्टम्यां वा । पञ्चमसूत्रमाह । वैश्वस्तोमदक्षिणालिङ्गान् । ५ । सं । वैश्वस्तोमदक्षिणाया इव लिङ्गानि येषां ते तान् । तानि च दक्षिणा वत्सतराः (२२।१९।२) । षष्ठसूत्रमाह । उक्ष्णो वत्सतरीर्वर्णानुपूर्व्येण । ६ । प्रतिवर्षम् । सं । तत्र प्रतिवर्षम् उक्ष्णो वृषभान् वर्णानुपूर्व्येण वर्णक्रमेण वत्सतरीश्चालभते । उक्षाणो वृषभाः साण्डाः सेचनसमर्थाः पञ्चवर्षाः पृश्न्यो विचित्रवर्णा आलभ्यन्ते । वत्सतर्य्यश्च त्रिवर्षा अप्रवीता वृषभेनासुक्ताः । पञ्चवर्णा वत्सतर्य्यः सन्ति—प्रथमे वर्षे राजीवपृश्न्यः, द्वितीये नवनीतम्, एवं तृतीये चतुर्थे पञ्चमे अरुणादय त्रयः (१०११ पृ.) ।

तस्याः प्रत्यब्दभावात् * यत् पुनरेतत्साधनार्थमुक्तमन्धुकेन मेषादित्यगतामावास्यायां वैशाखीपदं रूढ़ं नक्षत्रयुक्तायान्तु यौगिकं तत्पुना रूढ़ितो दुर्ब्बलमिति† तदयुक्तम्। वैशाखस्येयं वैशा-

---

अधिकरणमालाया एकादशाध्यायस्य त्रयोदशाधिकरणमाचरयति।

"उत्तोत्सर्गः किमुत्कर्षस्त्यागी वाद्योऽत्र पूर्व्ववत्।

अन्वहत्रित्वयोरुत्तमाह्न पञ्चत्वयोर्विधौ ॥ १६ ॥

वाक्यभेदाद्विशिष्टानामन्येषां कर्म्मणां विधिः।

तस्मादारण्यवच्छेषत्याग उत्सर्ग इष्यताम्" ॥ १७ ॥

अस्त्यहीनेषु पञ्चशारदीयनामकः कश्चित् पञ्चाहविशेषः। स पञ्चसु वर्षेष्वनुष्ठेयः। तत्र प्रथमे वर्षे विशाखानक्षत्रयुक्तायाममावास्यायां सप्तदश स्त्रीपशवः सप्तदशोक्षाणश्च विहितास्तेषु सर्व्वेषु प्रोक्षितेषु च सत्सु स्त्रीपशूनामालम्भं पुंपशूनामुत्सर्गश्चाम्नायः। पुनर्द्वितीये तृतीये चतुर्थे च वत्सरे तथैवानुष्ठानमाम्नायः। पश्चादाम्नायते त्रींस्त्रीनेकैकस्मिन्नहन्यालभेरन् पञ्चोत्तमेऽहनीति। तत्र वत्सरचतुष्टयगतासु चतसृषु अमावास्यासु योऽयं पशूनामुत्सर्गस्तत्र कर्म्मशेषत्यागो न भवति किन्तूत्कर्षः। त्रींस्त्रीनिति वाक्येनालम्भस्याभिधानात्। यथा पूर्व्वं प्राजापत्यानामालम्भोत्कर्षस्तथाचापि युज्यते इति प्राप्ते ब्रूमः। त्रींस्त्रीनेकस्मिन्नहन्यालभेरन्नित्यत्र पर्य्यग्निकरणानन्तरभाविनं प्राप्तमालम्भमनूद्यैकाहत्वत्रित्वगुणयोर्विधौ वाक्यं भिद्येत। तथा पञ्चोत्तमेऽहनीत्यत्रोत्तमाहत्वपञ्चत्वयोर्विधौ वाक्यभेदः। तस्माद्गुणद्वयविशिष्टानाम् अन्येषां कर्म्मणां विधिरभ्युपेयः। तथा सत्यारण्यपशुन्यायेन सप्तदशोक्षाणः पर्य्यग्निकरणप्रोक्षणाभ्यां समापनीया इति माधवाचार्य्य आह स्म। पृ. ४६१।

* वैशाख्याममावास्यायां प्रतिवर्षं प्राप्तिं दर्शयति। तस्याः प्रत्यब्दभावात् अब्दम् अब्दं प्रति प्रत्यब्दं तत्र भावात् सत्त्वात् वैशाखसम्बन्धि वैशाख्यमावास्यायाः प्रतिवैशाखं सद्भावात्।

† अन्धुकभट्टमतं दूषयितुमुत्थापयति यत् पुनरेतदित्यादि। एतत्साधनार्थं वैशाखीपदसिद्ध्यर्थम्। मेषादित्यगतायां सौरवैशाखगतायाम्। वैशाखीपदमिति तथाच वैशाखस्येयमित्यर्थे वैशाखीपदं रूढ़ं रूढ़िशक्तिविशिष्टम्। नक्षत्रयुक्तायामिति विशाखा-

खीति पदस्य क्लृप्तयोगादेव प्रवृत्तिसम्भवे समुदायशक्तिकल्पनानुपपत्तेः कथं रूढ़िता । प्रोक्षणीशब्देऽप्ययमेव* कल्पनीया तु लभते नात्मानं योगबाधत इत्युक्तत्वात्† । ननु वैशाखपदं मासवाचकं तत्सम्बन्धिनी च तिथिर्नावयवान्तरोपात्ता येनावयवशक्त्या यौगिकत्वमतो रूढ़िरेव‡ उच्यते । अण्प्रत्ययेन सहावयवद्वयं

---

नक्षत्रयुक्ता पौर्णमासी वैशाखी अतैव वैशाखीपदं यौगिकं योगरूढ़िकमित्यर्थः । न तु विशाखानक्षत्रयुक्ता वैशाखस्यामावास्या इत्यर्थे वैशाखीपदं यौगिकम् । तत्र सूर्य्यस्य मेषगतत्वेन चन्द्रस्य तुलावृश्चिकान्यतरगतत्वेन च अनयोरेकराशिस्थत्वाभावेन सौरवैशाखसम्बन्धिन्याममावस्यायां विशाखानक्षत्रयोगासम्भवात् । रूढ़ितो दुर्ब्बलमिति "लब्धात्मिका सती रूढ़िर्भवेद्योगापहारिणीति" स्मरणात् ।

* दूषयति तदयुक्तमिति । क्लृप्तयोगादेव माससम्बन्धित्वरूपक्लृप्तयोगादेव प्रवृत्तिसम्भवे शक्यत्वनिर्णयसम्भवे । तथाच वैशाखस्य इयमित्यत्र वैशाखशब्देन मास उच्यते तत्रेदमर्थविहिततद्धितप्रत्ययेन माससम्बन्धित्वमुच्यते इत्युभाभ्यामवयवाभ्यां वैशाखीपदं वैशाखमाससम्बन्धित्वबोधकत्वेन यौगिकमेव न तु समुदायशक्त्या रूढ़िकमिति भावः । अत्र दृष्टान्तं दर्शयति प्रोक्षणीशब्दे अयमेव यौगिकार्थ एव स्वीकृत इति शेषः ।

† अत्र प्रमाणं दर्शयति कल्पनीया त्वित्यादि । पूर्व्वार्द्धन्तु लब्धात्मिका सती रूढ़िर्भवेद्योगापहारिणीति । रूढ़िः शक्तिः वैदिकलौकिकप्रयोगबाहुल्येन सुप्रसिद्धा सती योगापहारिणी भवेत् । कल्पनीया शक्तिस्तु योगबाधतो योगार्थं बाधित्वा आत्मानं स्वरूपं न लभते परन्तु योगार्थसहकारेणैव रूढ्यर्थं लभते । यथा मण्डपपदं मण्डपानकर्तृत्वरूपयोगार्थं बाधित्वा गृहत्वावच्छिन्नरूपरूढ्यर्थं बोधयति । एवं पङ्कजपदं पङ्कजनिकर्तृत्वरूपयोगार्थसहकारेणैव पद्मत्वावच्छिन्नरूपयोगरूढ्यर्थं बोधयति ।

‡ वैशाख्यादिपदं रूढ़िरेव इत्याशङ्कते नन्वित्यादि । तत्सम्बन्धिनी च तिथिरिति वैशाखस्येयमित्यत्र षष्ठ्या सम्बन्धित्वमात्रबोधकतया तिथिस्तु नावयवान्तरोपात्ता न मासस्य अन्यावयवत्वेन ग्रहीतुं शक्या येन हेतुना यौगिकत्वं सेत्स्यतीति शेषः । अतः अवयवशक्त्या अर्थप्रकाशकत्वाभावात् । रूढ़िरेव एवकारेण योगरूढ़ित्वव्यवच्छेदः ।

यद्यपि तत्र श्रूयते तथापि वैशाखपदमेव षष्ठीतत्पुरुषवत्सम्बन्धिनं लक्षयति। तेन प्रकृतिपदमवयवस्थाने वर्त्तत इति यौगिकत्वम्*। यद्वा वैशाखीपदमित्यत्र प्रथमाण्प्रत्ययेन वृद्धौ भूतायामपि पुनरणन्तरेणापि दीर्घस्य स्थाने दीर्घो भवतीतिवदपरापि वृद्धिरण्विकारस्तत्सहितं वैशाखीपदं यौगिकं† लाक्ष-

---

* यौगिकत्वं व्यवस्थापयति उच्यते इत्यादि। अण्प्रत्ययेन सहावयवद्वयमिति। तथाच अण्प्रत्ययैकावयवः अपरश्च प्रकृतीभूतवैशाख एव इत्यवयवद्वयमित्यर्थः। ननु वैशाखीत्यत्र वैशाखस्येयमिदमर्थे विहितेन अणा साधितवैशाखीत्तरविहितेन ङीपा अण्लोपे कथम् अण्प्रत्ययेन सहावयवद्वयमित्याह यद्यपीति। तथापि अण्प्रत्ययलोपेऽपि षष्ठीतत्पुरुषवदिति राजपुरुष इत्यत्र षष्ठीलोपेऽपि यथा राजपदं राजसम्बन्धिनं बोधयति तथा वैशाखीत्यत्र वैशाखपदं वैशाखसम्बन्धिनं बोधयति। तेन वैशाखीपदस्य वैशाखसम्बन्धित्वरूपार्थबोधकत्वेन प्रकृतिपदं प्रकृतिपदमपि अवयवस्थाने अवयवकार्य्यकारित्वे इति हेतौ यौगिकत्वमिति। तथाच प्रकृतिपदस्य अवयवस्थानीयत्वेन सम्बन्धित्वार्थबोधकत्वात् यौगिकत्वमिति भावः।

† ननु लुप्तविभक्तेः स्मारकत्वात् राजपुरुष इत्यत्र राजपदेन राजसम्बन्धित्वार्थसम्भवेऽपि लुप्तप्रत्ययस्य स्मारकताया अदृष्टत्वात् कथं राजपुरुषदृष्टान्तेन वैशाखीपदस्य वैशाखसम्बन्धित्वार्थबोधकतासम्भवः लक्षणया चेत् लक्षणया यौगिकत्वं पदस्य कदापि न सम्भवति इत्यत आह यद्वेति। प्रथमाण्प्रत्ययेन नक्षत्रेण युक्तः काल इति सूत्रेण विशाखानक्षत्रयुक्ता पौर्णमासीत्यर्थे प्रथमाण्प्रत्ययेन पुनरणन्तरेणापीति साऽस्मिन् पौर्णमासीति संज्ञायामिति द्वितीयसूत्रविहितेन द्वितीयेन अणा वृद्धौ भूतायामित्यनुषङ्गेणान्वयः। दीर्घस्य स्थाने दीर्घो भवतीति यथा ह्रस्वस्यैव वृद्धेरौचित्येऽपि प्रकृते वैशाखी इत्यत्र आद्यचो ह्रस्वाभावेऽपि दीर्घस्य ह्रस्वत्वमुपचर्य्य यथा सूत्रबलात् दीर्घस्थाने पुनर्दीर्घो भवति तद्वत् अपरा वृद्धिः तृतीया वृद्धिः अण्विकार इति वैशाखस्येयमिति इदमर्थविहितस्य तृतीयस्याणो विकारः प्रकृतेरन्यथाभावः तृतीयेन अणा साधिता इत्यर्थः विकारशब्दस्य अजहल्लिङ्गत्वात् स्त्रीलिङ्गविशेषणत्वेऽपि न स्त्रीलिङ्गता। तत्सहितम् अण्विकारवृद्धिसहितं यौगिकमिति। तथाच

णिकमेव वा वैशाखीपदं स्वसम्बन्धिनि न तु रूढ़म्। सा चेयं लक्षणा* नक्षत्रेण युक्तः कालः सास्मिन् पौर्णमासीति संज्ञाया-मित्यण्द्वयावगमसापेक्षत्वान्नक्षत्रयोगमात्रेणामावास्या-विशेषाव-गमः शीघ्रमिति स एव वचनार्थः स्यात्†। यद्वापर-

दधि पश्यतीत्यादौ चम्पककुसुमसुवासितवसनादिवत् क्तिजनितसंस्कारादेव संख्याकर्माद्यव-गम इतिवत् अण्लोपेऽपि वृद्धिप्रयोजकीभूताणजनितसंस्कारादेव सम्बन्धित्वार्थलाभाद्यौगि-कत्वसिद्धिरिति भावः।

* ननु दधि पश्यति इत्यादौ अन्वयानुपपत्त्या क्तिजनितसंस्कारः कल्प्यः प्रकृते तु तथाविधानुपपत्त्यभावात् कथम् अण्प्रत्ययजनितसंस्कारकल्पनमित्यत आह लाक्षणिक-मेवेति। स्वसम्बन्धिनि वैशाखसम्बन्धित्वार्थबोधकत्वे। न तु रूढ़मिति। तथाच वैशा-खस्येयमिति इदमर्थविहितेन तृतीयेन अणा साधितत्वेऽपि ङीपा अण्लोपे निमित्तापाये नैमित्तिकस्याप्यपाय इति न्यायात् तादृशार्थाप्रतीतौ वैशाखीत्यत्र वैशाखीपदस्य स्वसम्बन्धित्व-लक्षणया वैशाखसम्बन्धित्वरूपलाक्षणिकार्थ एव प्रतीयते। न तु प्रमाणाभावात् रूढ्यर्थ इति भावः। सा चेयमिति। अत्र पञ्चम्यन्तयत्पदाध्याहारेणान्वयः। तथाच यतः न रूढ़िः अतः सा चेयं लक्षणा इत्यर्थः।

† नक्षत्रयुक्तायान्तु यौगिकमित्यस्यैवोक्तत्वात् तन्मतेनापि यौगिकत्वं साधयितुं वैशाख्यमावस्यायां परम्परया नक्षत्रयोगं दर्शयति नक्षत्रेण युक्तः काल इत्यादि। अण्द्वया-वगमसापेक्षत्वादिति निरुक्तसूत्रद्वयविहिताण्द्वयसाधितवैशाखज्ञानसापेक्षत्वादित्यर्थः। नक्षत्र-योगमात्रेण विशाखानक्षत्रयुक्तपौर्णमासी वैशाखी सा अस्मिन् वैशाखः तस्येयमेवम्परम्परया विशाखानक्षत्रयोगमात्रेण अमावास्याविशेषावगमः शीघ्रमिति वैशाखसम्बन्धित्वविशिष्टामा-वस्यायाः झटित्यवगतिः स एव वचनार्थः स्यात् परम्परया विशाखानक्षत्रयोगमङ्गीकृत्यैव वचनार्थः स्यात् न तु साक्षात् विशाखानक्षत्रयोगेन। तथात्वे चन्द्रस्य वृश्चिकराशिस्थत्वेन सूर्य्यस्य मेषवृषान्यतरराशिस्थतया च एकराशिस्थत्वाभावेन वैशाखस्यामावास्यायां सर्व्वथैव विशाखानक्षत्रयोगासम्भवात् सा वैशाखस्यामावास्या या रोहिण्या सम्बध्यते इति श्रुति-

मुक्तं नक्षत्रेण युक्तः काल इति नक्षत्रयुक्तपौर्णमास्येव वैशाख्यादिपदेनोच्यते न कालमात्रमिति तदप्यनागमम्*। पौषी रात्रिः पौषमहः† माघी रात्रिः माघमहः इति नक्षत्रेण युक्तः काल इत्यस्मिन्नेव सूत्रे उदाहृतत्वात् माससम्बन्धेनोदाहरणत्वानुपपत्तेः‡। माससम्बन्धस्यापक्रान्तत्वात् नक्षत्रेण युक्तयोदाहरणस्यादेयत्वात्। अन्यथा पौषी पौर्णमासीत्येवोदाहरेत् अतएव सूत्रेऽपि काल इति नोच्यते। नक्षत्रेण युक्ता पूर्णिमे-

---

विरोधाच्च। यद्यपि लक्षणया योगरूढ़ित्वकल्पनं न युक्तिसङ्गतं तथाप्यत्र सर्व्वथैव रूढ्यर्थासम्भव इति ज्ञापनार्थमिदं वागाड़म्बरमात्रं मन्तव्यम्।

* यदापरमुक्तं यदप्यपरमुक्तमित्यर्थः अन्धुकभट्टेनेति शेषः तदेवाह नक्षत्रेण युक्तः काल इति। नक्षत्रयुक्तकालार्थे अण् भवति इति सूत्रे कालपदेन सामान्यस्य विशेषपरत्वात् पौर्णमासी काल एवोच्यते। तथाच नक्षत्रेण युक्ता पौर्णमासीत्यर्थे अण् भवतीति प्रथमसूत्रार्थः। तदनागमं तत्प्रमाणशून्यम्।

† तदेव साधयति पौषी रात्रिः पौषमह इत्यादि। यदि पुष्ययुक्तपौर्णमासीत्यर्थे अण् भवतीति प्रथमसूत्रार्थः स्यात् तदा पुष्ययुक्ता या रात्रिः सा पौषी एवं पुष्ययुक्तं यदहः तत्पौषमित्याद्युदाहरणं कदापि नोपपद्यते।

‡ तदेव दर्शयति उदाहृतत्वात् पौषी रात्रिरित्यादेरिति शेषः। माससम्बन्धेनोदाहरणत्वानुपपत्तेरिति। पौषी रात्रिः पौषमहरित्यादेर्माससम्बन्धेनोदाहरणत्वानुपपत्तिः असम्भवादित्यर्थः। तथाच नक्षत्रेण युक्तः काल इति प्रथमसूत्रे यदि कालपदेन पौर्णमासी गृह्यते एवं साऽस्मिन् पौर्णमासीति संज्ञायामिति द्वितीयसूत्रेऽपि सैव गृह्यते, ततश्च सूत्रद्वयमेव माससाधकं भवेत्। प्रकृते पौषी रात्रिरित्यादेरुदाहृतत्वेन माससम्बन्धेनोदाहरणमसम्भवीति भावः।

त्येवं ब्रूयात् सास्मिन् पौर्णमासीतिवत्। धर्म्मशास्त्रेषु च तिथ्यन्तरेष्वपि प्रायशः प्रयोगः दृश्यते*।

तथाच गोभिलः।

प्रौष्ठपद्यां हस्तेनोपाकरणं तैषीमुत्सृजन्तीति।

प्रौष्ठपदी भाद्रपदस्य तिथिरनियता तस्यां हस्तेनोपाकरणं भाद्र एव तिष्यनक्षत्रयुक्ता कृष्णत्रयोदश्यादिका तैषीत्युक्ता छन्दोगानामुत्सङ्गकरणाय तिथिः पौर्णमास्येव नक्षत्रयोगात्तथोच्यते इत्यनागमम्। यच्च वैशाखमासस्य वैशाखीति ग्रहणं† काला-

---

* मासस्बन्धस्यापक्रान्तत्वादिति। पुष्ययुक्ता या रात्रिः सा पौषीत्यादौ उदाहरणचतुष्टये मासस्बन्धस्याप्राप्तत्वादित्यर्थः नक्षत्रयुक्ततया नक्षत्रयुक्तकालसामान्यबोधकतया उदाहरणस्य पौषी रात्रिरित्याद्युदाहरणस्यादेयत्वात् अयुक्तत्वादित्यर्थः। अन्यथा कालपदस्य पौर्णमासीपरत्वे यतएव सूत्रे स्पष्टार्थत्वेन पौर्णमासीपदविधानस्य समुचितत्वम् अतएवेत्यर्थः। धर्म्मशास्त्रेषु गोभिलगृह्यादिस्मृतिषु। तिथ्यन्तरेषु पौर्णमासीभिन्नतिथिष्वपि प्रायशो भूम्न एव।

† प्रौष्ठपदी भाद्रस्य तिथिरनियता इति। भाद्रपौर्णमास्यां हस्तनक्षत्रयोगस्यासम्भवादाह भाद्रस्य अनियततिथिरिति। तथाच गोभिलः। "सूर्य्याचन्द्रमसोर्यः परो विप्रकर्षः सा पौर्णमासीति"। परो विप्रकर्षः सप्तमराश्यवस्थानरूपः। ततश्च हस्तनक्षत्रस्य कन्याघटकतया तस्मिन् चन्द्रमसि सिंहे कन्यायां वा तदानीं रविस्थितौ सूर्य्याचन्द्रमसोः कदापि सप्तमराश्यवस्थानं न घटते।

विशेषतस्तु—"अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनश्च त्रिभो मतः।

शेषा मासा द्विभा ज्ञेया कृत्तिकादिव्यवस्थया॥"

अत्र कृत्तिकादिव्यवस्थया इत्यनेन उपान्त्यो भाद्रो भवति। स च त्रिभः शतभिषया पूर्व्वोत्तरभाद्रपदाभ्याञ्च युक्तः अतो भाद्रपौर्णमास्यां सर्व्वथा हस्तयोगासम्भवः। यत्र पुनर्हस्तयोगः सम्भवति भाद्रसम्बन्धि-तत्तिथिप्राप्त्यर्थम् अनियता इत्युक्तम्। भाद्र

इञिति ठञ्प्रत्ययेन वैशाखीति स्यात् इत्युपाध्यायपादानां दूषणं तदपि पौषी चेत् पुष्यायुक्ता स्यादित्यादि। कार्त्तिक्यान्तु यदा ऋक्षमाग्नेयम्भवति क्वचित्। अपरपक्षाष्टकाभिधानाय च प्रौष्ठपद्यष्टकाभ्युदय* इत्यादिभिर्मुनिभिरेव ठञ्प्रत्ययस्यानित्यता-

---

एव तिष्यनक्षत्रयुक्ता पुष्यनक्षत्रयुक्ता कृष्णत्रयोदश्यादिका भाद्रगौणचान्द्रीयकृष्णत्रयोदश्यादिका तिथिरित्यन्वयः। उक्ता इति। तथाच "सूर्य्याचन्द्रमसोर्यः परः सन्निकर्षः सामावास्या" इति गोभिलसूत्रात् परः सन्निकर्षश्च उपर्य्यधोभावापन्नयोः सूर्य्याचन्द्रमसो राश्येकांशावच्छेदेन सहावस्थानरूपः स च दर्शान्तयामाव्यभिचारी। ततश्च अमावास्याः शेषयामे तादृश-सहावस्थाननियमात् सिंहस्थसूर्य्ये भाद्रगौणचान्द्रीयकृष्णत्रयोदश्यादितिथौ कर्कटराशि-घटकपुष्यनक्षत्रयोगः कथञ्चित् सम्भवतीति भावः। उत्सङ्गकरणाय अध्ययनविरामाय।

तथाच हेमाद्रौ वचनम्।

"त्रयोदश्यादितो वर्ज्ज्यं दिनानां नवकं ध्रुवम्।
माङ्गल्येषु समस्तेषु ग्रहणे चन्द्रसूर्य्ययोः॥"

अपिच तत्रैव कात्यायनः।

"उपाकृत्योदगयने ततोऽधीयीत धर्म्मवित्।
उत्सर्गश्चैक एवैषां तैष्यां प्रौष्ठपदेऽपि वा॥"

धर्म्मविज्जनः उदगयने उत्तरायणे उपाकृत्य वेदानारभ्य अधीयीत अध्ययनं कुर्य्यात्। प्रौष्ठपदे गौणचान्द्रभाद्रे मासि पुष्यनक्षत्रयुक्तकृष्णत्रयोदश्यादितिथौ एषां वेदानाम् एक उत्सर्गः समापनमेव कर्त्तव्य इति शेषः। पौर्णमास्येव नक्षत्रयोगात् तिष्यनक्षत्रयोगात् यथा तैषीत्युच्यते तद्दनागमं प्रमाणशून्यमित्यर्थः भाद्रपौर्णमास्यां तिष्य-योगस्यासम्भवादिति शेषः। यद्वेति उपाध्यायपादानां दूषणमिति अग्रिमेण सम्बन्धः। वैशाखमासस्य वैशाखीग्रहणं वैशाखमाससम्बन्धि-वैशाखी यदि गृह्यते इत्यर्थः।

* कालाट्ठञिवीति। कालवाचिभ्यः भवाद्यर्थे ठञ्प्रत्ययो भवतीत्यर्थः। ठञ्प्रत्ययेन वैशाखीति स्यात् तदा ठञ्प्रत्ययेनैव वैशाखीति पदसिद्धिः स्यात् न तु अण्प्रत्ययेन। तथाच

विज्ञापनाददूषणम्*। प्रयोगमूलत्वात् व्याकरणस्य तद्बाधात्त्वमत्वात् शास्त्रकाराणाञ्चैवमादिप्रयोगादर्शनात्†। सामान्यतः प्राग्दीव्यतोऽणिति तत्र जातः‡ तत्र भव इत्याद्यन्यतमविहिताण्प्रत्ययेन वैशाख्यादिपदनिष्पत्तिसम्भवात्। क्वचिदपवादविषयेऽप्युत्सर्गः प्रवर्तत इति पाणिनीयानां व्यवहारादपवादकठञ्विषयेऽप्यण्प्रवृत्तेः। किञ्च वैशाखिकी ज्यैष्ठिकीत्यादिप्रयोगस्य

---

सामान्यकालवाचिभ्यो विहितठञा साधितपदस्य रूढ़िलमिति उपाध्यायपादानामाशयः। पौषी पौषपूर्णिमा। कार्त्तिक्यां कार्त्तिकपौर्णमास्याम्। आग्नेयं कृत्तिका। अपरपक्षाष्टकाभिधानाय चतुर्थ्यष्टकाभिधानाय। प्रौष्ठपद्यष्टका भाद्रमुख्यचान्द्रीयकृष्णपक्षाष्टमी।

तथाच श्राद्धविवेके।

या चाप्यन्या चतुर्थी स्यात् ताञ्च कुर्याद्विशेषतः।
वर्षासु मेध्यशाकैस्तु चतुर्थ्यामेव सर्व्वदा।
प्रौष्ठपद्यामतीतायामष्टकात्वं भविष्यति॥

चतुर्थ्यां चतुर्थ्यष्टकायामित्यर्थः।

* ठञ्प्रत्ययस्यानित्यता इति। तथाच सामान्यकालवाचिभ्य एव ठञ् भवति। यथा मासिकमार्द्धमासिकमित्यादि। विशेषकालवाचिभ्यस्तु अण् इति। यथा पौषी माघीत्यादि। अदूषणमित्यस्य तदपि इत्यनेन सम्बन्धः।

† ननु व्याकरणसूत्रानुसारादेव प्रयोगो भविष्यति कथं ठञ्प्रत्ययस्यानित्यता इत्यत आह प्रयोगमूलत्वादित्यादि। प्रयोगो मूलं यस्य तस्य भावः तस्मात् तथाच सिद्धप्रयोगस्य सिद्धपदस्य साधनार्थमेव व्याकरणस्य सूत्रं न तु व्याकरणसूत्रमेव मूलं सिद्धपदस्येति भावः। एवमादिप्रयोगादर्शनात् ठञा साधितवैशाख्यादिप्रयोगादर्शनादित्यर्थः।

‡ प्राग्दीव्यतोऽणिति। तेन दीव्यति इत्यतः प्राक् अण् अधिक्रियते इति काशिकावृत्तिः। तत्र जात इति अणादयो घादयश्च प्रत्ययाः प्रकृतास्तेषामतःप्रभृत्यर्थाः समर्थविभक्तयश्च निर्दिश्यन्ते। तत्रेति सप्तमी समर्थाज्जात इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति इत्यादि काशिकावृत्तिः।

लोके शास्त्रे चादर्शनात्* कालाट्ठञिति सूत्रे च वैशाखादिपदतत्-समानार्थस्य कालविशेषवचनस्य नाम्नोऽनुदाहृतत्वात् अवान्तरभेद-विशेषेण(१) तु सकलकालवचनस्य मासार्द्धमासमात्रस्य ठञ्प्रत्ययेन मासिकम् आर्द्धमासिकमित्येवोदाहृतत्वात् विशेषवाचिनो वैशाखादिपदात् ठञ्प्रत्ययो नास्त्येवेत्येवावधार्य्यते। तेन पूर्व्वोपन्यस्तप्रयोगा उपपन्नाः। यद्यपि च वृद्धिर्यस्याचामादिस्तद्वृद्धमिति सूत्रेण यस्येति समुदाय उच्यते, अचां मध्ये यस्य वृद्धिसंज्ञक आदिभूतस्तद्रूपं वृद्धसंज्ञं भवति, वृद्धसंज्ञा च वैशाखादीनामस्ति तेन च वृद्धाच्छ इत्यण्बाधेन छविधानात् वैशाखीयेत्यादि भवेदिति चोद्यं†, तदपि परिहृतम्। विष्णुव्यासादिमुनिप्रयोगानुपपत्तितः पूर्व्वसूत्रत्रयप्राप्तमणमेतन्न बाधते। किञ्च वृद्धिर्यस्यादिसूत्रे वा नामधेयस्येति वृद्धसंज्ञा वक्तव्या वक्तव्यत्वेन च विशेषवाचिनः पदस्य पाक्षिकी वृद्धसंज्ञा तेन देवदत्तस्येयं देवदत्तीया दैवदत्ती

(१) अवच्छेदविशेषेण तु इति क्वचिदादर्शे पाठः।

* तत्र भव इति। कालादिति निवृत्तम्। तत्रेति सप्तमी समर्थाद् ङ्याप् प्रातिपदिकाद्भव इत्येतस्मिन्नर्थे यथाविहितं प्रत्ययो भवति। सत्ता भवत्यर्थो गृह्यते न जन्म, तत्र जात इति गतार्थत्वादिति काशिकावृत्तिः। क्वचिदपवादविषये विशेषविषये उत्सर्गः सामान्यः। अपवादकठञ्विषये विशेषठञ्विषये। अदर्शनादिति तथाच वैशाखिकी ज्यैष्ठिकीत्यादि प्रयोगो न व्यवहारिक इति भावः।

† अचामिति। जातौ बहुवचनमिति काशिका। वृद्धाच्छ इत्यण्बाधेन छविधानादिति। वृद्धसंज्ञकाच्छप्रत्ययो भवति अण्बाधेन अणं बाधित्वा छविधानात् छप्रत्ययविधानादित्यर्थः। चोद्यं कुतर्कं परिहृतं दूषितम्।

वा छाण्प्रत्ययाभ्यामेषामुदाहृतं तेन वैशाखादीनां कालविशेषनामत्वेन पाक्षिकी वृद्धसंज्ञा अतो वैशाखस्येयमिति वैशाखीत्यणा सिध्यति। अतएव लोके माघीसप्तमी माघीद्वादश्यादि व्यपदिश्यते। ननु चेद्यौगिकम्, द्विभत्रिभसङ्कीर्त्तनं किमर्थमुच्यते स्वयमेव पृच्छन् योगान्नु भवतीति साधितमवगतञ्च भवता*। यद्यस्य प्रयोजनं नोपलभ्यते निरर्थकमेव। इदञ्चास्य प्रयोजनम्। यथाथर्व्ववेदमुच्चादिराष्ट्राणां विषयाणाञ्च च्यवनादीनाम्(१) नक्षत्रकीर्त्तनं तथा तत्तन्मासीयनक्षत्रोपजातदिव्यान्तरीक्षभौमापत्सूचितशुभाशुभफलविपाकज्ञापनाय मासानान्नक्षत्रकीर्त्तनं यन्मासीयनक्षत्रं पीड़यत्यनुकूलयति वा शुभाशुभनिमित्तं वा भवति तस्मिन्नेव मासि फलविपाकमवधार्य्यानिष्टप्रशमनाय नृपतेर्ब्राह्मणाः शान्तिहोमादौ प्रवर्त्तन्ते। तथा उपयामगृहीतोऽसि मधवे त्वा गृह्णामीत्यादिविहितमधुमाधवादिमासेज्यायां सनक्षत्राः साधिदेवता इज्यन्ते इति मासानां नक्षत्रकीर्त्तनप्रयोजनम् अतएव मासः कार्त्तिकोऽग्निदैवत्य इत्यादिना

(१) व्यर्थवादिनामिति क्वचित् आदर्शपुस्तके पाठः।

* पूर्व्वसूत्रत्रयप्राप्तमणं नक्षत्रेण युक्तः काल इत्यादि पूर्व्वसूत्रत्रयविहितम् अण्प्रत्ययम्। एतत् छप्रत्ययः। वा नामधेयस्येति वक्तव्या इति वार्त्तिकसूत्रम्। देवदत्तीया इति छप्रत्ययेन सिद्धं, दैवदत्ती इति अणा सिद्धम्। छाण्प्रत्ययाभ्यां छप्रत्ययेन अण्प्रत्ययेन चेत्यर्थः। द्विभत्रिभसङ्कीर्त्तनमिति अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ फाल्गुनस्य त्रिभो मतः। शेषा मासा द्विभा ज्ञेया कृत्तिकादिव्यवस्थया इति वचनेनेति शेषः। योगान्नु भवतीति इति योगानुसारेण प्रयोगो भवतीति साधितम् अवगतञ्च भवता इत्यन्वयः।

मासानान्देवताः कीर्त्तिता विष्णुना। तस्माच्चान्द्रे सौरे वा यौगिकत्वानुपपत्ते रूढ़िरेव वाच्या। तत्र सौर एव रूढ्या वाच्य इति जितेन्द्रियः। सौरचान्द्रयोः श्रुतिस्मृतिगृहीतत्वाविशेषे*-ऽप्यनेक(१)शक्तिकल्पनागौरवापत्तेरेकत्र शक्तिकल्पनायां सकल-जनप्रसिद्धेः सौरे विनिगमनाप्रमाणं सौर एव वैशाखादयो मुख्याः तदपि न मनोऽनुगतमिति दीक्षितेन दूषितं†, सर्व्वजनप्रसिद्धेऽपि राजपदस्य राज्यकर्त्तरि मुख्यत्वानङ्गीकारात्।

(१) अनेकत्र इति क्वचिदादर्शे पाठः।

* स्वयं नक्षत्रप्रयोजनं दर्शयति इदञ्चेत्यादि। इदं वक्ष्यमाणं यथाथर्व्ववेदम् अथर्व्ववेदम् अनतिक्रम्य यथाथर्व्ववेदम् उच्चादिराष्ट्राणां राज्यसम्बन्धिवृषादिपशूनां विषयाणाञ्च धनसम्पत्त्यादीनाञ्च च्यवनादीनाञ्च च्यवनप्रभृतीनाम् ऋषीणाञ्च नक्षत्रकीर्त्तनमिति। तथाच अथर्व्ववेदे। राष्ट्रसम्बन्धिवृषादीनां धनसम्पत्त्यादीनाञ्च शुभाशुभज्ञापनार्थं च्यवनादिभिः ऋषिभिः नक्षत्रकीर्त्तनम्। दिव्यानां स्वर्गीयाणां देवसम्बन्धिनीनामित्यर्थः अन्तरीक्षाणाम् आकाशसम्बन्धिनीनां भौमानां भूमिसम्बन्धिनीनाम् आपदां आपत्सूचितशुभाशुभानाम् इत्यर्थः। मधुमाधवादिमासेज्यायां चैत्रवैशाखादिमासविहितयागे। सनक्षत्राधिदेवता नक्षत्रेण सहाधिदेवताः। मासः कार्त्तिकोऽग्निदैवत्य इत्यादिनेति तथाच विष्णुः मासः कार्त्तिकोऽग्निदैवत्यः। अग्निश्च सर्व्वदेवानां मुखं तस्मात्तु कार्त्तिकं मासं वहिःस्नायी गायत्रीजपनिरतः सकृदेव हविष्याशी संवत्सरकृतात् पूतो भवतीत्यादि। तस्मात् व्यभिचारात् सर्व्वदा योगाप्रसक्तेः। सौर एव न चान्द्रो रूढ्या वाच्यः निरूपदमासपदशक्यः। श्रुतिस्मृतिगृहीतत्वाविशेषेऽपि सा वैशाखस्यामावास्या या रोहिण्या सम्पद्यते। मधुश्च माधवश्च वासन्तिकावृतुरित्यादिश्रुत्या, इन्द्राग्नी यत्र हूयेते मासादिः स प्रकीर्त्तितः इत्यादिस्मृत्या, तपस्तपस्यौ शिशिरौ इत्यादिस्मृत्या च चान्द्रसौरयोः परिग्रहाविशेषेऽपि।

† अनेकशक्तिकल्पनागौरवापत्तेरिति। सौरे चान्द्रे च उभयत्र मासपदशक्तिकल्पने अन्याय्यश्चानेकार्थ इति न्यायेन नानाशक्तिकल्पनागौरवापत्तेः। सकलजनप्रसिद्धिः बहु-

तदुक्तं* वार्त्तिककारपादैः।

न चाल्पत्वबहुत्वाभ्यां प्रयोक्तॄणां विशिष्यते।
वाच्यवाचकभावोऽयमक्षपादादिशब्दवत्† ॥
विभीतके अक्षशब्दो यद्यप्यल्पैः प्रयुज्यते।
तथापि वाचकस्तस्य ज्ञायते शकटाङ्गवत् ॥

"अथ राज्ञः कर्म्म राज्यमिति" पाणिनिना व्युत्पादितत्वात् अप्रसिद्धे च राजनि तत्कर्म्मनिरूपणात्। क्षत्रियजातिरेव तत्र राजपदस्यार्थ इति अत्र न कश्चिद्विरोधः‡। नैतदत्रापि पाणिनिनैव

---

संवादित्वं प्रयोगबाहुल्यं सौरे सौरे शक्तिकल्पने विनिगमनाप्रमाणम्। एकत्र पक्षपातिनी युक्तिर्विनिगमना तदेव प्रमाणं विनिगमकमित्यर्थः। दीक्षितेन दीक्षितनाम्ना निबन्धकारेण।

* सकलजनप्रसिद्धिरिति। सौरशक्तिकल्पने यत् विनिगमनाप्रमाणमुक्तं तत्र व्यभिचारं दर्शयति सर्व्वजनप्रसिद्धेऽपीति। राज्यकर्त्तरि राज्ञः कर्म्म राज्यं तत् करोतीति राज्यकर्त्ता तस्मिन् राज्यकर्त्तरि मुख्यत्वानङ्गीकारात् शक्यत्वास्वीकारात्। तदुक्तं प्रयोगबाहुल्यं न शक्तिग्राहकमानमित्युक्तम्।

† न चाल्पत्वबहुत्वाभ्यामिति। प्रयोगानाम् अल्पत्वबहुत्वाभ्यां न विशिष्यते न सङ्कोच्य विशेषपरतया न गृह्यते। अयं वाच्यवाचकभावः वाच्यवाचकत्वम्। अक्षपादादिशब्दवत् अक्षस्य पादस्य तदादिवत्।

‡ अत्राक्षशब्दरूपं दृष्टान्तं विवृणोति विभीतक इति। बहेड़ा इति ख्याते द्रव्यविशेषे। तस्य विभीतकशब्दस्य शकटाङ्गवत् शकटाङ्गस्येव। एवञ्च यत्रानुशासनं विना अल्पप्रयोगस्तत्रैव शक्तेरस्वीकारेण भूरिप्रयोगेण शक्तिकल्पनमिति भावः। तस्य विभीतकस्य शकटाङ्गं चक्रद्वयधारणदण्डः। अप्रसिद्धे च क्षत्रियभिन्नेऽपि तत्कर्म्मनिरूपणात् राज्यकर्म्मदर्शनात् राजपदस्यार्थः राजपदशक्यार्थः। न कश्चिद्विरोध इति। तथाच राज्यकर्त्तरि शक्तिस्वीकारे राज्यकर्त्तुरनियततया कर्त्तृभेदेन शक्यतावच्छेदकधर्म्मभेदादनु-

सास्मिन् पौर्णमासीति संज्ञायां विशाखादिनक्षत्रयुक्तपूर्णिमा-
योगात् वैशाखादिशब्दानां व्युत्पादनात् सौरेषु आश्विनपौषमाघे-
ष्वश्विनीपुष्यमघायुक्तपूर्णिमानां सर्व्वथैवासम्भवात्*। चान्द्रे तु
कादाचित्केनापि योगेनात्यन्तयोगव्यावृत्त्या† विशेषणत्वसम्भवात्

---

गमः स्यात् क्षत्रियजातौ शक्तिस्वीकारे तु शक्यतावच्छेदकस्य क्षत्रियत्वस्य जातित्वेनानुगत-
तया सर्व्वसम्मतं भवतीति भावः।

* नैतदिति। जितेन्द्रियेण मासपदस्य सौरे रूढिशक्तिरुक्ता। तत्र च सकलजन-
प्रसिद्धिः विनिगमना प्रमाणं हेतुरित्युक्तम्, दीक्षितेन तु तत्र सर्व्वजनप्रसिद्धेः शक्तिग्राहकत्वे
व्यभिचारमात्रं प्रदर्शितम् इदानीन्तु। मूलकारः स्वमतं परिष्कर्त्तुमापाततः सौरशक्तौ प्रति-
बन्धिं दर्शयित्वा चान्द्रशक्तिं प्रमाणयितुं विचारमारभते नैतदत्रापीति। वैशाखादिशब्दानां
वैशाखादिमासपदानां व्युत्पादनात् यौगिकत्वप्रतिपादनात् आश्विनपौषमाघेषु आश्विनपौष-
माघमासत्रयमात्रेषु सर्व्वथैवासम्भवादिति। तथाच सूर्य्याचन्द्रमसोर्यः परो विप्रकर्षः सा
पौर्णमासीति गोभिलसूत्रात् सौराश्विने अश्विनीनक्षत्रस्य मेषघटकतया तस्मिन् चन्द्रे
कन्याराशौ रवौ च एवं सौरपौषे पुष्यनक्षत्रस्य कर्कटघटकतया तस्मिन् चन्द्रे धनुषि रवौ च
एवं सौरमाघे मघानक्षत्रस्य सिंहघटकतया तस्मिन् चन्द्रे मकरराशौ सूर्य्ये च षड़ष्टकेना-
वस्थानात् तेषु सौरमासेषु तेषु नक्षत्रेषु च सर्व्वदैव पूर्णिमायोगस्यासम्भवेन सास्मिन् पौर्ण-
मासीति सूत्रस्याविषयत्वात् सा व्युत्पत्तिर्न घटते इति। अश्विनीनक्षत्रयुक्ता पौर्णमासी
आश्विनीति विशेषणं मासस्य कदापि न सम्भवतीति भावः।

† चान्द्रेत्विति। चान्द्राश्विनादौ कादाचित्केनापि योगेनेत्यादि। तथाच तुलादौ
चान्द्राश्विनीयपौर्णमास्याम् अश्विनीयोगः सम्भवत्येव। तत्र तुलास्थे सूर्य्ये अश्विन्या मेषघटकतया
तस्मिन् चन्द्रे सति सप्तमराश्यवस्थानात् एवं चान्द्रपौषीयपौर्णमास्याः मकरे सम्भवात् चान्द्र-
माघीयपौर्णमास्याश्च कुम्भे सम्भवाच्च तत्र मकरस्थे कुम्भस्थे च सूर्य्ये पुष्यनक्षत्रस्य कर्कटघटक-
तया एवं मघानक्षत्रस्य सिंहघटकतया च तस्मिन् तस्मिन् चन्द्रे सति सूर्य्याचन्द्रमसोः सप्तम-
राश्यवस्थानात् एवमपरापरचान्द्रमासीयपौर्णमास्यामपि तत्तन्माससंज्ञकनक्षत्रयोगः सम्भव-

पाणिनिपुरस्काराय मेषाद्युपक्रान्ताश्च प्रतिपदादिदर्शान्ताश्चान्द्रा एव मुख्या वैशाखादयः*। तथा सा वैशाखस्येत्यादि श्रुत्या चान्द्रस्यैव वैशाखस्य निर्द्दिष्टत्वात् वाच्यसन्देहे यववराहादिन्यायेनैव तदवगम इति चान्द्रो वैशाखः। तत्सामान्यादितरेष्वपि तथात्वमिति न्यायात् ज्यैष्ठादयोऽपि चान्द्रा एव मुख्याः। सौरस्तु मेषादित्वारब्धत्वगुणयोगाद्गौण इति चेदतिदूषणं तपस्तपस्यादिश्रुत्या सौराणां माघादिद्वादशमासानामेव निर्द्दिष्टत्वात्†। ननु न ते माघादिपदैर्निर्द्दिष्टाः सत्यं तपस्तपस्यादिपदानां

---

त्येव। ततश्च कादाचित्केनापि योगेन अत्यन्तायोगव्यावृत्त्या तदत्यन्ताभावाभावरूपयोग्यतावलम्बनेनेत्यर्थः।

* विशेषणत्वसम्भवादिति। वैशाख्यादिपौर्णमास्याश्चान्द्रमासविशेषणत्वसम्भवात् तथा च चान्द्रवैशाखादिपौर्णमास्याः विशाखादिमाससंज्ञकनक्षत्रयोगसम्भवात् विशाखानक्षत्रयुक्तपौर्णमासी वैशाखी सा अस्मिन् वैशाखः। अत्र वैशाख्याश्चान्द्रमासविशेषणत्वं स्पष्टमवगम्यते। सौरे तु पौषमाघाश्विनपौर्णमास्याः पुष्यादिनक्षत्रयोगस्यासम्भवात् पौष्या माघ्या आश्विन्याश्च पौर्णमास्याः पौषादिमासविशेषणत्वं कदापि न सम्भवतीति भावः। पाणिनिपुरस्काराय पाणिनिसम्मताय। मेषाद्युपक्रान्ताः मेषादिस्थरव्यारब्धाः मुख्या मासपदशक्याः।

† श्रुत्या उपपादयति सा वैशाखस्येति। सा वैशाखस्यामावास्या या रोहिण्या सम्पद्यते इति निर्द्दिष्टत्वाविधेयत्वात् वाच्यसन्देहे शक्यसन्देहे एव यववराहन्यायस्तु प्राक् प्रदर्शितः तदवगमः शक्यावधारणं तथाच अत्र श्रुत्यादिभिश्चान्द्र एव मासपदशक्तौ निर्णीतायां सत्यां न न्यायावसर इति भावः। चान्द्रो वैशाखः सा वैशाखस्य अमावास्या इति श्रुतौ वैशाखः चान्द्र एवेत्यर्थः या रोहिण्या सम्बुध्यते इत्यनेन वृषराशिघटकरोहिणीयोगस्य अमावास्यायां वृषराशौ सौरज्यैष्ठ एव सम्भवति न तु कदापि मेषराशौ सौरवैशाखे तत्र सूर्य्याचन्द्रमसोरेकराश्यवस्थानाभावात्। तथाच गोभिलः। सूर्य्याचन्द्रमसोर्यः परः सन्निकर्षः सामावास्या इति। परः सन्निकर्षश्च उपर्य्यधोभावापन्नयोः सूर्य्याचन्द्रमसो राश्येकांशावच्छेदेन सहावस्था-

लोकतः भागुरिवचनात् कोषकारस्मरणाच्च माघादिपर्य्यायत्वावधारणात् यो हि* रोहिणीं लोकसिद्धामेव प्राजापत्यनक्षत्रवचनतामादाय चान्द्रस्य वैशाखमात्रस्य श्रुत्या परिग्रहणं वदति स कथं लोकशास्त्रप्रसिद्धम् माघादिपर्य्यायत्वं तपस्तपस्यादीनां बाधते†। भूयसामनुरोधेन रोहिणीपदस्यैव प्राजापत्यनक्षत्रवचनत्वं कुतो न बाधते‡। तस्माच्चान्द्रसौरयोरुभयोरपि श्रुति-

---

नम्। तत्सामान्यादितरेष्वपि तथात्वमिति। तथाच वैशाखस्य श्रुतौ चान्द्र एव प्रयोगात् तत्सामान्यात् तत्साधारण्यात् इतरेषु ज्यैष्ठादिष्वपि मासेषु तथात्वं चान्द्रशक्यत्वम्। मुख्या मासपदशक्या इत्यर्थः। अतिदूषणम् अतिमन्दम्। निर्द्दिष्टत्वात् विहितत्वात्।

* भागुरिवचनादिति। तपस्तपस्यौ शिशिरौ तौ मासौ माघफाल्गुनौ। कोषकारस्मरणादिति। तपा माघेऽथ फाल्गुने स्यात्तपस्यः फाल्गुनिकः स्याच्चैत्रे चैत्रिको मधुरित्यादि। माघादिपर्य्यायत्वावधारणादिति। तपस्तपस्यादिशब्दानां माघफाल्गुनादेः पर्य्यायत्वस्य विभिन्नपदेन एकार्थाभिधायकतया सह पठितत्वस्य निश्चयात्। यो हीति यो विरुद्धवादीत्यर्थः वदति इत्यनेनास्य सम्बन्धः।

† रोहिणीपदस्येति। या रोहिण्या सम्बध्यते इति श्रुतिस्थरोहिणीपदस्य प्राजापत्यनक्षत्रवचनतां प्रजापतिर्देवता अस्येति देवतार्थे तद्धितप्रत्ययात्। अश्वियमदहनकमलज इत्याद्यभिधाय ईश्वराभानामिति वचनेन रोहिण्याः प्रजापतिदेवताकत्वात् प्राजापत्यनक्षत्रवाचकतामादाय। श्रुत्या सा वैशाखस्यामावास्या या रोहिण्या सम्बध्यते इति श्रुत्या। वैशाखमात्रस्येति तत्श्रुतौ ज्यैष्ठादिपदाश्रवणादिति भावः। स च विरुद्धवादी। लोकशास्त्रप्रसिद्धमिति एतत्पर्य्यायत्वविशेषणम्। तपस्तपस्यादीनामिति सम्बन्धे षष्ठी माघादिपर्य्यायत्वमित्यनेनास्य सम्बन्धः बाधते इति कथं वदतीत्यन्वयः।

‡ एतदेव साधयति भूयसामनुरोधेनेति। विरुद्धधर्म्मसमवाये भूयसां सधर्म्मकत्वमिति न्यायेनेति शेषः। रोहिणीपदस्येत्यादि। तथाच तपस्तपस्यौ शैशिरावृतुरित्यादिश्रुत्या पर्य्यायद्वारा माघादिद्वादशमासानां सौराणामेव प्रतिपादनात् विरुद्धधर्म्मसमवाये

परिगृहीतत्वात् नास्ति यववराहन्यायः*। किञ्च वैशाखपदवाच्यसन्देहे यववराहपदस्येव वैशाखपदस्य भवति नियामिका श्रुतिः न तु तदन्येषाम्†। न ह्यन्यदीयवाक्यशेषेणान्यसंशयोऽपनीयते तत्सामान्यादिति न्यायेन च‡ लोकशास्त्रप्रसिद्धतप-

---

भूयसां सधर्मकत्वमिति न्यायेन बहूनामनुरोधात् रोहिणीपदस्यैव प्राजापत्यनक्षत्रवचनत्वं कथं न बाधते तथाच पर्य्यायद्वारा वैशाखादिद्वादशमासानां सौरत्वावगमात् सौरे च वैशाखे अमावास्यायां रोहिणीयोगस्यासम्भवात् बहूनामनुरोधात् वरं रोहिणीपदस्य लक्षणया अश्विन्यादिपरत्वमस्तु इति भावः।

* नास्ति यववराहन्याय इति। तथाच वाच्यसन्देह एव यववराहन्यायस्य दृष्टान्तत्वसम्भवात् अत्र सौरचान्द्रयोरप्युभयोरेव श्रुतिपरिगृहीतत्वेन वाच्यसन्देहाभावात् नात्र यववराहन्यायावसर इति भावः। स च न्यायः प्राक् दर्शितः, पश्चादपि दर्शितो भविष्यति।

† ननु वैशाखमात्रस्य श्रुतिपरिगृहीतत्वेन तया श्रुत्या वैशाखपदस्य उपलक्षणतया ज्यैष्ठादिपरिग्रहो न भवितुमर्हति इत्याशङ्कते किञ्चेति। वैशाखपदवाच्यसन्देहे इति वैशाखपदं चान्द्रे शक्तम् उत सौरे इत्येवंरूपवाच्यसन्देहे इत्यर्थः। यववराहपदस्येव तथाच यवपदस्य दीर्घशूके आर्य्यव्यवहारः प्रियङ्गुषु म्लेच्छव्यवहारः। वराहपदस्य शूकरे आर्य्यव्यवहारः कृष्णशकुनौ म्लेच्छव्यवहारः। अतो यववराहपदयोर्वाच्यसन्देहे यत्रान्या ओषधयो म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्तीति वराहं गावोऽनुधावन्तीति श्रुती एव नियामिके वाच्यसन्देहनाशिके इत्यर्थः। ततश्च एते यवाः मोदमानास्तिष्ठन्तीति वाक्यशेषात् यवपदस्य दीर्घशूके वराहं गावोऽनुधावन्तीति वाक्यशेषात् वराहपदस्य शूकरे शक्तिग्रहस्तथा वैशाखपदस्य वाक्यसन्देहे सा वैशाखस्यामावास्या इति श्रुतौ वैशाखपदश्रुतेः वैशाखमात्रस्यैव वाच्यनिर्णये सैव श्रुतिर्नियामिका न तु ज्यैष्ठादीनां वाच्यनिर्णये इत्यर्थः।

‡ अत्र हेतुं दर्शयति न ह्यन्यदीयेत्यादि। वाक्यशेषस्य संशयनिरासकत्वेऽपि यत्र यो वाक्यशेषः स च तद्वाक्यगतपदस्यैव वाच्यसंशयमपनयति न तु भिन्नवाक्यीयस्येत्याह न ह्यन्यदीयवाक्यशेषेणेत्यादि। तत्सामान्यादिति न्यायेन चेति अपनीयते इति प्राक्तनेन

स्तपस्यादिपर्य्यायतया माघादिशब्दानामवधृतसौरवचनत्वबाधे* यववराहादिषु म्लेच्छप्रसिद्धे†र्बाधादप्येकनियतामरकोषादिष्वपि

सम्बन्धः तथाच न्यायस्य शाश्वती दुर्व्वललादन शुक्रश्च शुचिश्च ग्रैष्मावृतुरित्यादि श्रुत्या पर्य्यायद्वारा ज्यैष्ठादीनां सौरे वाचत्वनिर्णयात् सन्देहाभावेनात्र न्यायानवसर इति भावः।

* अन्यदीयवाक्यशेषादेरन्यसन्देहनिरासकत्वे प्रतिबन्धिमाह लोकशास्त्रप्रसिद्धेति। लोकशास्त्राभ्यां प्रसिद्धा तपस्तपस्यादेर्या पर्य्यायता तया अवधृतसौरवचनत्वबाधे अवधृतसौरशक्तेर्बाधस्वीकारे इत्यर्थः। तथाच सा वैशाखस्यामावास्या इति श्रुतौ श्रौतत्वया वैशाखपदस्य चान्द्रवैशाखपरत्वेन शक्तौ निर्णीतायामपि वैशाखपदस्योपलक्षणतया तपस्तपस्यौ शैशिरावृतुरित्यादि श्रुत्या तपस्तपस्यादीनां सौरतया तत्पर्य्यायद्वारा माघादीनामपि प्रतीतसौरशक्तेः निरुक्तश्रुत्या वैशाखपदस्योपलक्षणतया बाधः स्वीक्रियते इति भावः।

† यववराहादिषु म्लेच्छप्रसिद्धेर्बाधादिति। यवपदस्य म्लेच्छप्रसिद्धिः प्रियङ्गुषु म्लेच्छानां यवव्यवहारस्य कृष्णशकुनौ च म्लेच्छानां वराहव्यवहारस्य च अथैते मोदमानास्तिष्ठन्तीति वराहं गावोऽनुधावन्तीति श्रौतवाक्यशेषेण बाधादपीत्यर्थः। तथाचाधिकरणमालायां माधवाचार्य्यः।

यवादिशब्दाः किन्त्वर्था नो वार्य्यम्लेच्छसाम्यतः।
दीर्घशूके प्रियङ्ग्वाद्या द्वयेऽप्यर्था विकल्पिताः॥
यत्रान्या इति शास्त्रस्थप्रसिद्धिस्तु बलीयसी।
शास्त्रीयधर्म्मे तेनात्र प्रियङ्ग्वादिर्न गृह्यते॥ १५॥

यवमयश्चरुर्भवति वाराही उपानहावुपयुञ्जत इति श्रूयते। तत्र यवशब्दमार्य्या दीर्घशूके प्रयुञ्जते वराहशब्दञ्च शूकरे। म्लेच्छास्तु यवशब्दं प्रियङ्गुषु वराहशब्दं कृष्णशकुनौ। तथा सति लोकव्यवहारेण निश्चितव्येषु शब्दार्थेषु आर्य्यम्लेच्छप्रसिद्ध्योः समानबलत्वादुभयविधा अप्यर्था विकल्पेन स्वीकार्य्या इति प्राप्ते ब्रूमः। शास्त्रीयधर्म्मावबोधे शास्त्रप्रसिद्धिर्बलीयसी प्रत्यासन्नत्वात् अविच्छिन्नपारम्पर्य्यागतत्वाच्च। शास्त्रे च यवविध्यर्थवाद एवं श्रूयते। यत्रान्या ओषधयः म्लायन्ते अथैते मोदमाना इवोत्तिष्ठन्तीति। इतरौषधिविनाशकाले अतिवृद्धिर्दीर्घशूके दृश्यते न तु प्रियङ्गुषु तेषामितरौषधिपाक-

बाध्येत। तस्मात्तपस्तपस्यौ शिशिरौ तौ मासौ माघफाल्गुनौ। तथा तपा माघेऽथ फाल्गुने स्यात्तपस्य इत्यादि भागुरिकोषकारस्मरणाल्लोकतश्च तपस्तपस्यादिपदसमानार्थतावगतेः तैश्च श्रुतावुपनीतत्वात् माघादिशब्दानामपि श्रुतित एव सौरार्थत्वावगतेः*। बहूनामनुरोधेन वैशाखादिपदस्यैव अन्यथा वर्णन-

---

कालात् पूर्व्वं पच्यमानत्वात् उपसद्विध्यर्थवादस्यैवं भवति। वसाहं गावोऽनुधावन्तीति गवामनुधावनं शूकरे भवति न तु कृष्णशकुनौ। तस्माद्दीर्घशूकादिर्यवादिशब्दार्थः इत्याह। शब्दशक्तिप्रकाशिकायां जगदीशतर्कालङ्कारस्तु यवपदस्य कङ्गुप्रभृतौ म्लेच्छानां दीर्घशूके च शिष्टानां व्यवहारात् एकमात्रशक्तेः परिच्छेत्तुमशक्यत्वात् नानार्थत्वस्य चान्याय्यत्वात् यवमयश्चरुर्भवतीति श्रुतौ यवपदस्यार्थसन्देहे—

वसन्ते सर्व्वशस्यानां जायते पत्रशातनम्।
मोदमानास्तु तिष्ठन्ति यवाः कणिशशालिनः॥

इति विध्यर्थाकाङ्क्षया प्रवर्त्तमानात् वाक्यशेषाद्दीर्घशूके एव यवपदशक्तिग्रहात् कङ्गुप्रभृतौ म्लेच्छानां यवव्यवहारेऽपि शिष्टानां न तद्भवतीत्याह।

* बाधादपीति। एकनियतामरकोषादिषु इति। तथाच तस्माद्बाधादपि शक्तिग्राहकत्वेन एकनियतामरकोषादिषु प्रसिद्धसङ्केतं बाध्येत इत्यर्थः तथाच यदि एकत्रस्थितवाक्यशेषादन्यदीयवाच्यनिर्णयः स्यात् तदा एकत्र वाक्यशेषात् म्लेच्छप्रसिद्धेर्बाधादपि अन्यत्रामरादिप्रसिद्धसङ्केतबाधः स्यादित्यापततीति भावः। तद्वाक्यशेषबलेन एकनियततया अव्यभिचारितया कोषादिवाक्यबोध्यपदवाच्यत्वं बाध्येत तुल्ययुक्त्या इति भावः। तस्मात् कोषादिवाक्यबोध्यशक्तिबाधापत्तेरित्यर्थः भागुरिकोषकारस्मरणात् तौ मासौ माघफाल्गुनावित्यन्तं भागुरिवचनं स्यात्तपस्येत्यादि कोषवचनम्। लोकतश्च वृद्धव्यवहारतश्चेत्यर्थः तपस्यादिरित्यादिना फाल्गुनिकः स्याच्चैत्रे चैत्रिकी मधुः। वैशाखे माधवी राधौ ज्यैष्ठे शुक्रः शुचिस्त्वयमित्यादिपरिग्रहः। तपस्यादिसमानार्थतावगतेरिति माघादीनामिति शेषः तैश्च तपस्तपस्यादिभिश्च सौराणामेव एवकारेण चान्द्रव्यवच्छेदः। तथाच अयनस्य सौरत्वात् तद-

मुचितमिति विपरीतोऽत्र यववराहादिन्यायो युक्तः† । न च

घटकतपस्तपस्यादीनां सुतरां सौरत्वं माघादिशब्दानां श्रुतित एव तपश्च तपस्यश्च शैशिरा-वृतुः मधुश्च माधवश्च वासन्तिकावृतुः शुक्रश्च शुचिश्च ग्रैष्मावृतुः । अथैतदुदगयनं देवानां दिनम् । नभाश्च नभस्यश्च वार्षिकावृतुः इषश्च ऊर्जश्च शारदावृतुः । अथैतद्दक्षिणायनं देवानां रात्रिरिति श्रुतितश्चेत्यर्थः ।

† बहूनामनुरोधेनेति । विरुद्धधर्मसमवाये भूयसां सधर्मकत्वमित्यादि न्यायादिति ।

विरोधी यत्र वाक्यानां प्रामाण्यं तत्र भूयसाम् ।

तुल्यप्रमाणसत्त्वे तु न्याय एव प्रवर्त्तकः ॥

इति वचनाच्चेति शेषः । अन्यथावर्णनं सौरपरत्ववर्णनम् । तथाच एतदुदगयनम् एतद्दक्षिणायनमित्यनेन अयनयोरुक्तत्वात् सूर्य्यगत्या अयनस्य सौरत्वस्य सिद्धत्वाच्च तद्-घटकानां तपस्तपस्यादिद्वादशानामेव सौरत्वेन विरुद्धधर्मसमवाये भूयसां सधर्मकत्वमिति न्यायात् भूयसामनुरोधेन मासानां सौरपरतया शक्तिसिद्धौ सत्यां सा वैशाखस्यामावास्या या रोहिण्या सम्पद्यते इति श्रुत्यन्तरस्य अन्यथानुपपत्त्या तत्रस्थरोहिणीपदस्य लक्षणया अश्विन्यादित्वेनान्वयसम्भवात् वैशाखपदस्य सौरपरत्वमिति भावः । विपरीतयववराहादि-न्यायो युक्तः यववराहादिन्यायस्य व्यतिक्रमो युक्त इत्यर्थः । यच्चात्र स्मार्त्तेन दूषणमभिहितं सा वैशाखस्यामावास्या या रोहिण्या सम्पद्यते इति श्रुत्या चान्द्रे औपदेशिकी शक्तिः क्लृप्ता सौरे तु तपस्तपस्यादिश्रुत्या पर्य्यायद्वारा शक्तिकल्पना सा च क्लृप्तशक्तिविरोधाद्भवितुं नार्हति । तत्र चान्द्रे क्लृप्तशक्तिस्तु परमसिद्धैव । तथाच मधुश्च माधवश्च वासन्तिका-वृतुरिति श्रुतौ मधुमाधवपदयोरयनघटकतया सौरपरत्वमवश्यं वाच्यम् । सा वैशाखस्या-मावास्या या रोहिण्या सम्पद्यते इति श्रुतौ रोहिण्या इष्टघटकतया तद्युक्तामावास्यायाः सौरवैशाखे असम्भवाच्चान्द्रवैशाखपरत्वम् अवश्यं वाच्यम् । ततश्च मधुश्च माधवश्च इति श्रुतौ अयनघटकतया मधुमाधवपदस्य सौरपरत्वात् तदेकवाक्यतया सा वैशाखस्यामावास्या इति श्रुतौ वैशाखपदस्य सौरपरत्वान्यथानुपपत्त्या अन्यायश्चानेकार्थत्वमिति न्यायेन श्रुत्येकवाक्यतया च तत्रत्यरोहिणीपदस्यागत्या लक्षणया अश्विन्यादिपरत्वस्यावश्यकत्वं कथं चान्द्रे क्लृप्तशक्तिः सङ्गच्छते ।

पाणिनिपुरस्कारः तस्यापि नवसु सौरेषु विशेषात् माघपौषाश्विनेषु हि तत्पुरस्कारः। स चात्यन्तयोगव्यावृत्त्या वाच्यः* सोऽपि न सम्भवति। एकस्या एव हि व्यक्तेः कादाचित्कयोगेनात्यन्तायोगव्यावृत्त्या भवति विशेषणम्। यथा त्रिदण्डी परिव्राजक इति यस्यैव दण्डत्रयं स एव करस्थेनापि त्रिदण्डेन त्रिदण्डीत्युच्यते न तु परिव्राजकान्तरम्। अन्यथा परिव्राजकत्वसामान्यादेकदण्डोऽपि त्रिदण्डीत्युच्यते त्रिदण्डी चैकदण्ड इति। अत्र च कस्याञ्चिच्चान्द्रव्यक्तौ नक्षत्रयोगो नास्त्येव। तेन तत्र नात्यन्तायोगव्यावृत्तिरयोगादेव। यस्याञ्च योगः†

---

* पाणिनिपुरस्कारः नक्षत्रेण युक्तः कालः सास्मिन् पौर्णमासीति सूत्रद्वयानुसारेण मासर्क्षयुक्तपौर्णमासीयोगः सौरशक्तौ न च सम्भवतीत्यर्थः। तदेव दर्शयति नवसु इत्यादि। तस्यापि तादृशयोगस्यापि नवसु कार्त्तिकमार्गशीर्षफाल्गुनचैत्रवैशाखज्यैष्ठाषाढश्रावणभाद्रेषु नवसु सौरमासेषु अविशेषात् अविशेषेण योगप्राप्तेः माघपौषाश्विनेषु स तत्पुरस्कारः सौरेषु तेषु मासर्क्षयुक्तपौर्णमासीयोगः न च सम्भवति षड़ष्टकेनावस्थानादिति शेषः। स च योगः अत्यन्तायोगव्यावृत्त्या तदत्यन्ताभावाभावरूपयोग्यतया वाच्य इत्यर्थः।

† निषेधयति सोऽपि न सम्भवतीति। एकस्या एव व्यक्तेरिति एवकारेण भिन्नव्यक्तिव्यवच्छेदः कादाचित्कयोगेन यदा कदाचित् एकवारयोगेन अत्यन्तायोगव्यावृत्त्या अत्यन्तयोगाभावाभावसत्त्वेन भवति विशेषणमिति अभावविरहात्मत्वं वस्तुनः प्रतियोगिता इति स्मरणात् तदत्यन्ताभावाभावस्य प्रतियोगिरूपतया विशेषेण भवतीति भावः। अत्र दृष्टान्तमाह यथा त्रिदण्डी परिव्राजकः स एव करस्थेनापि त्रिदण्डेन करे दण्डत्रयधारणेन। एतेन त्रिदण्डीति यौगिक इत्युच्यते न तु परिव्राजकान्तरमिति परिव्राजकस्य त्रिदण्डीति संज्ञा न त्वित्यर्थः। अन्यथा संज्ञास्वीकारे परिव्राजकत्वसामान्यात् परिव्राजकत्वधर्म्मवत्त्वात् एकदण्डोऽपीति अपिकारात् दण्डरहितोऽपि त्रिदण्डी उच्यते उच्यतामित्यर्थः तथाच एक-

तत्रापि योगो नित्यो न कादाचित्कः। चान्द्रत्वेनैकतामादायोच्यत इति चेत् न। मासान्तरीयचान्द्रव्यक्तावपि चान्द्रत्वविशेषात्तत्पदवाच्यता स्यादिति*। वैशाखादिपदानामन्योऽन्यपर्य्यायत्वं प्रसज्येत। मेषाद्यारब्धप्रतिपदादिमासतयैकत्वेनात्यन्तायोगव्यावृत्तिरुच्यते इति चेत् तर्हि मेषादारब्धत्वमात्रे चान्द्रसौरव्यक्तीनामप्येकत्वात्। सौरेऽप्यत्यन्तायोगव्यावृत्त्या विशेषणत्वम् अप्रतिहतम्। वैशाखादिप्रयोगविषयत्वे लोकसिद्धे हि पाणिनेरनुशासनम्। अन्यथा तिथ्यन्तरारब्धेषु सावनेषु चाविशेषात्। सौराणाञ्च वैशाखादिपदप्रयोगविषयत्वं चान्द्रस्येवाविशिष्टं तमसादे तदप्यविरुद्धम्। किञ्च विशाखानक्षत्रयुक्ता पूर्णिमा कदाचिदस्मिन्मासि भवतीति वैशाखपदप्रवृत्तौ पाणिनिपुरस्कारे वैशाखपदावयवोपात्तस्य विशाखायुक्तपूर्णिमायोगस्य प्रवृत्तिनिमित्तत्वात्। कथमयौगिकत्वं पदावयवोपात्तस्य हि

---

दण्डधारणात् एकदण्डी परिव्राजक इति। दण्डपरित्यागात् अदण्डपरिव्राजक इति शिष्टव्यवहारविरोधः स्यादिति भावः। त्रिदण्डी चैकदण्ड इति तथाच यद्यन्यो: परिव्राजकस्य संज्ञा दण्डधारी च त्रिदण्डीत्युच्यतामित्यापततीति भावः। नक्षत्रयोगो नास्त्येव माससंज्ञकनक्षत्रयोगस्यात्यन्ताभावः। तेन हेतुना अत्र अयोगादेव न अत्यन्तायोगव्यावृत्तिः न नक्षत्रयोगस्य अत्यन्ताभावाभावः। यस्याञ्च चान्द्रव्यक्तौ च योगः नक्षत्रयोगः।

* चान्द्रत्वेनैकतामादायेति। ननु कस्याञ्चिच्चान्द्रव्यक्तौ नक्षत्रयोगाभावेऽपि चान्द्रमासान्येतत् सत्त्वात् चान्द्रत्वसामान्यधर्म्मेण अनयोरैक्यात् तादृशधर्म्ममादाय नक्षत्रयोगाभावेऽपि यौगिकत्वमुच्यते इति चेन्न। मासान्तरीयचान्द्रव्यक्तौ वैशाखभिन्नज्यैष्ठरूपचान्द्रव्यक्तौ तत्पदवाच्यता वैशाखपदवाच्यता स्यात् चान्द्रत्वरूपसामान्यधर्म्मैक्यादिति भावः।

प्रवृत्तिनिमित्तत्वेन यौगिकत्वं सम्भवतीति त्रिदण्डीतिवत्* । यथा चैकादशाध्यायाद्यपूर्व्वपक्षे स्वर्गकामनाया अत्यन्तायोगव्यावृत्त्या विशेषणत्वेऽपि यौगिकत्वमेव स्वर्गकामपदस्य न रूढिः कल्पना-

---

* अन्योऽन्यपर्य्यायत्वं प्रसज्येत इति । तथाच यदि चान्द्रत्वरूपसामान्यधर्म्म एव प्रयोजकः स्यात् तदा तादृशसामान्यधर्म्ममादाय वैशाखो ज्यैष्ठपर्य्यायः स्यात् ज्यैष्ठोऽपि वैशाखपर्य्यायः स्यात् एवमपरापरोऽपि अपरापरमासपर्य्यायः स्यादिति भावः । मेषाद्यारब्ध-प्रतिपदादिमासतया मेषादिस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तमासत्वेनैक्यमादाय अत्यन्ता-योगव्यावृत्तिः नक्षत्रयोगात्यन्ताभावाभावरूपयोग्यता उच्यते इत्यर्थः । तर्हि तादृशमासत्व-सामान्यधर्म्मैकत्वमादाय अत्यन्तायोगव्यावृत्तिः तदत्यन्ताभावाभावरूपयोग्यतास्वीकारे चेत्यर्थः मेषाद्यारब्धकालीनचन्द्रक्रियाया अव्यभिचारित्वे चान्द्रसौरव्यक्तीनामप्यैकत्वात् तत्क्रिया-घटितचान्द्रसौरमासव्यक्तीनामप्यैक्यसम्भवादित्यर्थः । सौरेऽत्यन्तायोगव्यावृत्त्या अपरचान्द्र-वत् सौरेऽपि नक्षत्रयुक्तपौर्णमासीयोगात्यन्ताभावाभावरूपयोग्यतासत्त्वात् विशेषणत्वं मासर्क्ष-युक्तपौर्णमासीविशेषणत्वम् अप्रतिहतम् अविरुद्धं सौरमासस्येति शेषः । पाणिनेरनुशासनं मासर्क्षयुक्तपौर्णमासीयोगानुसरणम् अन्यथा तादृशानुशासनास्वीकारे तिथ्यन्तरानुरुद्धेषु मुख्यचान्द्रेषु सावनेषु च गौणचान्द्रेषु च अविशेषात् विशेषाभावात् चान्द्रस्येव चान्द्रे यथा वैशाखादिपदप्रयोगः तथा सौरेऽपीत्यर्थः । अस्मिन् मासि भवतीति हेतौ वैशाखपदप्रवृत्तौ वैशाखजन्यशक्तिप्रतिपादितमुख्यार्थबोधे पाणिनिसूत्रसाधितवैशाखपदस्यावयवोपात्तस्य एक-देशीभूतस्य तत्पुरस्कारस्य पाणिनिमासपदविशेषणत्वेन गृहीतस्य प्रवृत्तिनिमित्तत्वस्याभावात् अनियततया शक्यतावच्छेदकत्वस्याभावादित्यर्थः । कथं यौगिकत्वं मासस्येति शेषः तथाच अतिप्रसक्ताद्यनापादकनियतलघुधर्म्मिणि अवच्छेदकत्वस्वीकारात् कादाचित्कत्वेनानियततया प्रवृत्तिनिमित्तत्वाभावात् न मासस्य यौगिकत्वसम्भव इति भावः । पदावयवोपात्तस्य एक-देशीभूतस्य नियतविशेषणत्वेन गृहीतस्य प्रवृत्तिनिमित्तत्वेन शक्यतावच्छेदकधर्म्मवत्त्वेन यौगि-कत्वं भवति सिध्यतीति भावः ।

गौरवात्* । अथ व्यक्त्यन्तरयोगं विनापि रथमकुर्व्वति रथकार-

---

* यौगिकपदस्य चिदङ्कीतिवद्दृष्टान्तमभिधाय पुनर्दृष्टान्तयति यथाच यथावेत्यर्थः । एकादशाध्यायाद्यपूर्व्वपचे जैमिनिन्यायग्रन्थीयैकादशाध्यायस्य प्रथमपादस्यपूर्व्वपचे स्वर्गकामनाया अत्यन्तायोगव्यावृत्त्या अत्यन्तायोगस्य अत्यन्ताभावस्य व्यावृत्त्या अभावेन योगात्यन्ताभावाभावरूपयोगेन स्वर्गकामनाया विशेषणत्वेऽपि पुरुषविशेषणत्वेऽपि । तथाच दर्शपौर्णमासाभ्यां स्वर्गकामः पुरुषो यजेत इति विधौ पुरुषविशेषणस्य स्वर्गकामपदस्य यौगिकत्वमेव न रूढ़िः न रूढ़िशक्तिः । मीमांसकमते शक्तेरतिरिक्तपदार्थतया कल्पनागौरवमेव भवतीति भावः ।

तथाच मीमांसादर्शनस्य एकादशाध्यायस्याद्याधिकरणं यथा —

दर्शपूर्णमासयोः प्रधानानि आग्नेयादीनि, तेषां स्वर्गः फलं श्रूयते,—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति । स किं तेषां तन्त्रेण भवति, उत भेदेन ? इति । एवं चातुर्म्मास्यादिष्वपि द्रष्टव्यम् ।

'ननु च नैवात्र स्वर्गः फलं श्रूयते,—स्वर्गकामपदेन तावत् पुरुषोऽभिधीयते, यजेतेत्यनेनापि यागनिर्वृत्तिः, तयोर्वाक्येन सम्बन्धः, केनेदानीं फलमुच्यते ?' अनेनैव स्वर्गकामपदेनेत्याह । 'ननु पुरुषस्य अयं वक्ता' । न खलु कश्चित् पुरुषः स्वर्गकामो नामास्ति । 'ननु च यस्य स्वर्गे कामः स स्वर्गकाम इति' । एतदेव न जानीमः कस्य स्वर्गे काम इति, य एव हि स्वर्गकामः स एवास्वर्गकामो भवति इति । 'एवं तर्हि कालोपदेशोऽयं भवति,—यदा स्वर्गकामस्तदा यजेत इति' । अत्रापि न कश्चित् कालविशेषोऽस्ति, यस्मिन्नियमेन स्वर्गकामः स्यात्, सर्व्वेषु कालेषु सर्व्वे कामा अनियमेन उत्पद्यन्ते । तत्र न कश्चित् कालविशेषोऽनेन शक्यते व्यपदेष्टुम् । 'एवं तर्हि नैवायं पुरुषोपदेशो नापि कालोपदेशः, किं खलु, फलकामो निमित्तं, स्वर्गविषये कामे उत्पन्ने यजेत इति, यथा कपाले नष्टे यजेत इति' । अस्य पक्षस्य सूत्रेणैव परिहार उक्तः,—"फलकामो निमित्तमिति चेत्" (६।२।६) । "न नित्यत्वात्" (६।२.१०) इति । नित्यानि अग्निहोत्रादीनि कर्म्माणि, तानि यदि निमित्ते विधीयन्ते, नित्यत्वमेषां विहन्येत । तत्र

पदस्यैव दर्शनादयौगिकत्वम्*। तदाह पाणिनिः "योगप्रमाणे

---

नित्यचोदना यावज्जीविकाद्या अपरुध्यन्ते, लिङ्गानि च 'अप वा एष स्वर्गाल्लोकात् च्यवते यो दर्शपूर्णमासयाजी सन् पौर्णमासीम् अमावास्यां वाऽतिपातयेत्' इत्येवमादीनि।

परिशेषात् फलसंयोग एवायम्। 'कथं पुनरनेन शक्यते फलं विधातुम् ?' तदुच्यते, 'स्वर्गकामो यजेत' इति। यदि वा स्वर्गकामो यागायोपदिश्यते यथा 'लोहितोष्णीषाः'; यदि वा यागः स्वर्गकामाय, यथा मलिनः स्नायात्, बुभुक्षितोऽश्नीयात् इति। तत्र यदि स्वर्गकामः कर्म्मणि उपदिश्यते, उपदिष्टोऽपि न प्रवर्त्तेत, को हि परार्थं प्रयासमातिष्ठेत् ? तथा कर्म्मचोदनाऽनर्थिकैव भवति, अथ यागः स्वर्गकामार्थः, ततोऽसौ पुरुषस्योपकरोति, तं पुरुषः स्वार्थेन करोति इति ; तथा कर्म्मचोदना अर्थवती भवति। अपिच यागविधौ श्रुत्यर्थः परिगृहीतो भविष्यति, स्वर्गकामविधौ वाक्यार्थः। तस्माद्यागः स्वर्गकामस्योपकारकः। स्वर्गकामस्य अनेकपुत्रपशुग्रामान्नाद्यादिलाभकरः, स यदि पुत्रान्नाद्यादीनामन्यतमं करोति, ततः स्वर्गकामशब्दोऽविवक्षितार्थः पुरुषमात्रवचनो भवति ; तथाच आनर्थक्यमेव, अन्तरेणापि हि तद्वचनं पुरुषमात्रमाख्यातादेव गम्यते। तस्माद्यागात् स्वर्गो भवति। तत्रानेककर्म्मसन्निपाते दर्शपूर्णमासादिषु भवति संशयः,— किं तन्त्रमेषां फलम्, उत भेदेन ? इति। किं प्राप्तम् ?—भेदेन इति। किं कारणम् ? इमानि आग्नेयादीनि प्रधानानि परस्परानपेक्षाभिश्चोदनाभिः पृथग्भूतानि उत्पन्नानि पृथगेव फलमाकाङ्क्षन्ति। तत्सन्निधौ स्वर्गादिफलं श्रूयमाणं भेदेनाकाङ्क्षितत्वाद्भेदेनैव सम्बध्यते। तस्मात् प्रति प्रधानं फलभेद इत्येवं प्राप्तम्।

* सर्व्वस्यां व्यक्तौ योगाभावेऽपि यस्यां कस्याञ्चिद्व्यक्तौ योगेऽपि यौगिकत्वं मासस्य स्यादित्याशङ्क्य निराकुरुते अथेत्यादि। व्यक्त्यन्तरयोगात् विनापीति अन्या व्यक्तिः व्यक्त्यन्तरम् अत्र योगं विना। तद्योगोऽस्ति मासत्वयुक्तपौर्णमासीयोगोऽस्ति इति हेतौ तत्पुरस्कारः सास्मिन् पौर्णमासीति पाणिनिसूत्रेण यौगिकत्वसिद्धिः। मेषस्थसूर्य्यावयवायां मेषस्थरव्यारब्धायामित्यर्थः। तत्समानजातीयतया चान्द्रमासारब्धकाले सौरमासस्याप्यारब्धतया अत्यन्तायोगव्यावृत्त्या तादृशपौर्णमासीयोगात्यन्ताभावस्याभावेन विशेषणत्वे मासत्व-

च तदभावेऽदर्शनं स्यात्"। यौगिकस्य योगाभावे अप्रयोगः स्यात् इत्यर्थः। न चात्राप्रयोग इति न यौगिकत्वं तत्र अतएव रथकरणस्येव नात्यन्तायोगव्यावृत्त्या विशेषणत्वमपीति कथं पाणिनिपुरस्कारः। कस्याञ्चिच्चान्द्रव्यक्तौ तद्योगो नास्तीति तत्पुरस्कार इति चेन्न मेषस्थसूर्य्याख्यायां कस्याञ्चिच्चान्द्रव्यक्तौ योगदर्शनादेवं सौरस्यापि मेषस्थादित्याख्यत्वेन समानजातीयतयात्यन्तायोगव्यावृत्त्या विशेषणत्वेन पाणिनिपुरस्कारविरोधात्। अतएव दीक्षितेन तत्पुरस्कारमभिधायापि तदपरितोषेण कारणान्तरमेवोक्तम्। अथ सन्देहस्तथापि वाच्यसन्देहे यववराहादिश्रुतितो नेष्यते (१) "सा वैशाखस्यामावास्या या रोहिण्या सम्पद्यत" इत्यन्तं तदपि च दूषितम् उभयोरपि श्रौतत्वात्* विपरीतो वा यावद्विशेषः। वैशाखादयो द्वादशैव

(१) श्रुतितोपमेष्यते इति क्वचिदादर्शे पाठः।

युक्तपौर्णमासीयोगस्य सौरमासविशेषणत्वे इत्यर्थः। रथकारपदस्येव रथम् अकुर्व्वति रथकारपदस्य यथा न यौगिकत्वम्।

* सूत्रार्थं स्वयं व्याकरोति यौगिकस्येत्यादि। न चात्र नह्यत्र इति हेतौ यत एव योगाभावे न यौगिकत्वं रथकरणस्येव रथकारस्येव अत्यन्तायोगाभावेनापि न विशेषणत्वमित्यर्थः इति हेतौ। यत एव न पाणिनिपुरस्कारः अतएवेत्यर्थः। यववराहवच्छ्रुतितो नेष्यते इति। यवे वराहे च यथा वाच्यसन्देहो नास्ति, तद्वदत्रापि श्रुतितो वाच्यसन्देहो न इष्यते। श्रुतिं दर्शयति सा वैशाखस्यामावास्या इत्यादीति। उभयोरपि श्रौतत्वात् चान्द्रसौरयोरुभयोरपि वाच्यतायाः श्रुतिप्रतिपादितत्वादित्यर्थः। एतदपि दूषितमित्यत्र हेतुः।

मासाः सौराः श्रौताः। चान्द्रस्तु वैशाख एव परं श्रौतः। तदेवं भूयसामनुरोधेन सौरवचनत्वमवधार्य्यते। पाणिनेस्तु प्रकृतिप्रत्ययविभागकरणं स्वरमात्रप्रयोजनकम्।

तदाह वार्त्तिककारपादाः।

"यदार्थस्य (१) विसंवादः प्रत्यक्षेणोपलभ्यते।
स्वरसंस्कारमात्रार्था तत्र स्यात्पाणिनिस्मृतिः॥" *

किञ्च मेषादित्योपक्रान्तत्वोपाधिना चान्द्रवैशाखो वाच्यः। मेषादित्यकाल एव सौरो वैशाखः। तेन सौरावगमसापेक्षा†

---

(१) यत्रार्थस्येति क्वचिदादर्शे पाठः।

---

* उभयत्र श्रुत्या मासपदवाच्यमभिधाय विशेषमभिदधाति विपरीतो वा इति। यावद्विशेष इति उच्यते इति शेषः। विशेषं दर्शयति भूयसामनुरोधेनेति। विरुद्धधर्म्मसमवाये भूयसां सधर्म्मकत्वमिति न्यायादिति शेषः। सौरवचनत्वं सौरशक्तिः मासपदस्येति शेषः। प्रकृतिप्रत्ययविभागकरणं सास्मिन् पौर्णमासीति संज्ञायामित्यादिसूत्रेणेति शेषः। स्वरमात्रप्रयोजकं स्वरसंस्कारमात्रप्रयोजकं स्वरस्य यः संस्कारविशेषः उदात्तानुदात्तभेदेनोच्चारणं तन्मात्रप्रयोजकं न तु वाच्यत्वनिर्णयप्रयोजकम्। अर्थस्य तद्धिताद्यर्थस्य विसंवादः बाधितत्वं प्रत्यक्षेण प्रत्यक्षादिप्रमाणेन आदिना शास्त्रपरिग्रहः। तेन कृत्तिकादियोगव्यभिचारस्य शास्त्रगम्यत्वेऽपि तत्संग्रहः। स्वरस्य उदात्तादेः क्वचित् संस्कारस्य पदसाधुतायाः सिद्धार्थं ज्ञानार्थम्। अत्र तद्धर्म्माश्रये पाणिनिस्मृतिः पाणिनिना विहितप्रत्ययाः।

† सौरशक्तौ लाघवं दर्शयति किञ्चेति। मेषादित्योपक्रान्तोपाधिना मेषस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तत्वधर्म्मेण। मेषादित्यकालः मेषस्थरविकाल एव। सौरावगमसापेक्षा सौरज्ञानसापेक्षा। नागृहीतविशेषणबुद्धिर्विशेष्ये चोपजायते इति न्यायादिति शेषः।

चान्द्रावगतिर्जघन्या सौरात्। तन्न तर्हि मेषादिस्थसूर्य्योपक्रान्तत्वमेव। सौरचान्द्रयोरेकवैशाखादिप्रवृत्तेर्निमित्तमस्तु उभयत्र च मुख्यमिति*। नैतत् शुक्लप्रतिपदितरतिथ्यारब्धेषु दर्शेतरान्तेषु सावने च त्रिंशदहोरात्रकेऽतिप्रसङ्गात्। न च तेभ्यो व्यावृत्तं सौरदर्शान्तचान्द्रमात्राभिधाने शक्तिभेदापत्तेः (१) सौरवचनत्वमेव†। तेन मेषभोगो यावत्कालं स वैशाखः वृषादिभोगावच्छेदे च ज्यैष्ठादयः सौराः। तत्रैकस्मिन् वत्सरे राशिभोग-

---

(१) तेभ्यो व्यावृत्तं सौरदर्शान्तचान्द्रमात्रानुमतं किञ्चद्रूपमुपलभामहे। तस्मादुभयाभिधाने शक्तिभेदापत्तेरिति आदर्शद्वये पाठः।

---

* चान्द्रावगतिरिति। तथाच प्रथमोपस्थितत्वात् सौर एव मुख्यश्चैत्रादिशब्दवाच्य इत्यर्थः। ननु तर्हि सौरे शक्तिस्वीकारेऽपि मेषादित्वे मेषस्थरवौ सौरवैशाखेऽपि चान्द्रस्य उपक्रान्तत्वम् आरब्धत्वमेव सौरचान्द्रयोरिति वृत्तित्वं समभ्यर्थः वैशाखादिप्रवृत्तेः वैशाखादिपदशक्तेरेकं निमित्तं कारणमस्तु। उभयत्र मुख्यत्वमिति तथाच उभयत्र सौरे चान्द्रे च मासपदं मुख्यमिति भावः।

† दूषयति नैतदिति। शुक्लप्रतिपदितरतिथ्यारब्धेषु दर्शेतरान्तेषु तथाच यदि सूर्य्येणारब्धत्वमेकं निमित्तं स्यात् शुक्लपदितरतिथ्यारब्धेषु दर्शेतरान्तेषु प्रतिपदन्तेषु यत्किञ्चित् त्रिंशत्तिथ्यात्मकतिथिचान्द्रेषु इत्यर्थः। एवं त्रिंशदहोरात्रात्मकसौरसावनेषु च अतिप्रसङ्गादतिव्याप्तिरित्यर्थः यथाश्रुतन्तु न सङ्गच्छते। वैशाखादिप्रवृत्तेरित्युक्तेः तादृशमासयोर्वैशाखादिसंज्ञाविरहादतिप्रसङ्गाप्रसक्तेः। वस्तुतस्तु शुक्लपदितरतिथ्यारब्धेषु कृष्णप्रतिपत्तिथ्यारब्धेषु दर्शेतरान्तेषु पौर्णमास्यन्तेषु गौणचान्द्रवैशाखादिषु अतिप्रसक्तेरित्यर्थः। चकारानवस्थायां पूर्व्वोक्तदोषमात्रं साधीयः। तेभ्यो व्यावृत्तं गौणचान्द्रादिभ्यो व्यावृत्तं सौरदर्शान्तचान्द्रमात्रानुमतमिति न च नहीत्यर्थः। शक्तिभेदापत्तेः नानाशक्तिकल्पनापत्तेः सौरवचनत्वमेवेति तथाच वैशाखादिपदं सौरमात्रशक्तमिति भावः।

स्यावृत्त्यभावात् नाधिमासोऽत्रानुगतं किञ्चिद्रूपमुपलभामहे। तस्मात् उभयविधाने न मलिम्लुचो न च द्विराषाढ़ादिकं चान्द्रस्तु गौणः। तथापि संक्रान्तिचिह्निते द्विराषाढ़ादिकन्नास्ति*। यथा ब्रह्मगुप्तः। मेषगरविसंक्रान्तिः शशिमासे भवति यत्र स चैत्रः (१)। एवं वैशाखाद्या वृषादिसंक्रान्तियोगेन न ह्येकस्मिन् वत्सरे मेषादिसंक्रान्तिरावृत्ता भवति। तेनात्रापि न मासावृत्तिः। अतोऽस्मिन् वचने मेषगरविसंक्रान्त्यादिपदानि मीनाद्युपक्रान्तलक्षणानि। मीनाद्युपक्रान्तेष्वेव चान्द्रेषु मेषादिसंक्रान्तेर्नियतत्वात्। अतएवोपक्रान्तलक्षणायामुपक्रान्तत्वस्य गौणवैशाखादिपदप्रवृत्ताविदं प्रमाणम्। यथा—

"एकसंज्ञौ यदा मासौ स्यातां संवत्सरे क्वचित्।
तत्राद्ये पितृकार्य्याणि देवकार्य्याणि चोत्तरे॥"†

---

(१) तच्चैत्रम् इति क्वचिदादर्शे पाठः।

---

* उपसंहरति तेनेति। मेषभोगी यावत्कालं यावत्कालमेव मेषभोगी भवति स वैशाखः। तथाच मेषस्थरविभोगकालो वैशाख इत्यर्थः। राशिभोगस्य एकराशिभोगस्य आवृत्त्यभावात् वारद्वयासम्भवात्। नाधिमासः न मलिम्लुचः सौरमास इति शेषः। न च द्विराषाढ़ादिकमिति। तथाच सौरमासस्य द्विराषाढ़ादित्वं न सम्भवतीति भावः। तदा कोऽधिमास इत्यत आह चान्द्रस्तु गौणः तथाच गौणस्तु चान्द्रः अधिको मासः कदाचिद्भवितुमर्हतीति भावः। संक्रान्तिचिह्निते सौरे मासि संक्रान्त्या सौर उच्यते इति स्मरणात्।

† प्राचीनब्रह्मगुप्तमासलक्षणं दर्शयति तथा ब्रह्मगुप्त इति। मेषग इत्यादि। यत्र शशिमासे मुख्यचान्द्रे मासि मेषगरविसंक्रान्तिः मीनतो मेषराशौ रविसञ्चारी भवति स

चैत्रनामा मुख्यचान्द्रमासो भवतीत्यर्थः। एवं यत्र यत्र मुख्यचान्द्रमासि वृषादिराशौ रविसञ्चारो भवति स चान्द्रवैशाखादिर्भवति। नह्रीति आवृत्त्या पौनःपुन्येन एकस्मिन् मेषादिमीनपर्य्यन्तसौरसंवत्सरे मेषादिसंक्रान्तिर्नह्रि भवति। तथाच रवेर्वक्रातिचाराभावात् मेषादिमीनपर्य्यन्तेषु द्वादशराशिषु यथाक्रममेव सञ्चारो भवति न त्वेकस्मिन् संवत्सरे पुनः पुनर्मेषादिसंक्रान्तिर्भवितुमर्हतीति भावः। तेन अत्र न सौरमासावृत्तिः नैकसंज्ञकमासद्वयम्। अस्मिन् वचने ब्रह्मगुप्तलक्षणे मेषगरविसंक्रान्त्यादिपदानि मेषगतरविसंक्रान्तिः आदिर्येषां तानि पदानि मीनाद्युपक्रान्तलक्षणानि मीनादिस्थरव्यारब्धलक्षणानि शशिमासपदानीत्यर्थः मीनाद्युपक्रान्तेषु मीनादिस्थरव्यारब्धेष्वित्यर्थः। यत एव मीनाद्युपक्रान्तादौ नियतत्वम् अतएवेत्यर्थः। उपक्रान्तलक्षणायां मेषादिराशिस्थरव्यारब्धत्वेन शशिमासलक्षणायामित्यर्थः। उपक्रान्तत्वस्य मेषादिस्थरव्यारब्धत्वरूपधर्म्मस्य गौणवैशाखादिपदप्रवृत्तौ गौणवैशाखादिपदजन्यबोधविषयतावच्छेदकत्वे च इदं ब्रह्मगुप्तलक्षणं प्रमाणम्। तथाच शशिमासानियततया नियतरूपेण मेषादिरविसंक्रान्तिसत्त्वासम्भवात् मीनादिस्थरव्यारब्धत्वेन शशिमासो विशेषणीयः। ततश्च नागृहीतविशेषणा बुद्धिर्विशेष्ये चोपजायते इति न्यायात् मीनादिराशिस्थरविकालस्योपस्थितौ तत्र शक्यतावच्छेदकत्वकल्पनालाघवेन चैत्रादिपदस्य शक्यत्वसिद्धौ मीनादिस्थरव्यारब्धत्वस्य गुरुधर्म्मतया तत्र शक्यतावच्छेदकत्वकल्पनाया अन्याय्यत्वात् सुतरां लक्ष्यतावच्छेदकत्वकल्पनं समुचितमिति भावः। एकसंज्ञौ एकनामानौ मासौ मलमासशुद्धमासौ क्वचित् माधवादिषट्कमध्ये तत्र तयोराद्यमासि मलमासात् पूर्व्वमासे न तु एकसंज्ञमासयोः प्रथममासे मलमासरूपे पितृकार्य्याणीति कृष्णपक्षकार्य्यमात्रपरं दैवकार्य्याणीति शुक्लपक्षकार्य्यपरम्। तथाच मलमासाश्रितं कर्म्म कृष्णपक्षोदितञ्च यत्। तत् कर्त्तव्यं पूर्व्वमासे शुक्लपक्षोदितं परे॥ अथवा पितृकार्य्यपदं प्रेतकार्य्यपरम्। तथाच निर्ममे मलिनं मासं प्रेतानान्तु हिताय वै इति वचनं पूर्व्वमासपरं यथाश्रुतमलमासरूपपूर्व्वमासपरम्। हेमाद्रिस्तु षष्टिभिर्द्दिवसैर्मासः कथितो बादरायणैः। दैवकार्य्याणि पूर्व्वेऽस्मिन् पितृकार्य्याणि चोभयोरिति वचनमधिकं लिखित्वा एवमादीनि मलमासे दैवकार्य्यपितृकार्य्यप्रतिपादकानि वचनानि आवश्यकदैवकार्य्यपितृकार्य्यविषयाणि द्रष्टव्यानीति व्याख्यातवान्।

तथा ज्योतिःशास्त्रम्। "द्विराषाढ़े द्विराद्यम्" इति। संक्रान्तेरनावृत्ततया मासद्वयस्यैकनामतानुपपत्तेरेकराशिस्थे तु सूर्य्येऽधिमासे प्रतिपदादिदर्शान्तस्य मासद्वयस्योपक्रान्ततया भवति समाननामत्वम्। तन्निर्देशार्थमेव संक्रान्तिपदं भूयसामनुरोधेन वा मुख्यार्थमेव ब्रह्मगुप्तवचनं वर्णयिष्यामः। मेषाद्युपक्रान्तत्वं चान्द्रे गौणत्वं चान्द्रे गौणवैशाखादिपदप्रवृत्तौ निमित्तं वाच्यं तद्विना निमित्तान्तरादधिमासयोरेकनामत्वानुपपत्तेः। अतएवाधिमासस्य परभूतमासेन सह षष्टिदिनेनैकमासत्वमेकत्रोपक्रान्तत्वसाम्यात् न तु पूर्व्वेण*। संक्रान्तेस्तु निमित्तत्वे मलमासस्य संक्रान्तिशून्यत्वात् पूर्व्वापरयोश्च तद्‌योगात् न क्वचि-

---

* द्विराषाढ़े मलमासे। सङ्क्रान्तेः एकनामकसङ्क्रान्तेः अनावृत्ततया पुनःप्राप्त्य-सम्भवेन। मासद्वयस्य सौरमासद्वयस्य। प्रतिपदादिदर्शान्तस्य मुख्यचान्द्रस्य। समाननामत्वमिति। तथाच मलमासे चान्द्रमासस्य सङ्क्रान्तिशून्यत्वात् यत्र कृष्णचतुर्द्दश्यां मेषसङ्क्रान्तिस्तत्परतः शुक्लप्रतिपदि च वृषसङ्क्रान्तिः तत्र प्रथमचान्द्रमासस्य स्वाव्यवहितमेषस्थर-व्यारब्धतया वैशाखत्वम्। एवं प्रतिपदि वृषसङ्क्रान्तेः तदादिदर्शान्तरूपचान्द्रमासस्यापि मेषस्थरव्यारब्धतया च वैशाखत्वं सुतरां समाननामत्वसिद्धिरिति भावः। मेषाद्युपक्रान्तत्वं मेषस्थरव्यारब्धत्वम्। गौणवैशाखादिपदप्रवृत्तौ गौणवैशाखादिपदप्रयोगे। तद्विना मेषाद्युपक्रान्तत्वस्य निमित्तत्वास्वीकारे। अधिमासयोः मलमासशुद्धमासरूपैकनामकचान्द्रमासद्वयस्य। अतएव चान्द्रमासयोरेकनामत्वादेव। षष्टिदिनेन षष्टितिथिभिरित्यर्थः। एकमासत्वमिति। तथाच षष्ट्यादिदिवसैर्मासः कथितो बादरायणैरिति। एकत्रोपक्रान्तत्व-साम्यात् एकराशिस्थरव्यारब्धत्वेन उभयोरेवाभिन्नलक्षणाक्रान्तत्वात्। न तु पूर्व्वेण मल-मासात् पूर्व्वमासमादाय तेन सह षष्टिदिनेनैकमासत्वम्।

दप्यत्र विशेत्। उभयत्र वा प्रविशेदविशेषात्*। यद्यपि प्रतिपदितरतिथ्यारब्धानां† दर्शेतरतिथिसमाप्यानामपि शशिमासेनोपादानं भवति, तथापि—

"दर्शाद्दर्शश्चान्द्रस्त्रिंशद्दिवसस्तु सावनो मासः।
रविसंक्रान्तिषु चिह्नः सौरोऽपि निगद्यते॥"

परतिथ्यन्तरारब्धपूर्व्वतिथिसमापनीयमासस्य चान्द्रत्वात् त्रिंशत्तिथिकश्चान्द्र इति वक्तव्ये यद्दर्शद्वयाक्रान्तक्रोडीकृतमासस्य कीर्त्तनं तद्वैशाखादिपदानां तथाविधमासनामत्वज्ञापनार्थं तस्यानन्यप्रयोजनत्वात् शशिमासग्रहणे वैशाखादिषण्मासेषु

---

* सौरमासस्य मलमासत्वं खण्डयति। सङ्क्रान्तेस्तु निमित्तत्वे सौरमासनिमित्तत्वे आदित्यराशिभोगेन सौरो मासः प्रकीर्त्तित इति वचनेनादित्यैकराशिभोगावच्छिन्नकालस्य सौरमासत्वात् मलमासस्य सङ्क्रान्तिशून्यत्वात्।

अमावास्याद्वयं यत्र रविसङ्क्रान्तिवर्ज्जितम्।
मलमासः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥

इत्यादिवचनात् पूर्व्वापरयोश्च तद्योगात् शुद्धाशुद्धमासयोः सङ्क्रान्तियोगात् अत्र सौरमासे, न विशेत् सौरमासस्य मलमासत्वं न भवेत् इत्यर्थः। यदि स्वीक्रियते तदा अविशेषात् उभयत्र शुद्धाशुद्धयोः उभयोरपि मलमासत्वं भवेत्।

† ननु चान्द्रमासस्य मलमासत्वे—

एका तिथिः कापि तदादिभूता तिथिस्ततोऽप्यन्ये तिथिप्रबन्धः।
मासः स चान्द्रस्तिथिनाम्नि यः स्यात् चान्द्रीं कलां प्राप्य सदा प्रवृत्तः॥

इति वचनेन तिथिचान्द्रस्यापि चान्द्रमासत्वकथनात् तस्यापि मलमासत्वं स्यादित्याशङ्क्यते यद्यपि प्रतिपदितरतिथ्यारब्धानामित्यादि। द्वितीयाद्यादिप्रतिपदाद्यन्तानां तिथिचान्द्रमासानामित्यर्थः।

प्रतिवत्सरं षड़धिमासा भवेयुः*। तथाहि द्वितीयायां मेष-संक्रान्तौ तदनन्तरिततृतीयारब्धस्य द्वितीयान्तस्य तृतीयाया-श्चतुर्थ्यां वा वृषसंक्रान्तौ मलमासत्वं स्यात् संक्रान्तिशून्यत्वात्। ततः पञ्चम्यामुपक्रम्य चतुर्थ्यन्तस्य सप्तमीषष्ठ्योरन्यत्र मिथुन-संक्रान्तौ मलमासत्वमिति। मेषाद्युपक्रान्तेषु प्रतिपदुपक्रम-दर्शान्तेषु चान्द्रेषु गौणा इति सिद्धम्।

अतएव ब्रह्माण्डपुराणम्।

"क्षणा मुहूर्त्ताः† दिवसा निशाः पक्षाश्च कृत्स्नशः।
मासाः संवत्सराश्चैव ऋतवोऽथ युगानि च।
तदादित्यादृते सर्व्वा कालसंख्या न विद्यते॥"

---

* इदानीं तिथिचान्द्रस्य मलमासत्वं खण्डयति तथापीत्यादि। दर्शाद्दर्शश्चान्द्र इति दर्शादनन्तरं शुक्लप्रतिपदमारभ्य दर्शान्तश्चान्द्र इत्यर्थः।

अतएव विष्णुधर्म्मोत्तरे।

चन्द्रमाः कृष्णपक्षान्ते सूर्य्येण सह युज्यते।
सन्निकर्षाद्यथारभ्य सन्निकर्षमथापरम्।
चन्द्रार्कयोर्बुधैर्मासश्चान्द्र इत्यभिधीयते॥

त्रिंशद्दिवसस्तु इति। अत्र दिवसपदं तिथिपरं सौरदिनपरमपि तेन सौरसावन-श्चान्द्रसावनश्च लभ्येते। रविसंक्रान्तिचिह्नः आदित्यैकराशिभोगावच्छिन्नः कालः सौरमासः। परतिथ्यन्तरारब्धपूर्व्वतिथिसमापनीयमानस्य द्वितीयाद्यारब्धप्रतिपदाद्यन्तमासमात्रस्येत्यर्थः। दर्शद्वयान्तक्रोड़ीकृतमानस्य शुक्लप्रतिपदादिदर्शान्तमानस्य। षड़धिमासा भवेयुः मलमास-षट्कं भवेदित्यर्थः।

† तदेव दर्शयति तथाहीति। द्वितीयायां मेषसङ्क्रान्तौ तदनन्तरिततृतीयारब्धस्य

तथा ब्रह्मगुप्तः।

"चैत्रसितादेरुदयाद्भानोर्दिनमासा वर्षयुगकल्पाः।
सृष्ट्यादौ लङ्कायां समं प्रवृत्ता दिनेऽर्कस्य॥"

सन्तु वा चान्द्रेष्वपि वैशाखादयो मुख्याः तथाहि साक्षात् वैशाखपदस्य श्रुतावेव चान्द्रे प्रयोगदर्शनम् किन्त्वेकं तत्। माघादिपदानाञ्च बहूनामेव श्रुतौ सौरार्थत्वं प्रतीयते किन्तु पर्य्यायमुखेन न साक्षात्। तेनैकं साक्षात्तेन बलवदपरञ्च भूयस्त्वेन। तथैकमल्पत्वाच्च दुर्ब्बलम् अन्यच्च व्यवधानादिति। द्वयोरपि

---

द्वितीयान्तस्य। तथाच यत्र शुक्लद्वितीयायां मेषसङ्क्रान्तिः वृषसङ्क्रान्तिस्तु शुक्लप्रतिपदि तत्र तदुत्तरारब्धशुक्लतृतीयादि-शुक्लद्वितीयान्तत्रिंशत्तिथिप्रचयरूपस्य कस्यचित् तिथि-चान्द्रमासस्य मध्ये रविसङ्क्रान्त्यभावात् स मासो मलमासो भवितुमर्हति। एवं यत्र शुक्लचतुर्थ्यां मिथुनसङ्क्रान्तिः कर्कटसङ्क्रान्तिस्तु तदुत्तरशुक्लतृतीयायां चतुर्थ्यां वा तत्र तदुत्तरशुक्लपञ्चम्यादि-शुक्लचतुर्थ्यन्तत्रिंशत्तिथिप्रचयरूपस्य कस्यचित् तिथि-चान्द्रमासस्य रविसङ्क्रान्तिशून्यत्वात् मलमासत्वापत्तिरपि भवितुमर्हति। एवंरीत्या सप्तम्यादि-षष्ठ्यन्तमासस्य दशम्यादि-नवम्यन्तमासस्य द्वादश्यादि-एकादश्यन्तमासस्य पौर्णमास्यादि-चतुर्द्दश्यन्तमासस्यापि मलमासत्वं भवितुमर्हति इत्येवम् षट्तिथिचान्द्रमासाः अधिमासाः भवेयुः इति वर्त्तुलार्थः। मेषाद्युपक्रान्तेषु प्रतिपदुपक्रमदर्शान्तेषु मेषस्थरव्यारब्धप्रतिपदादिदर्शान्तेषु। गौणाः वैशाखादयः मासा इति शेषः। यतएव वैशाखादयः सौरे मुख्या चान्द्रे गौणा अतएवेत्यर्थः। क्षणा इति त्रिंशत्कलारूपा। मुहूर्त्ताः दिवसस्य पञ्चदशभागाः।

तथाचामरः।

"अष्टादशनिमेषास्तु काष्ठाः त्रिंशत्तु ताः कलाः।
तास्तु त्रिंशत् क्षणस्ते तु मुहूर्त्तो द्वादशास्त्रियाम्॥"

तुल्यत्वावधारणेन विनिगमनाप्रमाणाभावात् उभयत्र शक्तिरच्चा-दिपदानामिव विनिगमनाप्रमाणाभावात् अनेकशक्तिस्वीकारः तदस्तु तावदेकान्ततश्चान्द्रवचनत्वं न निर्लोपनीयम्। सौरवचनत्वं तावत्सिद्धं चान्द्रस्य तु मुख्यार्थत्वेऽपीप्सितपूर्व्वकमीप्सितप्रतीति-वत्*। सौरमेषादिभोगावगमपूर्व्वकत्वाच्चान्द्रवैशाखाद्यवगमस्य जघन्यतया सर्व्वत्र माघादिपदेभ्यः सौराणामेव शीघ्रावगमः।

अतएव च।

"माघे मासि चतुर्थ्यान्तु वरमाराध्य च श्रियम्।
पञ्चम्यां कुन्दकुसुमैः पूजा कार्य्या समृद्धये॥" पुराणम्।

तथा भविष्ये।

"माघे मासि तृतीयायां गुड़स्य लवणस्य च।
दानं श्रेयस्करं राजन् स्त्रीणाञ्च पुरुषस्य च॥"

मत्स्यपुराणे।

"यस्मान्मन्वन्तरस्यादौ रथानापुर्दिवाकराः।
माघमासस्य सप्तम्यां तस्मात्स्यात् रथसप्तमी॥"

---

* आदित्यादिति सूर्य्यसम्बन्धं विना। चैत्रसितादेः चैत्रशुक्लप्रतिपदः। भानोरुदयात् सूर्य्योदयमारभ्य लङ्कायां गणनायाम्। भानोरुदयात् अर्कस्य दिने इत्युपादानात् दिन-मासवत्सरादीनां सौरत्वमिति ग्रन्थकर्त्तुराशयः। श्रुतावेव सा वैशाख्यामावास्या इत्यादि-श्रुतावेव। श्रुतौ तपश्च तपस्यश्च शैशिरावृतुरित्यादिश्रुतौ। एकं चान्द्रार्थत्वं साक्षात्तेन श्रुतौ साक्षात् वैशाखपदनिर्द्देशेन। अपरं सौरार्थत्वन्तु भूयस्त्वेन नानाश्रुतौ पर्य्याय-क्रमेण माघादीनां निर्द्देशेन बलवदिति अनुसङ्गेनान्वयः। व्यवधानादिति दुर्व्बलमिति

तथा स्मृतिसमुच्चये ।

"सूर्य्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तत्र स्नानं महाफलम् ॥
माघे मासि सिते पक्षे सप्तमी कोटिभास्करा ।
तस्यां स्नानार्घ्यदानाभ्यामायुरारोग्यसम्पदः ॥"

इत्यादिवचनविहितवरचतुर्थीश्रीपञ्चमी*माघीसप्तमीनां मकरस्थ-सूर्य्ये एव नित्यं निर्व्विवादः परिग्रहः। चान्द्रमात्रवचनत्वे तु कथमनुत्कर्षः। तुल्यवदुभयवचनत्वे वा सौरपरिग्रहे किं प्रमाणम्। अतएव दीक्षितेन नायमर्थो विस्पष्टः कष्टत्वात्। न च

---

अनुसङ्गेनान्वयः। न निर्ल्लोपनीयं न सर्व्वतोभावेन खण्डयितुं योग्यम्। ईप्सितपूर्व्वकं प्राप्तुमिष्टम् ईप्सितं तदेव पूर्व्वं यस्य।

* सौरमेषादिभोगावगमपूर्व्वकत्वादित्यादि। तथाच चान्द्रस्य मुख्यार्थत्वेऽपि मुख्यार्थत्वस्वीकारेऽपि ईप्सितप्रतीतौ यथा ईप्सितज्ञानं पूर्व्वमपेक्षते तथा चान्द्रप्रतीतौ सूर्य्यसम्बन्धिमेषादिराशिभोगज्ञानं पूर्व्वमपेक्षते। तथा च मेषादिराशिस्थ रविप्रारब्ध-शुक्ल-प्रतिपदादिदर्शान्तत्वमिति चान्द्रवैशाखादिलक्षणे चान्द्रज्ञानस्य सौरज्ञानसापेक्षतया मेषादि-राशिस्थरविकत्वमिति सौरमासलक्षणस्य लघुतया शक्यतावच्छेदकत्वलाघवेन च सौरशक्तिः वैशाखादीनां प्रतीयते इति भावः। अतएव मासपदस्य सौरे शक्तिस्वीकारादेव। वर-चतुर्थी वरदाचतुर्थी। तथाचायं वचनार्थः। माघे मासि चतुर्थ्यां वरं वरदां दुर्गाम् आराध्य पञ्चम्यां श्रियं प्राप्य समृद्धये कुन्दकुसुमैः पूजा कार्य्या। अतएव भविष्योत्तरे माघशुक्लपञ्चमधिकृत्य—

"चतुर्थी वरदा नाम तस्यां गौरी सुपूजिता ।
सौभाग्यमतुलं कुर्य्यात् पञ्चम्यां श्रीरपि श्रियम् ॥"

"हरिराषाढ़क्रिया तावद्यावद्विष्णोः प्रबोधनम् ।
विबुद्धे तु हरौ कार्य्याः सूर्य्यगत्येतराः क्रियाः ॥"

अनेन विबुद्धे हरौ सूर्य्यगत्या* कर्म्मविधानात् योगनिद्रास्थे चान्द्रेण कर्त्तव्यताविधिः†। शयनात्प्रभृति चान्द्रस्य विरोधाच्च

---

* कथमनुत्कर्षः उत्कर्षाभावः। तुल्यवदुभयवचनत्वे चान्द्रे सौरे च उभयत्र तुल्यवच्छक्तिस्वीकारे।--सौरपरिग्रहे सौरमात्रशक्तिपरिग्रहे किं प्रमाणम् प्रमाणं नास्तीत्यर्थः। अतएव सौरशक्तौ प्रमाणलाभाभावादेव। अयमर्थः सौरार्थः विसृष्टः परित्यक्तः न स्वीकृत इत्यर्थः कष्टत्वात् तत्साधने कष्टसाध्यत्वात्। तथाच दीधितिन चान्द्र एव मासपदशक्तिः स्वीकृता न सौरे इति भावः। हरिराषाढ़क्रिया चान्द्रेण क्रिया सौरे हरिराषाढ़त्वासम्भवात्। यावद्विष्णोः प्रबोधनं हरेरुत्थानपर्य्यन्तमिति यावत्। विबुद्धे जागरिते सूर्य्यगत्या सौरेण।

† तथाच वचनस्य यथाश्रुतार्थपरतामादाय क्रमेण व्यभिचारं दर्शयति उपाकर्म्मेत्यादि। योगनिद्रास्थे हरिशयनमध्ये। चान्द्रेण कर्त्तव्यताविधिः चान्द्रमासेन चातुर्म्मास्यव्रतादेः कर्त्तव्यताविधिः।

तथाच वराहपुराणम्।

आषाढ़शुक्लद्वादश्यां पौर्णमास्यामथापि वा।
चातुर्म्मास्यव्रतारम्भं कुर्य्यात् कर्कटसंक्रमे ॥
तदभावे तुलार्केऽपि मन्त्रेण नियमं व्रती।
कार्त्तिकशुक्लद्वादश्यां विधिवत् तत् समाचरेत् ॥

महाभारते।

चतुर्थापि हि तच्चीर्णं चातुर्म्मास्यव्रतं नरः।
कार्त्तिक्यां शुक्लपक्षे तु द्वादश्यां तत् समापयेत् ॥

यद्यप्यत्र चातुर्म्मास्यव्रते द्वादश्यां पौर्णमास्याम् आरम्भपक्षे द्वयोरेव विध्योः चान्द्रविहितत्वं सम्भवति नापरयोः कर्कटसंक्रान्तितुलार्कारम्भयोः प्रत्युत सौरविहितत्वमेव, तथापि कार्त्तिकशुक्लद्वादश्यां समापनोक्तेः समाप्तिकालमादायैव तत्सङ्गतिरिति भावः।

ततःप्रभृति सौरस्य ग्रहणं वाच्यम्। यतः शयितेऽप्युपाकर्म्म-रोहिण्य-ष्टमी-श्रवणाद्वादशी-हरितालिकाचतुर्थी-सुखरात्रिप्रभृतीनां सौर-नियमस्य दर्शनात्। विबुद्धे तु हरौ वङ्गुत्सवार्थञ्चान्द्रनियम-दर्शनात्*। तथोत्तरत्रिकाधिमासे आगामिवत्सरे कर्कटे शयिते

---

* शयनात् प्रभृति चान्द्रस्य विरोधाच्चेति। आगामिनि तदा वर्षे कुलीरे माधवः स्वपेत् इति वचनात् इति शेषः। ततःप्रभृति शयनात् प्रभृति हरिशयनमारभ्य इत्यर्थः। अत्र उपाकर्म्म वेदारम्भवेदसमापननामकं कर्म्म। रोहिण्यष्टमी जन्माष्टमीव्रतम्। हरितालिकाचतुर्थी सिंहसम्बन्धिनी शुक्लचतुर्थी। सुखरात्रिका कार्त्तिकसम्बन्धिप्रतिपद्।

तथाच स्मृतिसमुच्चये।

उपाकर्म्म तु कर्त्तव्यं कर्कटस्थे दिवाकरे।
हस्तेन शुक्लपञ्चम्यां श्रावण्यां श्रवणेन च॥

अपरमाह गार्ग्यः।

सिंहे रवौ च पुष्यर्क्षे मध्याह्ने विचरेद्वहिः।
छन्दोगा मिलिताः कुर्युरुत्सर्गः सर्व्वछन्दसामित्यादि॥

भविष्योत्तरे।

सिंहराशिगते सूर्य्ये गगने जलदाकुले।
मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके॥
शशाङ्के वृषराशिस्थे नक्षत्रे रोहिणीयुते।
वसुदेवेन देवक्यामहं जातो जनाः स्वयम्॥
एकेनैवोपवासेन कृतेन कुरुनन्दन।
सप्तजन्मकृतात् पापात् मुच्यते नात्र संशयः॥

अथ श्रवणाद्वादशी भविष्योत्तरे।

मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता।
महती द्वादशी ज्ञेया उपवासे महाफला॥

भगवति श्रीपतौ शक्रदुर्गाविष्णूत्थानानां सिंहकन्यातुलास्वेव दर्श-नात्। शयिते विबुद्धे च हरौ मन्वन्तरादितिथीनां विहितत्वात्*

---

इति भाद्रपदे सिंहस्थरवौ सौरभाद्रे इत्यर्थः। शुक्लद्वादश्यां श्रवणनक्षत्रे तदुत्तर-पौर्णमास्यां शतभिषापूर्व्वभाद्रपदपादत्रयान्यतरावस्थिते चन्द्रे सिंहस्थे रवावेव सप्तमराश्य-वस्थानात् पौर्णमासी सम्भवति। कर्कटस्थे सूर्य्ये कन्यास्थे वा अन्त्योपान्त्यौ त्रिभौ ज्ञेया-वित्यादिवचनात् सास्मिन् पौर्णमासीति संज्ञायामिति पाणिनिसूत्राच्च तत्र शुक्लद्वादश्यां श्रवणनक्षत्रं न सम्भवति।

सिंहे गते दिनकरे सितचारुपक्षे हर्य्यंघ्रिपादमुपगच्छति वै शशाङ्के।

उत्तिष्ठते त्रिदिवनन्दिरवन्दवन्द्यो यास्याङ्गतो निशि निषीदति वज्रपाणिरित्यादि॥

तुलाराशिगते सूर्य्ये अमावास्यां नराधिप।
स्नात्वा देवान् पितॄन् भक्त्या संपूज्याथ प्रणम्य च।
कृत्वा तु पार्व्वणश्राद्धं दधिक्षीरगुड़ादिभिः॥
ततोऽपराह्णसमये घोषयन्नगरे नृपः।
लक्ष्मीः संपूज्यतां लोका उल्काभिश्चाभिवेष्ट्यतामित्यादि॥

तथाच। अत्र हरिशयनमध्यकरणीयोपाकर्म्मादौ सौरदर्शनात् योगनिद्रास्थे चान्द्रेण कर्त्तव्यताविधिर्न घटते इति भावः।

वङ्कुरुत्सवार्थं चान्द्रनियमदर्शनादिति। तथाच स्कन्दपुराणे।

फाल्गुन्याः पूर्व्वतो विप्राश्चतुर्द्दश्यां निशामुखे।
वङ्कुरुत्सवं प्रकुर्व्वीत दोलमण्डपपूर्व्वतः॥

फाल्गुन्याः फाल्गुनसम्बन्धिपौर्णमास्याः। अत्र फाल्गुनसम्बन्धिपौर्णमास्यवगतेश्चान्द्रत्वं प्रतीयते।

* उत्तरत्रिकाधिमासे श्रावणादिमासत्रयमध्ये मलमासपाते आगामिवत्सरे इति। तथाच श्रावणादौ मलमासपाते तत्पूर्व्वाषाढ़े हरिशयनस्य जातत्वात् मलमासात् परं मासद्वयौ आगामिवर्षे चान्द्राषाढ़ः कर्कट एव सौरश्रावण एव सम्भवतीति भावः।

सौरचान्द्रयोरन्यतरावधारणं न स्यात्। तस्मात् सौर एव मुख्यत्वात्* अनुत्कर्षः कर्म्मणाम्। तेनैतदपि वचनं† यथोक्तन्यायबलवत्त्वेनैव वर्णनीयम्। तेनाशोकाष्टमीमदनोत्सवमदनभञ्जिकादीनामपि सौरेष्वेव चैत्रादित्यविधिः सिध्यति। देवशयनादौ तु जघन्यचान्द्रपरिग्रहे सप्रपञ्चं प्रमाणं वर्णयिष्यामः। तस्मात् सौरो वैशाखादिर्मुख्यो जघन्यश्चान्द्र इति स्थितम्‡। सा वैशा-

तथाच राजमार्त्तण्डे।

कन्यासिंहकुलीरेषु यदा दर्शद्वयं भवेत्।
आगामिनि तदा वर्षे कुलीरे माधवः स्वपेत्॥

शक्रदुर्गाविष्णूत्थानां शक्रोत्थानदुर्गोत्सवविष्णुप्रबोधानामित्यर्थः। सिंहकन्यातुलासु यथाक्रमं सिंहे शक्रोत्थानं कन्यायां सौराश्विने दुर्गोत्सवः तुलायां सौरकार्त्तिके हरेरुत्थानञ्च। तथाच पूर्व्ववत्सरे श्रावणादित्रिके मलमासपाते आगामिनि वत्सरे कर्कटे हरिशयनवत् सिंहे शक्रोत्थानस्य कन्यायां दुर्गोत्सवस्य तुलायां हरेरुत्थानस्य चावश्यम्भाव इति भावः। शयिते हरिशयनमध्ये विबुद्धे हरेरुत्थानादूर्द्ध्वं मन्वन्तरादितिथीनां विहितत्वात् शयनमध्ये श्रावणस्य कृष्णाष्टमी भाद्रस्य तृतीया आश्विनशुक्लनवमी कार्त्तिकशुक्लद्वादशी च मन्वन्तरादित्वेन तिथिचतुष्टयमात्रं लभ्यते अपरञ्च उत्थानादूर्द्ध्वं लभ्यते।

* सौरचान्द्रयोरन्यतरावधारणमिति। श्रावणकृष्णाष्टमी भाद्रतृतीयाश्विनशुक्लनवम्यादयस्तिथयः किं सौरमाससम्बन्धिन्यः उत वा चान्द्रमाससम्बन्धिन्यः एकतरावधारणं न स्यात्। तस्मादिति तस्मात् उभयोः श्रुतिसिद्धतया उभयत्र शक्तिप्रसक्तौ प्रागुक्तयुक्तेः सौरे मुख्यत्वात् मासपदस्येति शेषः।

† अनुत्कर्षः कर्म्मणामिति। तथाच आह्निके पितृकृत्ये च चान्द्रमिष्टमित्यादिवचनात् कर्म्मणाम् औत्कर्षेण न चान्द्रे मासपदशक्तिनिर्णय इति भावः। एतदपि वचनं हिरण्याढ्क्रिया तावदित्यादिवचनम्।

‡ यथोक्तन्यायबलवत्त्वेनेति। उक्तन्यायमनतिक्रम्य सौरशक्तिनिर्णायकयुक्तिमनतिक्रम्य इत्यर्थः। तस्य बलवत्त्वेन।

ख्यामावास्या इत्यत्र तु मुख्यस्यान्वयाभावात् जघन्यस्यापि चान्द्रस्य परिग्रह इति*। मासशब्दस्य सौरसावननाक्षत्रचान्द्रेषु त्रिंशद्गुणितषष्टिनाड्यवच्छिन्नकालरूपतया† सर्व्वत्र वर्त्तमानो न

उपसंहरति तेनेति। अशोकाष्टमी स्कान्दे।

मीने मधौ शुक्लपक्षे अशोकाख्यां तथाष्टमीम्।
पिबेदशोककलिकाः स्नायाल्लौहित्यवारिणि॥

मदनोत्सवः भविष्ये।

चैत्रशुक्लत्रयोदश्यां दमनं मदनात्मकम्।
कृत्वा संपूज्य विधिवत् वीजयेद्व्यजनेन तु॥
तत्र सन्धुक्षितः कामः पुत्रपौत्रविवर्द्धनः।
चैत्रशुक्लत्रयोदश्यां पूजनीयो यथाविधि।
रतिप्रीतिसमायुक्तो ह्यशोकमणिभूषितः॥

दमनः दमनवृक्षः सन्धुक्षितः प्रीणितः। ग्रन्थकृन्मते मासपदस्य सौरशक्तेः अत्र चैत्रपदं सौरचैत्रपरम्।

मदनभञ्जिका स्कान्दपुराणसौरागमयोः।

मधुमासे तु संप्राप्ते शुक्लपक्षे चतुर्द्दशी।
प्रोक्ता मदनभञ्जीति सिद्धिदा तु महोत्सवे॥
पूजयिष्यन्ति ये मर्त्त्या तदङ्गभवपल्लवैः।
ते यान्ति परमं स्थानं मदनस्य प्रभावत इत्यादि॥

मधुमासे सौरचैत्रे। जघन्यचान्द्रपरिग्रहे अमुख्यचान्द्रपरिग्रहे सप्रपञ्चं सविस्तरम्। जघन्यः गौणः इति स्थितं व्यवस्थितम्।

* जघन्यस्यापि चान्द्रस्य परिग्रह इति। तथाच सा वैशाखस्य अमावास्या या रोहिण्या सम्बुध्यते इत्यत्र श्रुतौ रोहिण्या तत्घटकतया मुख्ये मेषस्थरवौ सौरवैशाखे असम्भवात् अगत्या वैशाखपदस्य चान्द्रपरतेति भावः।

† ननु यदि मासपदस्य सौरे शक्तिस्तदा कथं मासश्चतुर्विधः शास्त्र इत्युक्तं सङ्गच्छते।

पृथक् शक्तिमपेक्षते। चतुर्विधा एव मासाः पुराणे दर्शिताः।
"सौरः सौम्यश्च विज्ञेयो नाक्षत्रः सावनस्तथा।
मासश्चतुर्विधः शास्त्रे क्रियाभेदान्मनीषिभिः॥"
तत्र षष्टिनाड्यवच्छिन्नत्वं सावनमासे त्रिंशद्भागस्य नियतमेव*।

---

सामान्यधर्म्मावच्छिन्नानामेव वस्तूनां परस्परविरुद्ध-तद्व्याप्यधर्म्मप्रकारेण प्रतिपादनस्य विभागपदार्थत्वात् अतस्त्रिंशद्गुणितषष्टिनाड्यवच्छिन्नकालरूपताद्दशमासचतुष्टयानुगत-सामान्यधर्म्ममादाय तेषां विभागं सम्पादयितुं सामान्यधर्म्मं दर्शयति मासशब्दश्चेत्यादि। सौरः आदित्यैकराशिभोगावच्छिन्नः कालः सावनः सौरसावनः त्रिंशदहोरात्रात्मकः नाक्षत्रः आयुर्दाये स्मृतं प्राज्ञैर्नाक्षत्रं षष्टिनाडिकमिति नाड़ीषष्ट्या तु नाक्षत्रमहोरात्रं प्रचक्षते, तत्त्रिंशता भवेन्मास इति वचनोक्तषष्टिदण्डात्मकदिनत्रिंशद्दिनरूपोऽत्र नाक्षत्रमासो ग्राह्यः। न तु सर्व्वर्क्षपरिवर्त्तैस्तु नाक्षत्रमिति चोच्यते इति वचनोक्तसप्तविंशतिनक्षत्रात्मकनाक्षत्रमासः तत्र त्रिंशद्गुणितत्वासम्भवात्। त्रिंशद्गुणितषष्टिनाड्यवच्छिन्नकालरूपतया त्रिंशद्गुणितः त्रिंशद्भागेन गुणितः इत्यर्थः एतत्तु सावननाक्षत्रमासे नियतं सौरमासस्तु रविगतेर्मन्दत्वामन्दत्वाभ्यां त्रिंशद्दिनन्यूनाधिककालेऽपि सम्भवितुमर्हति। षष्टिनाड्यवच्छिन्नकालरूपतया इति षष्टिनाड्यवच्छिन्नेति नाक्षत्रमासे नियतं सौरसावनयोस्तु रविभुज्यमानकालमादाय किञ्चिदधिकषष्टिदण्डावच्छिन्नकालरूपतया इति बोद्धव्यम्। तथाच रविदिनभोगस्तु लग्नदण्डपलानि द्विगुणीकृतानि पलविपलान्यौत्सर्गिकाणि त्रिंशद्दिनन्यूनाधिकवशात्तु किञ्चिदधिकन्यूनानि च। तथाच दिने दिने यानि यानि भुक्तानि तानि रव्युदयलग्नस्य रात्रिशेषे प्रविष्टानि अवशिष्टानि दिवसीयानि एवं तत्सप्तमलग्नपलविपलानि दिनशेषप्रविष्टानि अवशिष्टानि रात्रिसम्बन्धीनि।

* कालरूपतया यद्यपि दिनतिथ्योर्भेदात् विभिन्नत्वं तथापि सूर्य्यक्रियाप्रचयचन्द्रक्रियाप्रचयत्वोपलक्षितकालत्वेन एकत्वं विवक्षितम्। वर्त्तमान इति तथाच सौरसावननाक्षत्रचान्द्रेषु त्रिंशद्भागगुणितषष्टिदण्डावच्छिन्नकालरूपत्वेन सर्व्वत्र वर्त्तमानोऽपि मासशब्दः पृथक् प्रत्येकविशान्तां शक्तिं नापेक्षते इत्यर्थः। शक्तिग्राहकप्रमाणाभावात् प्रागुक्तयुक्त्या

चान्द्रसौरनाक्षत्राणां त्रिंशद्भागस्य वृद्धिह्रासादिना यद्यप्यनियतं तथाप्यौत्सर्गिकं षष्टिनाड्यवच्छिन्नत्वमादाय लक्षणकरण*मतएव वृद्धिह्रासावित्युच्यते। अन्यथा वृद्धिह्रासव्यपदेशानुपपत्तेः†।

---

सौरे शक्तिसद्भावाच्च लक्षणया तादृशसामान्यधर्म्ममादाय अर्थबोधकत्वात्। सौम्यः सोमसम्बन्धी चान्द्र इत्यर्थः। षष्टिनाड्यवच्छिन्नत्वं सावनमासे त्रिंशद्भागस्य नियतमिति षष्टिनाड्यवच्छिन्नत्वं किञ्चिदधिकषष्टिनाड्यवच्छिन्नत्वमित्यर्थः। त्रिंशद्भागस्येति सावनस्त्रिंशता दिनैरिति वचनादिति शेषः।

* चान्द्रसौरनाक्षत्राणामिति तु लिपिकरप्रमादः। तथाच चान्द्रस्य चन्द्रकलाक्रियाप्रचयरूपतया तदुपलक्षितकालरूपतया वा वाणवृद्धिरसक्षयनियमात् ह्रासवृद्धी दृश्येते। सौरस्यापि रविगतेर्मन्दत्वामन्दत्वाभ्याञ्च ह्रासवृद्धी दृश्येते। नाक्षत्रस्य तु—

नाड़ीषष्ठ्या तु नाक्षत्रमहोरात्रं प्रचक्ष्यते।
तत्त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा॥

इति सूर्य्यसिद्धान्तोक्तनाक्षत्रमासस्य तु सावनमासप्रकृतितया सावनमासवदक्षापि नियतत्वमेव। परन्तु अर्कोदयैस्तथा इत्युक्तेः एकार्कोदयादूर्द्धम् अपरार्कोदयपर्य्यन्तकालस्य रविभुज्यमानकालमादाय षष्टिदण्डात् किञ्चिदधिकत्वम्। अतएव सिद्धान्तसन्दर्भे सावनं दण्डाः षष्टिरहः खत्र्यग्नखगुणांशाढ्यास्तदैनं भवेत्। अतः सावनसंवत्सरैकदिनाधिकवत्सरो नाक्षत्रो भवतीत्यनयोर्भेद इति स्मार्त्तः आह स्म।

औत्सर्गिकमिति। नाड़ीषष्ठ्या तु नाक्षत्रमहोरात्रं प्रचक्ष्यते।
तत्त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा।
ऐन्दवस्तिथिभिस्तद्वत् संक्रान्त्या सौर उच्यते॥

इति सूर्य्यसिद्धान्तवचनादिति शेषः।

† अतएव वृद्धिह्रासावित्युच्यते इत्यादि। तथाच सिद्धान्तशिरोमणौ।
मस्यन्ते परिमीयन्ते स्वकाला वृद्धिहानितः।
मासा एते स्मृता मासास्त्रिंशत्तिथिसमन्विता इति॥

तथाविधमासस्य चार्द्धं पक्षः। द्वादश मासाः संवत्सरः*। यत्तु त्रयोदश वा इत्युक्तं तत्र सौरसावनादिषु तावत् त्रयोदशत्वं नास्ति किन्त्वधिमासपाते चान्द्रस्य† तत्र संवत्सरपदस्यानेकशक्तिकल्पनानुपपत्तेः‡ त्रयोदशमासा अपि द्वादशैव एकसंज्ञत्वात्। एक एवाभ्यस्तो न पृथगेवासावित्यविरोधः द्वादशादिमासा इत्यस्य§

---

तेन चन्द्रस्य वृद्धिहानितः वृद्धिह्रासकालाभ्यां परिमिता ये स्वकालाः चन्द्रसम्बन्धिकालाः चन्द्रक्रियारूपाः तत्र ते मासाः स्मृता इत्यर्थः।

लघुहारीतः। चक्रवत् परिवर्त्तेत सूर्य्यः कालवशात् यतः।
अतः सांवत्सरं श्राद्धं कर्त्तव्यं मासचिह्नितम् इत्यादि॥

यतः सूर्य्यः कालवशात् चक्रवत् गतेर्मन्दत्वामन्दत्वाभ्यां गच्छेत् तथा चैकराशिमुपभुञ्जमानो रविर्मेषादौ मन्दगत्या कामप्येकां तिथिं द्विः स्पृशति तुलादौ शीघ्रगत्या कामप्येकां तिथिं न स्पृशति एतेन चान्द्रसौरयोरेव ह्रासवृद्धी सम्भवतः नान्येषाम्।

* तथाविधमासस्य चार्द्धं पक्ष इति। सावनमासस्य अर्द्धं पञ्चदशदिनानि पक्षः। सौरमासस्य ह्रासवृद्धिवशात् यदा त्रिंशद्दिनात्मको मासः तदा तदर्द्धं पञ्चदशदिनानि पक्षः यदा द्वात्रिंशद्दिनात्मको मासः तदा तदर्द्धं षोड़शदिनानि पक्षः इत्यादिक्रमेण कल्पनीयः। चान्द्रमासस्य च त्रिंशत्तिथ्यात्मकतया तदर्द्धं प्रतिपदादिपञ्चदशतिथयः पक्ष इति।

† यत्तु त्रयोदश वेत्युक्तम् इति। त्रयोदशमासा वा संवत्सर इत्यर्थः। तत्र सौरसावनादिषु आदिना नाक्षत्रमासपरिग्रहः। त्रयोदशत्वं नास्तीति तथाच द्वादश मासा संवत्सरः क्वचित् त्रयोदशमासा इति श्रुतौ क्वचिदिति मलमासपाते इत्यर्थः। तथाच सौरसावननाक्षत्रमासानां मलमासत्वाभावात् त्रयोदशत्वं न सम्भवतीति भावः।

‡ तत्र वत्सरपदस्यानेकशक्तिकल्पनानुपपत्तेरिति। तथाच द्वादशमाससमुदायत्वं वत्सरत्वम् एवं मलमासपाते त्रयोदशमाससमुदायत्वं वत्सरत्वम् एवं कल्पने अनेकशक्तिकल्पना स्यात्। गौरवात्तु तत्कल्पनयोरन्याय्यत्वमिति भावः।

§ ननु श्रुतिप्रतिपाद्यत्वात् नानाशक्तिरेवास्तु इत्यत आह त्रयोदशापि द्वादश एव एकसंज्ञत्वादिति। तथाच चैत्रादिवत् मलमासस्य संज्ञान्तरविरहात् मलमासपाते

सौरश्च वत्सरः षड्तवश्च तपस्तपस्यौ शिशिरावृतुः इत्यादिश्रुत्या शिशिरवसन्तग्रीष्मवर्षाशरत्हेमन्ताख्याः कथिताः। तत्र त्रिभिः शिशिराद्यृतुभिरुदगयनम्। तद्देवानान्दिनम्। वर्षादिभिः त्रिभिर्दक्षिणायनं सा रात्रिः। अस्य वचनं प्रागेव लिखितम्। त्र्यृतुर्वा संवत्सरो हेमन्तग्रीष्मवर्षाभिः*।

तदाह।

"ग्रैष्महैमन्तिकान्मासानष्टौ भिक्षुर्विचक्रमेत्।
दयार्थं सर्व्वभूतानां वर्षास्वेकत्र संवसेत्॥"

तदा च शिशिरस्य हेमन्तेऽन्तर्भावः वसन्तस्य ग्रीष्मे शरदो वर्षासु।

तदाह यतिधर्म्मे देवलः।

"न चिरमेकत्र वसेदन्यत्र वार्षिकात्†। श्रावणादिश्चतु-

---

आषाढ़ादेरपि शुद्धत्वाशुद्धत्वभेदेन द्विराषाढ़त्वात् षष्ट्या तु दिवसैर्मासः कथितो बादरायणैरिति व्यासवचनाच्च त्रयोदशत्वेऽपि एकलक्षणाक्रान्तत्वेन एकसंज्ञकत्वात् द्वादशमासा इत्यस्य अविरोधात् विरोधाभावात् एक एव अभ्यस्त एकमास एव अभ्यस्तः शुद्धत्वाशुद्धत्वभेदेन असौ मासः न पृथक् न स्वतन्त्रत्वेन प्रतीतस्तथाच द्वादशमासत्वावच्छिन्नकालत्वं संवत्सरत्वमिति भावः।

* सौरश्च संवत्सरः षड्तवः द्वादशमासात्मकः ऋतुर्मासद्वयं तदेव प्रमाणयति। तपस्तपस्यौ माघफाल्गुनौ। ऋतुर्वा संवत्सरः हेमन्तग्रीष्मवर्षाभिरिति तृतीया अभेदे। हेमन्तग्रीष्मवर्षाभिन्नः संवत्सरः। अत्र हेमन्तः मार्गपौषमाघफाल्गुनमासचतुष्टयरूपः। ग्रीष्मः चैत्रवैशाखज्यैष्ठाषाढ़मासचतुष्टयात्मकः। वर्षाः श्रावणभाद्राश्विनकार्त्तिकमासचतुष्टयरूपः। एतच्च सर्व्वलोकप्रत्यक्षसिद्धम्।

† एतदेवोपपादयति तदा चेत्यादि। शिशिरस्य हेमन्तेऽन्तर्भावः उभयोः शीत-

मासिको वार्षिकः कालः। अतो हेमन्तप्रत्यासन्नः शिशिरो हेमन्ततः प्रविष्टः ग्रीष्मे वसन्तः शरद्वर्षासु।”

चान्द्रादिभिस्तु न ऋतुव्यवस्था* न चायनस्य। किन्तु चान्द्रो मासः पितॄणामहोरात्रं तत्र कृष्णपक्षो दिनं शुक्लपक्षो रात्रिः। यथा मनुः।

“पित्र्ये रात्र्यहनी मासः प्रविभागस्तु पक्षयोः।
कर्म्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्व्वरी॥”

इति मासादेर्निर्णयः† ।

---

प्रधानत्वादिति भावः। न चिरमेकत्र वसेदिति। अत्र विशेषयति यतिमधिकृत्य काठकश्रुत्यम्।

एकरात्रं वसेत् ग्रामे नगरे पञ्चरात्रकम्।
वर्षाभ्योऽन्यत्र वर्षासु मासांश्च चतुरो वसेत्॥

* हेमन्तप्रत्यासन्नः शिशिर इति। हेमन्तः शिशिरोऽस्त्रियामिति कौषीतिः। चान्द्रादिभिस्तु न ऋतुव्यवस्था इति। तथाच वत्सरघटकयोरयनयोर्घटकत्वेन चान्द्रमासादिभिः ऋतुव्यवस्था नास्तीत्यर्थः। न तु सामान्यत ऋतुव्यवस्था नास्तीत्यर्थः। अतएव मुख्यश्राद्धं मासि मासि अपर्य्याप्तावृतुं प्रति इति वचनं सङ्गच्छते। हेमाद्रौ विशेषेण चान्द्रर्तुरुक्तः यथा त्रिकाण्डमण्डने। श्रौतस्मार्त्तक्रियाः सर्व्वाः कुर्य्याच्चान्द्रमासर्तुषु। चन्द्रः पुनः पुनर्जन्मा तस्माच्चन्द्रवशादृतुः॥ होत्रप्रकरणे चन्द्रं प्रकृत्याह तित्तिरिः। स ऋतून् कल्पयतीति चान्द्रोऽयं ऋतुकल्पः।

† पित्र्ये रात्र्यहनीति। मासः गौणचान्द्रमासः पित्र्ये पितृसम्बन्धिनी रात्र्यहनी। कर्म्मचेष्टास्विति निमित्तार्थे सप्तमी। कर्म्मकरणनिमित्तं कृष्णः कृष्णपक्षः तथाच पार्व्वणादिरूपपितृकर्म्मकरणयोग्यः कृष्णपक्षः। स्वप्नाय विशेषविहितातिरिक्तकर्म्मनिषेधाय शुक्लः शुक्लपक्षः रात्रिस्वरूप इत्यर्थः।

इति मासादेर्निर्णयः।

## सम्प्रत्यधिमासनिरूपणम् ।

अधिको मासोऽधिमासः । तस्य बीजमुपदर्शितं ज्योतिःशास्त्रे ।

"दिवसस्य हरत्यर्कः षष्टिभागमृतौ ततः ।
करोत्येकमहश्छेदं तथैवैकञ्च चन्द्रमाः ॥
एवमर्द्धतृतीयाणामब्दानामधिमासकम् ।
ग्रीष्मे जनयतः पूर्व्वं पञ्चाब्दान्ते तु पश्चिमम् ॥"*

दिवसस्याहोरात्रस्य षष्टिभागं दण्डमेकं सूर्य्यः प्रतिदिनं हरति लङ्घयति तेन ऋतौ षष्ट्याहोरात्रैः षष्टिनाड्याकर्षात्तिथिरेका सूर्य्येणाकृष्टा एवञ्चन्द्रेणापि । तेन चन्द्रार्काभ्यां प्रत्यृतु दिनद्वयाकर्षाद्वर्षेन द्वादश दिनानि लभ्यन्ते । दिनपदं तिथिपरम् । एवं तृतीयाब्देनापि अधिमासा निष्पद्यन्ते । अर्द्धतृतीयानामपि गणनक्रमादौचित्यप्राप्तमिदमुक्तं न तु नियतं तिथिवृद्धिह्रासादिना

---

* मासं निरूप्य तत्प्रसङ्गेनाधिमासं निरूपयितुं प्रतिजानीते सम्प्रत्यधिमासनिरूपणमिति क्रियते मयेति शेषः । कर्म्मयोग्यमासादधिकसञ्ज्ञकः कर्म्मानर्हो मासः अधिकमासः मलमास इत्यर्थः । षष्टिभागं षष्टिभागैकभागम् ऋतौ मासद्वये एकमहश्छेदम् एकतिथिराकर्षणम् । अर्द्धतृतीयानाम् अर्द्धं तृतीयं येषाम् । ग्रीष्मे माधवादिषट्के पूर्व्वं वैशाखादित्रिकपतितं पञ्चाब्दान्ते तु पश्चिमं श्रावणादित्रिकपतितम् अधिमासकं मलमासं चन्द्रार्कौ जनयत इत्यन्वयः । ननु दिवसस्याहोरात्रस्य दण्डमेकं रविर्हरति इत्यन्वये ऋतौ अहश्छेदपदेन कथम् एकतिथ्याकर्षणसम्भव इति चेन्न सावनाधिपस्य रवेस्तिथ्येकदण्डाकर्षणासम्भवात् । अहोरात्रस्य दण्डैकाकर्षणेऽपि चान्द्रमासस्य मलमासत्वात् चन्द्रस्य तत्समकालतिथ्येकदण्डकर्षणात् सावनदिनस्य वृद्धेरसम्भवाच्च सूर्य्याकर्षितदण्डैकेनागत्या तत्परिमिततिथ्युत्पत्तेरेव कल्पनीयत्वात् ।

न्यूनाधिकत्वदर्शनात्। इदन्तु नियतम् एकस्मादधिमासादारभ्य तृतीयसंवत्सरे भवतीति।

यत्तु।

"गतेऽब्दद्वितये सार्द्धे पञ्चपक्षे दिनद्वये।
दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः॥" इति।

तद्गणितविद्भिः सुगणितसिद्ध्यर्थमधिमासान्तरमेवोक्तं न तच्छास्त्रोपयुक्तमिति* न तद्विविच्यते। माधवादिषट्के चाधिमासपातः तत्रैव रविसंक्रान्तिद्वयदर्शनात्। तेन माधवादित्रिके पतने पूर्व्वं इत्युच्यते। उत्तरात्रिके पाते पश्चिम इत्युच्यते। अन्यथा अनादित्वात् कालस्य पौर्व्वापर्य्यानुपपत्तेः पूर्व्वापरत्रिकभेदेन

---

* ज्योतिषवचनेन सार्द्धद्विवर्षोपरि मलमासविधानात् तद्विरुद्धतया राजमार्त्तण्डीयवचनस्य विषयव्यवस्थाप्रदर्शनार्थमाशङ्कते यत्त्विति। सप्तदशदिनाधिकाष्टमासाधिकवर्षद्वयाव्यवहितोत्तरदिवसाष्टमभागनैयत्यं मलमासस्य यदुक्तमित्यर्थः स्वगणितसिद्ध्यर्थमिति।

सौरसंवत्सरस्यान्ते मानेन शशिजेन तु।
एकादशातिरिच्यन्ते दिनानि भृगुनन्दन॥

इति विष्णुधर्म्मोत्तरीयवचनपर्य्यालोचनया वर्षे एकादशतिथिवृद्धौ वर्षद्वये द्वाविंशतितिथिवृद्धिर्भवति। षण्मासेन तु सार्द्धपञ्चतिथिवृद्धिर्भवति। ततो दिवामानाधिकसप्तदशाहोरात्रसहितमासद्वयेन सार्द्धद्वयतिथिवृद्धौ मिलित्वा तादृशकालस्य त्रिंशत्तिथ्यात्मकाधिमासयोग्यकालत्वेन गणितसिद्धिप्रदर्शनार्थम् अधिमासान्तरम् अधिमाससम्भवयोग्यतामात्रं न तु वास्तविकाधिकमासान्तरं कालान्तरे अधिमासपाते तदानीमधिमासान्तरस्यालीकत्वात्। न तु शास्त्रोपयुक्तमिति। सूर्य्याचन्द्रमसोर्गतेर्मन्दत्वामन्दत्वाभ्यां कालान्तरीयाधिकमासपातस्यैष्टत्वेन तत्रैव शास्त्रीयस्य नैयत्याभावादिति भावः।

चाधिमासभेदकीर्त्तनं कार्य्यभेदार्थं तच्च वक्ष्यामः । एतदेव सङ्क्षिप्य परिशिष्टेन प्रदर्शितम् ।

मध्ये विषुवतोर्भानुर्वर्द्धयेत् यान्यहानि तु ।
तैः सम्भूयाधिको मासः पतत्येवं त्रयोदशः ॥

मेषगविषुवमारभ्य तुलागविषुवपर्य्यन्तेनेत्यर्थः । अतएव

"माधवादिषु षट्केषु मासि दर्शद्वयं यदा ।
द्विराषाढ़ः स विज्ञेयः शेते च श्रावणे हरिः ॥
दर्शद्वयं यदैकस्मिन् भवेद्दै विषुवान्तरे ।
द्विराषाढ़स्तदा कार्य्यः कर्किण्यर्के हरिः स्वपेत् ॥"

द्वादशमासेष्वधिमासपाते विषुवान्तर इति न विशिष्यात्* ।

यत्तु ।

"आषाढ़द्वयसंयुक्तं पौर्णमासीद्वयं यदा ।
द्विराषाढ़ः स विज्ञेयः विष्णुः स्वपिति कर्कटे ॥"

---

* न तद्विविच्यते इति गणितमात्रप्रसिद्धतया वास्तविकत्वाभावादिति शेषः । रविसंक्रान्तिलङ्घ्रा त्रिंशद्दिनाधिककालेन रविसंक्रान्त्या तस्य चान्द्रमासोल्लङ्घनस्य इत्यर्थः । पूर्व्वं इत्युच्यते इति माधवादिषण्मासस्य प्रकृतकालतया माधवादित्रिकस्य सुतरां पूर्व्वत्वमिति भावः । अन्यथा निरुक्ताभिप्रायं विना । कालस्य सृष्टिकालस्य । कार्य्यभेदार्थं हरिशयनादि-कार्य्यस्य मासविशेषज्ञापनार्थम् । विषुवतो महाविषुवज्जलविषुवतोः मेषसंक्रान्तितुला-संक्रान्त्योर्मध्ये भानुर्यानि अहानि वर्द्धयेत् तैर्वृद्धिभूतैरहोभिः मिलित्वा त्रयोदशाख्यः अधि-मासः पतति । एकस्मान्मलमासात् तृतीयवर्षमध्ये इति शेषः । मेषतुलासंक्रान्त्योर्मध्ये दिनवृद्धिर्यत अतएवेत्यर्थः । द्विराषाढ़ः द्विराषाढ़ादिरित्यर्थः । विषुवान्तरे महाविषुव-जलविषुवतोर्मध्ये । न विशिष्यात् न विशिष्य ब्रूयात् ।

तदपि मिथुनाधिमासपाते तथा भवतीति तस्यैव चिह्नभूतं, न तु तदपि पृथक् एव द्विराषाढ़लक्षणम्।

यदपि।

"वैशाखादितुलान्तेषु यदि पूर्णद्वयं भवेत्।
द्विराषाढ़ः स विज्ञेयः शयनावर्त्तनादिषु॥"

इति वचनं, तदपि मेषादिषु षण्मासेषु अधिमासपाते सति वैशाखादीनां पूर्णिमानाम् अन्यतमा द्विर्भवत्यधिमासस्यैव लक्षणम्। न चैकस्मिन् सौरे मासि पूर्णिमाद्वयमिति, तस्य पृथग्लक्षणमिति तस्यार्थः मूलभूतश्रुत्यन्तरकल्पनापत्तेः, किन्तु अधिमासस्तु चेत्तदानीं न पतितः*। "दिवसस्य हरत्यर्क" इत्यादिनोक्तस्य कारणस्य तृतीयाब्द एव हेतुत्वात्। अथ पूर्णिमाद्वयस्यैकनक्षत्रयोगान्मासद्वयमिति। तन्नाषाढ़ादिपदप्रवृत्तौ

---

* आषाढ़द्वयसंयुक्तमिति। शुद्धाशुद्धभेदेनाषाढ़द्वयसम्बन्धि इत्यर्थः। तस्य मलमासस्य चिह्नभूतमिति चान्द्रमासस्य द्वित्वात् मलमासपाते पौर्णमासीद्वयसम्भवादिति भावः। तस्यैव अधिमासस्यैव चिह्नभूतं ज्ञापकमात्रं न तु तदपि पृथगेव द्विराषाढ़लक्षणमिति यथा अमावास्याद्वयं रविसंक्रान्तिवर्ज्जितमिति मलमासलक्षणं तथा पूर्णिमाद्वयं रविसंक्रान्तिवर्ज्जितरूपवास्तविकपृथङ्मलमासलक्षणं न त्वित्यर्थः। लक्षणज्ञापकमात्रम्। ननु यथा अमावास्याद्वयं रविसंक्रान्तिवर्ज्जितम् इति मलमासलक्षणं तथा पूर्णिमाद्वयं रविसंक्रान्तिवर्ज्जितमिति मलमासलक्षणं स्यादित्याशङ्क्य निराकरोति न चेत्यादि। तस्य मलमासस्य। उत्तरत्र तस्येति वचनस्य। मूलभूतश्रुत्यन्तरकल्पनापत्तेरिति। अमावास्याद्वयस्य रविसंक्रान्तिवर्ज्जितत्ववत् पूर्णिमाद्वयस्य रविसंक्रान्तिवर्ज्जितत्वरूपमलमासलक्षणस्वीकारापत्तेः पूर्णिमाद्वयघटितस्य लक्षणपरत्वे व्यभिचारं दर्शयति अधिमासस्तु चेत्तदानीं न पतित इति। अधिमासस्तु न भवति परन्तु एकस्मिन् सौरे मासि पूर्णिमाद्वयं भवति।

नक्षत्रयोगस्य प्रबन्धेन कारणत्वनिराकरणात्*। सौरे रविभोगस्य चान्द्रे च तदारब्धत्वस्य प्रवृत्तिनिमित्तत्वात्। अत्र यद्यपि नाधिमासपातः तथाप्येकराशिस्थे पूर्णिमाद्वयादेव शयनाद्युत्कर्षो वचनात्। तन्न, "आभाका सितपक्षे"ष्वित्यादिवचनानां बाधापत्तेः†। वैशाखादिपूर्णिमाद्वये सति कर्कटस्थे शयनात्।

---

* ननु पूर्णिमाद्वयस्य रविसंक्रान्तिवर्जितत्वे मलमासो भवत्येव कुतो व्यभिचारः इत्याशङ्कां निराकरोति दिवसस्य इत्यादि। तथाच एकस्मान्मलमासात्तृतीयाब्दे एव मलमासनियमात् अत्र तृतीयाब्दो न भवति परन्तु एकस्मिन् सौरे पूर्णिमाद्वयं भवति तत्र व्यभिचारो घटत एवेति भावः। एकनक्षत्रयोगात् मासद्वयमिति। तथाच मलमासाभावेऽपि पूर्णिमाद्वयेऽपि विशाखाद्येकनक्षत्रयोगात् विशाखादिनक्षत्रयुक्ता पौर्णमासी सास्मिन्नित्यनेन एकलक्षणाक्रान्तत्वेन मासद्वयत्वमित्यर्थः। प्रबन्धेन पूर्व्वनिर्द्दिष्टप्रबन्धेन कारणत्वनिराकरणात् कदाचित् पौर्णमास्यां नक्षत्रयोगाभावेन व्यभिचारात् नक्षत्रयोगस्य कारणत्वासम्भवादित्यर्थः।

† तदा मासप्रवृत्तौ कस्य निमित्तता इत्यत आह सौरे रविभोगस्य इत्यादि। रविभोगस्य रविराशिभोगस्य। तथाच आदित्यराशिभोगेन सौरमासः प्रकीर्त्तित इति विष्णुधर्म्मोत्तरीयात्। तदारब्धस्य रविभुक्तराश्यारब्धस्य।

तथाच। मीनादिस्थो रविर्येषामारम्भप्रथमक्षणे।
भवेत्तेऽब्दे चान्द्रमासाः चैत्राद्या द्वादश स्मृताः॥

इति व्यासवचनात्। ननु यद्यपि न प्रकृतो मलमासः तथापि यथा मलमासस्थले आषाढ़ादेर्द्वित्वात् मलीभूतप्रथमाषाढ़ादेः परतः शयनादिकं भवति। तथा प्रकृतमलमासाभावेऽपि एकराशिस्थे पूर्णिमाद्वये सति वचनबलात् हरिशयनाद्यर्थं द्विराषाढ़ादिकमङ्गीकृत्य प्रकृताषाढ़ादेः परतः कल्पनीयाषाढ़ादौ हरिशयनादिकं भविष्यति इत्याशङ्कते अत्र यद्यपीत्यादि। दूषयति तन्नेति। आभाका सितपक्षेषु इत्यादिवचनानां बाधापत्तेः

न तत्सौरे नापि चान्द्रे आषाढ़े स्यात्। अविचारितवचनार्थ-परिग्रहे च। "मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत्" इति स्पर्शमात्रावगमात् अतिक्रमणं विनापि शयनोत्कर्षो* मलिम्लुच एव श्रावणे देवशयनं स्यात्। तस्मादेवमादिवचनानाम-मावास्यान्ताधिमासप्रदर्शकत्वमेव(१) न तु पृथग्लक्षणान्तरत्वम्। यतएव मेषादिषट्क एवाधिमासपातः अतएव तुलाविषुवादि-मेषपर्य्यन्तेन संक्रान्तितिथिवृद्धिभावं दर्शयति।

---

(१) अमावास्याद्यन्ताधिमासप्रदर्शकत्वमेवेति क्वचिदादर्शे पाठः।

---

रिति। आभाका इत्यादि नानावचने आषाढ़ादिः द्वादश्यामेव शयनादिविधानात्तत्कल्पनीय-पक्षस्य प्रकृताषाढ़ादित्वविरहात्तद्वाधापत्तेरित्यर्थः।

तथाच वराहपुराणम्।

द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे।
आभाका सितपक्षेषु शयनावर्त्तनादिकम्॥

अपरञ्च। आभाकाद्येषु मासेषु मधुरा माधवस्य तु।
द्वादश्यामेव कुर्व्वीत शयनावर्त्तनादिकम्॥

* बाधापत्तिं दर्शयति वैशाखादिपूर्णिमाद्वये सतीत्यादि। कर्कटशेषे इति तथाच प्रकृताषाढ़पक्षात् परतः कल्पनीयाषाढ़पक्षस्य कर्कटशेषे सम्भवात् सुतरां तत्पक्षस्य सौराषाढ़गतत्वाभावात् चान्द्राषाढ़गतत्वाभावाच्च तत्र हरिशयने तद्वचनबाधापत्तिरिति भावः। अविचारितवचनार्थपरिग्रहे च तात्पर्य्यविशेषम् अविचार्य्य वचनस्य यथाश्रुतार्थमात्रपरिग्रहे च अतिक्रमं विना चान्द्रमासोल्लङ्घनं विना शयनोत्कर्षो हरेः शयनोत्कर्षो यदि स्वीकर्त्तव्य इति शेषः।

"यां तिथिं समनुप्राप्य तुलां गच्छति भास्करः।
तयैव तिथ्या संक्रान्ति(१)र्यावन्मेषं न गच्छति॥"

ननु तुलादिषट्केऽपि वक्रातिचाराभ्यां सूर्य्यस्य संक्रमणे भवत्यधिमासः। तथाच वक्रातिचारवचनम्।

"यदा वक्रातिचाराभ्यां सूर्य्यसंक्रमणं भवेत्।
क्षत्रियाणामसृग्धारास्तदा पिबति मेदिनी॥
न्यूनातिचारे दुर्भिक्षं राष्ट्रं शस्त्रसमाकुलम्।
राजपुत्त्रसहस्रासृक्क्लेदार्द्रा चापि मेदिनी॥"

तथाहि पञ्चपञ्चाशदधिकनवशतसङ्ख्यके शकाब्दे तुलासंक्रान्तिरमावास्यायां भूता। ततोऽतिचारेण वृश्चिकसंक्रान्तिः प्रतिपदि पुनश्च ऋजुगत्या अमावास्यायां धनुःसंक्रान्तिर्भूतो दृष्टः तुलादावधिमासपातः अन्धुकेन लिखितः। अतएव

"लोकस्य फाल्गुने हृष्टी राज्ञो विजयमादिशेत्।"*

(१) तयैव सर्व्वसंक्रान्तिरिति पाठो ग्रन्थान्तरे दृश्यते।

* मलिम्लुच एव श्रावणे देवशयनं स्यादिति। अत्र एवकार इवार्थे अव्ययानामनेकार्थत्वात् मलिम्लुच इवेत्यर्थः तथाच यत्र सौराषाढ़े अमावास्याद्वयमात्रं न तु चान्द्रमासोल्लङ्घनं भवति तत्र यदि यथाश्रुतवचनार्थमादाय हरिशयनोत्कर्षः स्वीक्रियते तदा आषाढ़मलमासे यथा श्रावणे हरिशयनं भवति तथात्रापि स्यादिति भावः। तस्मात् वचनस्य यथाश्रुतस्यार्थस्याग्राह्यत्वात् एवम् आदिवचनानाम् आषाढ़द्वयसंयुक्ता पौर्णमासीद्वयं यदा इत्यादिवचनानाम् अधिमासप्रदर्शकत्वमेव मलमासज्ञापकत्वमात्रम्। मेषादिषट्क एव सौरवैशाखाद्याश्विनपर्य्यन्त एव। तुलाविषुवादि तुलासंक्रान्तिरूपजलविषुवादीत्यर्थः। मेषपर्य्यन्तेन मेषः पर्य्यन्तं सीमा यस्य तेन कार्त्तिकादिचैत्रावधिकेनेत्यर्थः। संक्रान्तितिथिवृद्धिभावं सूर्य्यस्य

इति फलश्रुतिः। फाल्गुने अधिमासादित्यर्थः। तिथ्यन्तरे च बहुश एव वक्रातिचारदर्शनात् अत्रासम्भवः कथमाशङ्क्यताम्*। तथायमपरो दोषः पूर्व्वदर्शिततुलाधिमासे तुलास्थरव्युपक्रान्तं मासद्वयम् अपरश्च मासो धनुःस्थोपक्रान्त इति वृश्चिकस्थरव्युपक्रान्तस्य मार्गशीर्षस्य लोपः स्यात्†। तथा तस्मिन्नेव वत्सरे अमावास्यायां धनुःसंक्रान्तौ भूतायां विषुवपर्य्यन्तं तस्यामेव संक्रान्तौ वृषादिसंक्रान्तेश्चैकद्विकतिथिवृद्धिनियतत्वात्तत्राप्यधिमासान्तरमिति सार्द्धसंवत्सरद्वयेनैकोऽधिमासः पततीति न स्यात्। अत्रोच्यते "दिवसस्य हरत्यर्क" इति चन्द्रार्कक्वताहश्छेदेन सार्द्धवत्सरद्वयेन त्रिंशत्तिथीनामेव लाभात्तैरेव सम्भूयाधिमासपातस्य वाचनिकत्वात् अधिमासद्वयं कारणाभावादेव न सम्भ-

---

शीघ्रगमनात् न्यूनकालेन संक्रान्तितिथिवृद्धिभावं तिथिवृद्धित्वं सौरमासादधिककालेन चान्द्रमाससमापनमित्यर्थः। वक्रातिचाराभ्यां रविगतेर्मन्दत्वामन्दत्वाभ्यामित्यर्थः वस्तुतो रवेर्वक्रातिचारासम्भवात्। ततोऽतिचारेण रवेः शीघ्रगत्या। अमुकेन अमुकभट्टेन दृष्टः लिखितश्च इत्यन्वयः। यत एव माधवादिभिर्न्नेऽपि अधिमासः अतएवेत्यर्थः। फाल्गुने अधिमासात् लोकस्य दृष्टिर्हर्षः विजयम् आदिशेत् कथयेत्।

* तिथ्यन्तरे तुलासङ्क्रान्त्यवच्छिन्नतिथिसजातीयतिथिभिन्नतिथौ रविगतेर्मन्दमन्दत्ववशेन सङ्क्रान्तिदर्शनात् अत्र तुलादिषण्मासमध्ये असम्भवः अधिमासस्यासम्भवः।

† दोषान्तरं दर्शयति अथायमपरो दोषः। तदेव निर्दिशति पूर्व्वदर्शितेत्यादि। तुलास्थरव्यारब्धमासद्वयं तुलास्थरव्यारब्धत्वेन चान्द्रकार्त्तिकद्वयम्। धनुःस्थोपक्रान्तः धनुःस्थरव्यारब्धः इतीति इति हेतौ। तथाहि तुलास्थरव्यारब्धत्वेन चान्द्रकार्त्तिकद्वयानन्तरं धनुस्थरव्यारब्धत्वेन चान्द्रपौषत्वात् चान्द्रकार्त्तिकानन्तरं वृश्चिकस्थरव्यारब्धत्वाभावात् वृश्चिकरव्युपक्रान्तस्य चान्द्रमार्गशीर्षस्य लोप इत्यर्थः।

वति। ननु कोऽयं दृष्टापलापः*। सत्यं तुलादित्यादौ दृश्यमानो नायमधिमासः किन्तूत्पातादधिमाससधर्म्मायम्। अत एव प्रतिपदि वृश्चिकसंक्रान्तौ तस्य तुलारब्धत्वेऽपि† "यां तिथिं समनुप्राप्य" इति शास्त्रतो वृश्चिकारम्भार्हत्वात्तत्रानारम्भेऽपि शङ्खवेलान्यायेन प्रत्यभिज्ञानाद्भवति मार्गशीर्षपदवाच्यता‡।

* तस्मिन् वत्सरे इति यस्मिन् वत्सरे तुलायाम् अधिमासः तस्मिन्नेव वत्सरे इत्यर्थः। विषुवपर्य्यन्तं मेषसंक्रान्तिपर्य्यन्तम्। तस्यामेव अमावास्यायामेव वृषादिसंक्रान्तिश्चेति आदिना मिथुनकर्कटयोः परिग्रहः। एकद्विकत्रिकतिथिवृद्धिनियतत्वात् प्रतिपद्द्वितीयातृतीयातिथिवृद्धिनियतत्वात्। तथा च यस्मिन् वत्सरे वृषसंक्रान्तिः प्रतिपदि, मिथुनसंक्रान्तिः द्वितीयायां, कर्कटसंक्रान्तिश्च तृतीयायां भूताः, तस्मिन् एव मेष एव अधिमासान्तरं मलमासान्तरम् एकोऽधिमासः पततीति इति हेतौ न स्यादिति एकवत्सरे मलमासद्वयमिति शेषः। तैरेव त्रिंशत्तिथिभिरेव सम्भूय मिलित्वा अधिमासस्य एकाधिकमासस्यैव वाचनिकत्वात् अधिमासद्वयं न सम्भवतीत्यन्वयः। प्रमाणान्तरापेक्षया प्रत्यक्षस्य स्वतः प्रमाणत्वादाशङ्कते नन्वित्यादि कोऽयं कथमित्यर्थः। दृष्टापलापः दृष्टस्य तुलायां मेषे च दृष्टस्य मलमासद्वयस्य कथमपलाप इत्यर्थः।

† स्वीकृत्य समाधत्ते सत्यमित्यादि। दृश्यमानः दृश्यमानोऽपीत्यर्थः। किन्तूत्पातादधिमाससधर्म्मायम् उत्पातेन मलमाससमानधर्म्मा न तु प्रकृतमलमास इत्यर्थः। तथाच संवत्सरप्रदीपे।

"उत्पातेन भवेद्यस्तु कालस्यातिक्रमः क्वचित्।
न स स्याद्व्यवहाराङ्गमित्याह भगवाञ्छिवः॥"

अत एव न प्रकृताधिमासः अतएवेत्यर्थः। तस्य चान्द्रमासस्य।

‡ प्रकृताधिमासत्वाभावे प्रमाणं दर्शयति यां तिथिमित्यादि। तया तिथ्या। शङ्खवेलेति दक्षिणप्रदेशे मध्याह्नसमये प्रतिनियतं शङ्खध्वनिर्भवति तत् श्रुत्वा बुभुक्षवो लोकाः भोजनार्थमागच्छन्ति। अथ कदाचित् तदानीं यदि शङ्खध्वनिर्न भवति इयं शङ्खवेला इत्यवधार्य्य आगच्छन्ति इति न्यायस्यार्थः। प्रत्यभिज्ञानादिति पूर्व्वानुभूतपदार्थस्य इदन्ता-

अतिचारपदाच्च स्वस्थानमतीत्य चरतीत्यमावास्यैव वृश्चिक-संक्रान्तेः स्वस्थानमवसीयते वृषादिसंक्रान्तिषु तु पूर्व्वतिथ्यतिक्रमेऽपि नातिचारपदप्रयोगः शास्त्रे। तत्र तिथिविशेषस्य संक्रान्ति-स्थानतया शास्त्रतोऽनधिगमात्। व्यभिचारेण प्रमाणान्तराप्रचारात्। अतएव यदा कन्यायामधिमासपाते प्रतिपदि तुला-संक्रान्तौ भूतायां वक्रगत्या सूर्य्योऽमावास्यायां वृश्चिकं याति पुनः ऋजुगत्या* प्रतिपदि धनुःसंक्रान्तिस्तदा वृश्चिके संक्रान्ति-

---

वच्छेदेनाभेदावगाहिज्ञानं प्रत्यभिज्ञानम्। मार्गशीर्षपदवाच्यता इति तथाहि तुलासंक्रान्ते-रमावास्यायां जातत्वात् प्रतिपदि वृश्चिकसंक्रान्तावपि तस्या वृश्चिकसंक्रान्तेरमावास्यायामेव योग्यत्वात् तदुत्तरशुक्लप्रतिपदादिदर्शान्तमासस्य तुलास्थरव्यारब्धत्वेऽपि योग्यतया वृश्चिकस्थ-रव्यारब्धत्वात् मुख्यचान्द्रमार्गशीर्षत्वमित्यर्थः।

* तदेवोपपादयति अतिचारपदादित्यादि। तत्र मेषादौ अधिमासस्य प्रकृतत्वा-देवोपादयति वृषादिसंक्रान्तिषु त्विति। पूर्व्वतिथ्यतिक्रमेऽपि अमावास्यामतिक्रम्य प्रतिपदि वृषादिसंक्रान्तिषु सतीषु इत्यर्थः। नातिचारपदप्रयोगः शास्त्रे शास्त्रे अतिचार-पदप्रयोगो नास्तीत्यर्थः। तथाच "यां तिथिं समनुप्राप्य तुलां गच्छतीति" वचनमुक्त्वा यदा वक्रातिचाराभ्यामिति वचनस्योक्तत्वात् पूर्व्ववचने "यावत् मेषं न गच्छती"त्युक्त-त्वाच्च प्रतिपदि वृषादिसंक्रान्तौ भूतायामपि नातिचारपदप्रयोगः सम्भवतीति भावः। तत्र मेषवृषादिसंक्रान्तिषु तिथिविशेषस्य अमावास्यादेः संक्रान्तिस्थानतया मेषवृषादि-संक्रान्तिस्थानतया इत्यर्थः तथाच "यावन्मेषं न गच्छति" इत्युक्तत्वात्। मीनपर्य्यन्तस्यैव अमावास्यायां योग्यता न वृषादेरिति भावः। व्यभिचारेण अमावास्याभिन्नतिथौ वृषादि-संक्रान्तिदर्शनेन प्रमाणान्तराप्रचारात् प्रमाणान्तरसत्ताया अभावात्। यत एव तुलादि-षण्मासे तुलासङ्क्रान्त्यवच्छिन्नतिथिसजातीयतिथौ मीनपर्य्यन्तसङ्क्रान्तेर्योग्यतास्वीकारः अत-एवेत्यर्थः। वक्रगत्या मन्दगत्या सूर्य्यस्य वक्रातिचाराभावात्। ऋजुगत्या स्वभावगत्या इत्यर्थः।

शून्यः प्रतिपदादिदर्शान्तो मासः पतति तस्य वृश्चिकारब्धत्वेन पूर्व्वस्य च कन्यारब्धत्वेनाकार्त्तिकत्वात् चान्द्रकार्त्तिकलोपाद्देवोत्थानं विफलं स्यात्*। तुलादित्यगताश्विनशुक्लपक्षस्य दुर्गोत्थानार्थत्वात्। वृश्चिकसंक्रान्त्यमावास्यायाञ्च लक्ष्मीप्रबोधार्थत्वात्। 'तस्मिन् शुक्ले सदा विष्णुरिति' वचनेन लक्ष्मीप्रबोधनान्तरितशुक्लपक्ष एव देवोत्थानं सदेति नियमात्†। ततश्च वक्रातिचारकृत-

---

* वृश्चिके सङ्क्रान्तिशून्यः प्रतिपदादिदर्शान्तो मासः पततीति। अमावास्यायां वृश्चिकसङ्क्रान्तेर्जातत्वात् तदुत्तरशुक्लप्रतिपदादिदर्शान्तो मासः वृश्चिकसङ्क्रान्तिशून्यो भवतीत्यर्थः। तस्य चान्द्रमासस्य वृश्चिकारब्धत्वेन वृश्चिकस्थरव्यारब्धत्वेन। पूर्व्वस्य च तत्पूर्व्वचान्द्रमासस्य च कन्यारब्धत्वेन कन्यास्थरव्यारब्धत्वेन अकार्त्तिकत्वात्। तथाच तुलासङ्क्रान्तेः प्रतिपदि जातत्वात्। स्वाव्यवहितप्राक्क्षणावच्छिन्नकन्यास्थरव्यारब्धतया तुलास्थरव्यारब्धत्वाभावेन च तच्चान्द्रमासस्य

"मीनादिस्थो रविर्येषामारब्धप्रथमे क्षणे" इति व्यासवचनात्

आश्विनत्वेन कार्त्तिकत्वाभावादित्यर्थः। देवोत्थानं हरेरुत्थानं, विफलं स्यादिति, चान्द्रकार्त्तिके तस्य विधानात्।

तथाच। "अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति।

तस्मिन् शुक्ले सदा विष्णुस्तुलायामथ वृश्चिके॥"

इति तस्मिन् तदुत्तरशुक्लपक्षे तुलादित्यगतामावास्योत्तरशुक्लपक्षस्तु चान्द्रकार्त्तिकस्यैव भवति अन्यस्यासम्भवात्।

† ननु "तुलायामथ वृश्चिके" इत्यनेन तुलायां शुक्लपक्षे हरिबोधनविधानात् तुलागताश्विनशुक्लपक्षे हरिप्रबोधनं भवतु इत्यत आह तुलादित्यगताश्विनशुक्लपक्षस्य दुर्गोत्थानार्थत्वात्। तथाहि आश्विने दुर्गोत्थानविधानात् तत्परतः तुलायाञ्च हरिप्रबोधनविधानाञ्च तुलागताश्विनशुक्लपक्षे दुर्गोत्थानमेवोचितं न तु विष्णूत्थानम्। तथाच—

मासलङ्घनेऽपि 'यां तिथिं समनुप्राप्य' वचनेन प्रतिपद एव संक्रान्त्यर्हत्त्वज्ञापनात्। तुलोपक्रान्त्यर्ह एवासौ मास इति तस्य कार्त्तिकत्वात्तत्रैव देवोत्थानमित्यवश्यं वाच्यम्। अतएवासौ नाधिमासो न मलिम्लुचः* सार्द्धवत्सरद्वये त्रिंशत्तिथिभिरेव पतितस्य तथात्वात्। अतएव प्रतिपदि तुलासंक्रान्तौ तुलायां वक्रेणामावास्यादौ यदि वृश्चिकं रविर्व्रजति तदैकस्याः कन्यागतत्वादपरस्य वृश्चिकगतत्वात् 'अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चतीति' नैकत्रापि स्यात्तदभावाच्च, तस्मिन् शुक्ले सदा विष्णुरित्येतदपि, व्याहन्येत†। तेन तत्रापि यैवासौ वक्रेण वृश्चिकगता

---

"कर्किण्यर्के हरौ सुप्ते शक्रध्वजक्रियाश्विने।

तुलायां बोधयेत् देवीं वृश्चिके तु जनार्द्दनमिति"

वचनविरोधः स्यात्। सदेति "तस्मिन् शुक्ले सदा विष्णु"रितिवचनस्थसदापदेनेत्यर्थः।

* उपसंहरति ततश्चेति। वक्रातिचारकृतमासोल्लङ्घनेऽपि रवेः मान्द्यन्द्राग्गीघ्रगतिकृतचान्द्रमासोल्लङ्घनेऽपि। सङ्क्रान्त्यर्हत्वज्ञापनात् वृश्चिकसङ्क्रान्तियोग्यत्वज्ञापनात्। तुलोपक्रान्तार्ह एवासौ मासः तुलास्थरव्यारब्ध एवासौ मासः इति हेतौ देवोत्थानं हरेरुत्थानम् अतएव योग्यतया तस्य कार्त्तिकत्वस्वीकारादेव योग्यतावलम्बनेन स्वीकृतः असौ कार्त्तिकः यतो नाधिमासः नाधिकमासप्रयोजकः अतो न मलिम्लुचः न मलमास इत्यर्थः।

† सार्द्धसंवत्सरद्वये इत्यादि। सार्द्धसंवत्सरद्वये त्रिंशत्तिथिभिरेव सार्द्धसंवत्सरद्वयसञ्चितत्रिंशत्तिथिभिरेव, पतितस्य आगतस्य चान्द्रमासस्य तथात्वात् मलमासत्वात्। प्रतिबन्धिं दर्शयति अतएवेति। क्रमसञ्चितत्रिंशत्तिथिभिः आगतस्य चान्द्रमासस्य मलमासत्वादेव एकस्याः पूर्व्वामावास्यायाः कन्यागतत्वात् प्रतिपदि तुलासङ्क्रान्तौ सत्यां सुतरां पूर्व्वामावास्यायाः कन्यागतत्वम्। अपरस्यापरामावास्यायाः वृश्चिकगतत्वात् अमावास्यायां वृश्चिकसङ्क्रान्तौ सत्यां सुतरां परामावास्यायाः वृश्चिकगतत्वम्। इति इति वचनोक्तं तुलादित्ये अमावास्यायां लक्ष्म्या उत्थानम् एकस्यामपि अमावास्यायां न स्यात् अमावास्यायास्तुला-

सा तुलादित्यस्यैवोत्पाता वृश्चिकस्थेत्यर्हतया तत्रैव सुखरात्रि-रूपः काल इत्यादि* क्रियत इत्यविरोधः। यदा पुनरमावास्या-यामेव तुलासंक्रान्तिर्भूता न भूतो माधवादिषट्केऽधिमासपातः अनन्तरमतिचारेण प्रतिपदि वृश्चिकसंक्रान्तौ वृत्तायामपरा अपि संक्रान्तयो विषुवपर्य्यन्तं प्रतिपद्येव भवन्ति तदाधिमासान्तरस्या-पतितत्वात् पूर्व्वाधिमासाच्चार्द्धतृतीयवत्सरसञ्चितदिवसैरधिमास-स्यावश्यम्भावात् अन्यस्य चानुपलम्भात् अत्र च बाधकाभावेन

---

दित्यगतत्वाभावात् तदभावाच्च लक्ष्म्या उत्थानाभावाच्च। व्याहन्येत लक्ष्म्या उत्थानात् परतो हरेरुत्थानविधानात्।

* उपसंहरति तेनेति। तत्रापि अमावास्यायां वृश्चिकसङ्क्रान्तावपि या एवासौ अमावास्या वृश्चिकगता सामावास्या तुलादित्यस्यैव उपगता वृश्चिकस्था इति हेतोः अर्हतया प्रतिपदि वृश्चिकसङ्क्रान्तेः स्थानयोग्यतया तत्रैव तुलादित्यगतामावास्यायामेव "सुखरात्रिरूपः काले" इत्यादीति। तथाच भविष्योक्तं यथा—

"सुखरात्रिरूपः काले प्रदीपोज्ज्वलितालये।
बन्धुर्बन्धूनवन्धूंश्च वाचा कुशलयार्च्चयेत्॥
प्रदीपवन्दनं कार्य्यं लक्ष्मीमङ्गलहेतवे।
गोरोचनाचतच्चैव दद्यादङ्गेषु सर्व्वतः॥
विश्वरूपस्य भार्य्यासि पद्मे पद्मालये शुभे।
महालक्ष्मि नमस्तुभ्यं सुखरात्रिं कुरुष्व मे॥
वर्षाकाले महाघोरे यन्मया दुष्कृतं कृतम्।
सुखरात्रिप्रभातेऽद्य तन्मे लक्ष्मीर्व्यपोहतु॥
या रात्रिः सर्व्वभूतानां या च देवेष्ववस्थिता।
संवत्सरप्रिया या च सा ममास्तु सुमङ्गला॥" इत्यादि।

तुलादित्य एव संक्रान्तिशून्यस्य मासस्य पश्चात् कर्त्तव्यसंक्रान्तितिथ्यतिक्रमस्य इदानीमेव कृतत्वमवधार्य्याधिमासत्वं निर्णीयते समाधानान्तरं पुनरन्यत्र पश्यामः अतएव* नाशङ्कितमिदं कैश्चित्। कथं पुनरसावधिमासो ज्ञेय इत्यपेक्षायामाह परिशिष्टः† ।

"तस्यार्कौ दर्शकश्चैकराशौ दर्शद्वयातिगः ।
मलिम्लुचः स विज्ञेयः कर्म्मणां फलनाशकृत् ॥"

एकस्मिन्राशौ सूर्य्यो दर्शद्वयमतिक्रम्य गच्छन्नधिमासं दर्शयति। सहजगत्या न, वक्रातिचाराभ्याम्। एतच्चतुर्द्दश्याममावास्यायां वा पूर्व्वसंक्रान्तौ प्रतिपदादिके च परसंक्रान्तौ भवति। तदाहि प्रतिपदादिदर्शान्तः सूर्य्यसंक्रान्तिशून्योऽधिमास एव मलिम्लुचः।

---

* अविरोध इति लक्ष्मीप्रबोधहरिप्रबोधादेरविरोध इत्यर्थः। अतिचारेण शीघ्रगत्या विषुवपर्य्यन्तं मेषपर्य्यन्तम् अधिमासान्तरस्य मलमासान्तरस्य अर्द्धतृतीयवत्सरसञ्चितदिवसैः अर्द्धं तृतीयं यस्य इति सार्द्धवत्सरद्वयसञ्चिततिथिभिरित्यर्थः। अन्यस्य माघवादिषट्कपतितस्य अनुपलभ्यत्वात् अदृष्टत्वात् अत्र च तुलादित्ये च बाधकाभावेन सार्द्धवत्सरद्वयसञ्चितत्रिंशत्तिथ्याकर्षादिति शेषः। यत एव तुलादिषट्के मलमासस्यावश्यकत्वम् अतएवेत्यर्थः।

† नाशङ्कितमिदं कैश्चिदिति। यद्यपि तुलादेरनियतस्थानतया आशङ्का जायते तथापि नियतस्थानेषु माघवादिषट्केषु अधिमासान्तरादर्शनात् एकस्मात् मलमासात् तृतीयाब्दे मलमासान्तरस्यावश्यम्भावादेव तुलादौ नाशङ्कनीयमिति भावः। कथं पुनरधिमासो ज्ञेय इति अनियतस्थानतया तुलादौ कथमधिमासो ज्ञातव्य इत्यर्थः। इत्यपेक्षायाम् इत्याकाङ्क्षानिवृत्तये आह मलमासज्ञापकलक्षणमिति शेषः।

तदाह परिशिष्टः।

"अमावास्यापरिच्छिन्नं रविसंक्रान्तिवर्ज्जितम्।
अधिमासं विजानीयात् गर्हितं सर्व्वकर्म्मसु॥"

अमावास्यापरिच्छिन्नमाद्यन्तयोरमावास्यान्तद्वयक्रोड़ीकृतम्।

तथापरमाह।

"द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनक्षयः।
अधिमासः स विज्ञेयः संक्रान्तिर्यत्र नो रवेः* ॥"

अतएवाह।

---

* तस्यार्क इति। एकराशौ दर्शद्वयातिगः स्वाव्यवहितपूर्व्वत्वस्वघटकत्वोभयसम्बन्धेन दर्शद्वयान्त्यक्षणद्वयमतिक्रम्य वर्त्तमानोऽर्कः तस्य मलमासस्य दर्शकः ज्ञापकः। स्वपदं मलमासत्वेनाभिधेयमानचान्द्रमासपरं स मलमासः यज्ञानां फलनाशकृत् विज्ञेय इत्यन्वयः। दर्शद्वयं दर्शद्वयान्त्यक्षणद्वयम्। दर्शयति ज्ञापयति। सहजगत्या नेति न भवतीत्यर्थः। केन भवतीत्यपेक्षायामाह वक्रातिचाराभ्यां मन्दशीघ्रगतिभ्यामित्यर्थः। एतच्च मलमाससम्पादनं च चतुर्द्दश्यामिति मलमासस्यावश्यम्भावज्ञापनार्थमुक्तम्। प्रतिपदादिदर्शान्तः मुख्यचान्द्र इत्यर्थः। अधिमास एवेति अधिमास एवेत्यर्थः। अत्र एवकारस्य व्यत्ययेन सूर्य्यसंक्रान्तिशून्य एव अधिमासः मलिम्लुच इत्यन्वयः। तथाच पूर्व्वामावास्यान्त्यक्षणे क्रियोत्पत्तौ प्रतिपदाद्यक्षणे राश्यन्तरयोगे तच्छुक्लप्रतिपदादिदर्शान्तमासस्य पूर्व्वराशिस्थरव्यारब्धतया पूर्व्वमासत्वेन मासद्वयाभावात् रविसंक्रान्तिशून्यत्वाभावाच्च न मलमासत्वमिति भावः। अमावास्यापरिच्छिन्नमित्यस्यार्थमाह आद्यन्तयोरित्यादि। आद्यन्तयोरिति सप्तम्या वृत्तित्वमर्थः। अमावास्यान्तद्वयक्रोड़ीकृतं स्वाव्यवहितपूर्व्वत्वस्वघटकत्वोभयसम्बन्धेन संक्रान्तिशून्यामावास्याद्वयान्त्यक्षणद्वयविशिष्टम् एकराशिवृत्तिचान्द्रमासं सर्व्वकर्म्मसु गर्हितं मलमासं जानीयादित्यन्वयः। यस्मिन् सावनात्मकैकवारे। यत्र चान्द्रमासे रविसंक्रान्तिर्नो नास्ति नो निषेधे।

"वत्सरान्तर्गतः पापो यज्ञानां फलनाशकृत् ।
नैर्ऋतैर्यातुधानाद्यैः समाक्रान्तो विनामकः ॥"

विरुद्धनामको विनामकः तस्य मलिम्लुचत्वात् न तु नामशून्यत्वात् । 'एकसंज्ञौ यदा मासाविति' विरोधात् तस्यापि परमासस्यैव तद्राशिस्थसूर्य्यारब्धत्वेन तन्नामत्वात् । अतएवैकनामतया एकत्वमेव स्मरन्ति ।

"एवं षष्टिदिनो मासस्तदर्द्धन्तु मलिम्लुचः ।
त्यक्त्वा तदुत्तरे कुर्य्यात् पितृदेवादिकाः क्रियाः ॥"
"षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः ।
पूर्व्वमर्द्धं परित्यज्य मानमुत्तरमाश्रयेत् ॥"

सौरत्वे च सनामकत्वमविवादात् । यद्वा विनामकत्वं नामशून्यत्वमौपचारिकम् आषाढ़ादिनाम्ना चान्द्रस्य कर्म्माङ्गतया विधौ तस्याननुप्रवेशात् सदपि नामासदेव पुत्रोऽप्यपुत्र इतिवत्*। अतो

---

* विरुद्धनामकत्वे हेतुमाह मलिम्लुचत्वात् मलिम्लुचनामकत्वात् एकसंज्ञौ एकनामकौ विरोधात् मलमासस्य नामशून्यत्वे एकनामकत्वविरोधात् । यत एवैकराशिसूर्य्यारब्धत्वेन एकमासत्वम् अतएवेत्यर्थः । षष्टिदिनः षष्टितिथ्यात्मकः तदर्द्धन्तु त्रिंशत्तिथ्यात्मकः त्यक्त्वा तन्मलमासं त्यक्त्वा उत्तरे शुद्धमासि । दिवसैस्तिथिभिः । सौरत्वे च सनामकत्वमविवादात् । अविवादादिति एकनामसौरमासद्वयासम्भवादिति भावः । औपचारिकं कर्म्मानर्हत्वेन गौणं तत्तन्मासविहितकर्म्मानर्हत्वप्रयोजकम् । विधौ मासविहितकर्म्मविधाने तस्य मलमासस्य अननुप्रवेशात् मलमासे सावकाशकर्म्मनिषेधेन वैधकर्म्माङ्गतया प्रवेशाभावात् सदपि नामेति मलमासस्येति शेषः । असदेव तत्तन्नामकमासविहितकर्म्माप्रयोजकत्वेन असत्तुल्यमित्यर्थः । अत्र दृष्टान्तमाह पुत्रोऽप्यपुत्रवदिति कर्म्मादिरिति शेषः ।

मेषगरविसंक्रान्तिः शशिमासे भवति यत्र तच्चैत्रम् । एवं वैशाखादि वृषादिसंक्रान्तियोगेन इति वचनम् । कर्म्माङ्गचैत्राद्यभिप्रायेण मुख्यार्थमेव । अतएव गृह्यपरिशिष्टम् ।

"मलं वदन्ति कालस्य मासं कालविदो जनाः ।
नेहेतात्र विशेषेज्यामन्यत्रावश्यकाद्विधेः ॥"

आषाढ़ादिपदैश्चान्द्रमासेषु विशेषेण विहितामिज्याम् । इज्यापदं वैदिककर्म्मोपलक्षणपरम् । तन्नेहेत न चेष्टेत ।

तथा ज्योतिःशास्त्रम् ।

"यदा शशी याति गभस्तिमण्डलं
दिवाकरः संक्रमणं करोत्यधः (१) ।
तदाधिमासः कथितो विरिञ्चिना
विवाहयात्रोत्सवयज्ञदूषकः (२) ॥"

अमावास्यान्ते चन्द्रस्य सूर्य्यमण्डलप्रवेशस्ततोऽधः पश्चात् प्रतिपदीत्यर्थः । स च विवाहादिदूषकः ।

तथा ज्योतिःपराशरः ।

"अग्न्याधेयं प्रतिष्ठाञ्च यज्ञदानव्रतानि च ।
देवव्रतवृषोत्सर्गचूड़ाकरणमेखलाः ।

---

(१) हेमाद्रौ करोत्यधः इत्यत्र करोत्यनु इति पठितम् ।

(२) दूषक इत्यत्र दोषकृदिति पठितं हेमाद्रौ ।

---

तथाच यथा अन्धपतितादिः पुत्त्रोऽपि स्वजन्यपुंस्त्ववानपि पुत्त्रकर्त्तव्यश्राद्धादिकर्म्मानधिकारितया अपुत्त्रतुल्यः तद्वदित्यर्थः ।

माङ्गल्यमभिषेकञ्च मलमासे विवर्जयेत् ॥"

दानं महादानं यदाह ।

"वापीकूपतड़ागादिप्रतिष्ठां यज्ञकर्म्म च ।
न कुर्य्यान्मलमासे च महादानव्रतानि च ॥"

महादानानि तुलापुरुषादीनि* तेष्वेव षोड़शसु महादानैक-

---

* अत इति। मलमासस्य कर्म्मार्हतया असत्त्वात्। शशिमासि चान्द्रमासि इति वचनं मासलक्षणाभिप्रायकं ब्रह्मगुप्तवाक्यं कर्म्माङ्गत्वाद्यभिप्रायेण वैधकर्म्माङ्गीभूतचैत्रादि-मासलक्षणाभिप्रायेण मुख्यार्थमेवेति। तेन मलमासस्य वैधकर्म्माङ्गतया मुख्यार्थाभावेऽपि न क्षतिरिति भावः। यतो मलमासस्य न कर्म्माङ्गत्वम् अतएवेत्यर्थः। कालस्य शुक्लप्रति-पदादिदर्शान्तकालस्य मलमासं वदन्ति इत्यन्वयः। आवश्यकादिभिः अवश्यकर्त्तव्यनित्य-कर्म्मणोऽन्यत्र इह मलमासे विशेषेज्यां विशेषेज्यादिकम्। वैदिककर्म्मोपलक्षणपरमिति वैदिककर्म्मपदेनात्र सम्भवत्तुल्यकालकाम्यकर्म्म प्रातिष्ठिकनिषिद्धकर्म्म च उच्यते। गभस्ति-मण्डलं सूर्य्यमण्डलम्। अधः अमावास्यान्ते शुक्लप्रतिपदि। उत्सवः उपनयनादिः दूषकः दोषजनकः। अग्न्याधेयम् अग्न्याधानं श्रौताग्न्यादेर्ग्रहणं प्रतिष्ठां मठादेः। यज्ञदान-व्रतानि काम्ययागमहादानकाम्यव्रतानि। देवव्रतवृषोत्सर्गः देवोद्देश्यत्वकव्रतवृषभोत्सर्गः मेखला उपनयनम्। माङ्गल्यं मुख्यकालाक्रान्तान्नप्राशनादिमङ्गलकर्म्म। अभिषेकः राज्या-भिषेकः। महादानानि तुलापुरुषादीनीति। यथा मत्स्यपुराणम्।

"अथातः संप्रवक्ष्यामि महादानानुकीर्त्तनम्।
आद्यन्तु सर्व्वदानानां तुलापुरुषसंज्ञितम् ॥
हिरण्यगर्भदानञ्च ब्रह्माण्डं तदनन्तरम्।
कल्पपादपदानञ्च गोसहस्रञ्च पञ्चमम् ॥
हिरण्यकामधेनुश्च हिरण्याश्वस्तथैव च।
पञ्चलाङ्गलकं तद्वद्धरादानं तथैव च ॥
हिरण्याश्वरथस्तद्वद्धेमहस्तिरथस्तथा।
द्वादशं विष्णुचक्रञ्च ततः कल्पलतात्मकम् ॥

प्रवृत्तिनिमित्तस्य कुण्डमण्डपादीतिकर्त्तव्यताविशेषस्य सम्भवात्*।

यत्तु ।

"कनकाश्वतिला नागा(१) दासीरथमहीगृहाः ।
कन्या च कपिला धेनुर्महादानानि वै दश ॥"

तत् स्तुत्यर्थम् । अन्यथा बहुशक्तिकल्पनापत्तेः सर्व्वत्रानुगतस्यैकरूपस्याभावात् । अतो महादाननिषेधेन † सुवर्णशृङ्गिकादेर्वा

(१) कनकाश्वतिला गाव इति ग्रन्थान्तरे पठितम् ।

सप्तसागरदानञ्च रत्नधेनुस्तथैव च ।
महाभूतघटं तद्वत् षोड़शः परिकीर्त्तितः ॥

* महादानैकप्रवृत्तिनिमित्तस्य तुलापुरुषादिषोड़शमहादानानुगतशक्यतावच्छेदकधर्मस्य । कुण्डमण्डपादीतिकर्त्तव्यताविशेषस्य कुण्डः खातविशेषः मण्डपो गृहविशेषः । आदिना विनायकादिपञ्चाशद्देवताहोमपरिग्रहः । एते इतिकर्त्तव्यताविशेषा अङ्गविशेषा यस्य तादृशस्य । तथाच कुण्डमण्डपविनायकादिपञ्चाशद्देवताहोमाङ्गकदानत्वमेव तुलापुरुषादिषोड़शमहादानानुगतैकशक्यतावच्छेदकं धर्म्मं महादानलक्षणम् । अत्र विनायकादिपञ्चाशद्देवताहोमाङ्गकत्वनिवेशात् कुण्डमण्डपाङ्गकत्वेऽपि मठदानस्य न महादानत्वापत्तिः । तत्र विनायकादिपञ्चाशद्देवताहोमाश्रवणात् स च होमो महादान एव श्रूयते यथा मत्स्यपुराणे "महाभूतघटस्तद्वत् षोड़शः परिकीर्त्तितः ।" इत्युक्त्वा—

"विनायकादिग्रहलोकपालवस्वष्टकादित्यमरुद्गणानाम् ।
ब्रह्माच्युतेशानवनस्पतीनां स्वतन्त्रतो होमचतुष्टयं स्यात् ॥" इत्युक्तम् ।

विनायकादिः षट् नव ग्रहाः दश दिक्पाला अष्टौ वसवः द्वादशादित्याः मरुद्गण एकः ब्रह्मादीनां चतुष्टयमिति पञ्चाशत् । तुलापुरुषादिदानानामिव कनकाश्वादिदानानामपि महादानत्वश्रुतेः ।

† एतेषां महादानत्वे प्राङ्निर्द्दिष्टषोड़शसंख्याकीर्त्तनं व्यर्थं स्यादित्यत आशङ्कते यत्त्विति । कनकं सुवर्णनिर्म्मितशृङ्गि नागः हस्ती मही भूखण्डम् । स्तुत्यर्थं प्रशंसार्थं न

दानमनिषिद्धमेव*। अनादरणन्तु (१) प्रामाण्यैकतया अन्यथा समाधानं कष्टावहम्†। तथा नष्टभार्गवादावप्येतन्निषिद्धं यथा।

"बाल्ये वा यदि वा वृद्धे शुक्रे चास्तमुपागते।
मलमास इवैतानि वर्जयेद्देवदर्शनम्॥"

देवदर्शनं चानादिदेवतायाः। यदाह।

"अनादिदेवतां दृष्ट्वा शुचः स्युर्नष्टभार्गवे।
मलिम्लुचेऽप्यनावृत्तं तीर्थस्नानमपि त्यजेत्॥

पूर्व्वार्द्धेन दर्शने दोषमात्रकीर्त्तनान्निषेधकल्पनातोऽनुषङ्गस्य बलवत्त्वात् त्यजेदित्यनुषज्यते। दर्शनं त्यजेदित्यर्थः। अनावृत्तमिति च न तीर्थस्नानमित्यनेनान्वितम्। द्वयोरपि कर्म्मकारकत्वात्

(१) अनाकरणन्तु क्वचित्पुस्तके पाठः।

---

तु वास्तविकमहादानम्। अन्यथा महादानस्वीकारे बहुशक्तिकल्पनापत्तेः नानाशक्तिकल्पनापत्तेः। ननु वचनबलात् नानाशक्तिकल्पना अस्तु को दोषः इत्यत आह सर्व्वत्रानुगतस्यैकरूपस्याभावादिति। कनकाश्वादिदशानुगतैकशक्यतावच्छेदकधर्म्मस्याभावादित्यर्थः। अत इति कनकाश्वादिदानस्य गौणमहादानत्वात्।

* अश्वसाहचर्य्यात् कनकशब्दस्य कनकनिर्म्मितशृङ्गिकापरत्वेन विकल्पते सुवर्णशृङ्गिकादेर्वेति। ननु कनकाश्व इति समस्तैकपदस्वीकारेण सुवर्णनिर्म्मिताश्व एवार्थोऽस्तु, किमिति कनकपदलक्षणया सुवर्णनिर्म्मितशृङ्गिकार्थोऽङ्गीक्रियते इति चेन्न; तथात्वे "महादानानि वै दश" इति दशसंख्याकीर्त्तनानुपपत्तेः।

† अनिषिद्धमेवेति। तेषां महादानत्वाभावात् महादाननिषेधेन तेषां निषिद्धत्वाप्रसक्तेरिति भावः। अनादरणन्त्वित्यादि। तेषां मुख्यमहादानत्वखण्डनेन गौणमहादानत्वकल्पनरूपादरणन्तु। प्रामाण्यैकतया प्रामाण्यैक्येन दशानुगतैकशक्यतावच्छेदकधर्म्मेण। अन्यथा समाधानं गौणार्थभिन्नप्रकारकसमाधानं कष्टावहं दुष्करम्।

त्यजेदित्यनेनैवान्वयः*। परम्परान्वयस्त्वेकत्यजतिक्रियान्वयार्थः। चतुरो मुष्टीर्निर्वपतीतिवत्। स च देवतादर्शनेऽप्यविशिष्टः। तस्यापि त्यजेदित्यनेनैवान्वयात्†। अतो वचनान्तरेषु देवतादर्शनं देवताविलोकनमित्यादिसामान्यपदानामनावृत्तदर्शनपरत्वमेवानादिदेवतास्नानार्थमेव तदपेक्षत्वात्। अन्यथा देवतामात्र-

---

* तथेति। यथा मलमासे एषां निषेधस्तथा नष्टभार्गवादावपि शुक्रास्तादावपीत्यर्थः। अनादिदेवतायाः श्रीपुरुषोत्तमादेः। श्रीविश्वेश्वरस्यानादिदेवतात्वेऽपि "न गुर्वास्तोदयकृतो दोषो विश्वेश्वरालये" इति काशीखण्डीयप्रतिप्रसवात् तद्दर्शने न दोषः इति। दोषमात्रकीर्त्तनादिति शुचः स्युरित्यनेनेति शेषः। अनुषङ्गस्येति एकत्रान्वितपदस्यान्वयार्थमन्यत्रानुसन्धानमनुषङ्गः। न तीर्थस्नानमित्यनेन न तीर्थस्नानमात्रमित्यनेन द्वयोरपि अनावृत्ततीर्थस्नानयोरपि।

† ननु द्वयोरपि कर्म्मकारकत्वात् त्यजेदित्यनेनैवान्वय इत्युक्तं कथं संगच्छते। धात्वर्थावच्छेदकफलशालिनः एव कर्म्मत्वनियमात्। प्रकृते वर्जनार्थत्यजधात्वर्थतावच्छेदकीभूतकरणाभावफलस्य प्रतियोगितासम्बन्धेन तीर्थस्नान एव साक्षादन्वयः सम्भवति न तु विशेषणीभूतानावृत्ते इत्यत आह परम्परान्वयस्त्वेकत्यजतिक्रियान्वयार्थः इति। एकत्यजतिक्रियान्वयार्थः एकत्यजतिक्रियाफलान्वयार्थ इत्यर्थः तथाच विशेष्यविशेषणभावस्थले विशेष्यान्वयिक्रियाफलस्य परम्परया विशेषणान्वयस्वीकारात् अन्यथा स्वविशेष्यान्वयिना अन्वयित्वं विशेषणत्वमिति नियमभङ्गापत्तेः। अत्र दृष्टान्तं दर्शयति चतुरो मुष्टीर्निर्वपतीतिवदिति मुष्टिविशेषणस्य चतुर इत्यस्य परम्परया निर्वपणक्रियान्वयात् यथा कर्म्मत्वं तथा प्रकृतेऽपीत्यर्थः। स च त्यजेदित्यस्यान्वयः। देवतादर्शने अनादिदेवतादर्शने अविशिष्टः अबाधितः तस्य देवतादर्शनस्य। अनावृत्तदर्शनपरत्वमेवेति अत इति अनादिदेवतां दृष्ट्वा इति पूर्व्वार्द्धस्थित अनादिदेवतादर्शने। मलमासेऽप्यनावृत्तमिति पराङ्गीयानावृत्तविशेषणात्।

दर्शननिषेध एव स्यात्। अस्य च विशेषवचननिरपेक्षत्वात्*। आवृत्तदर्शननिषेधे च तावत्कालमनादिदेवतानामपूज्यताप्यापद्येत। विधिनिषेधानुपालकस्यैव शास्त्रतो देवपूजकत्वात्†। धवलेनाप्युक्तं प्राथमिकानादिदेवतादर्शननिषेधोऽयमिति। अन्यैस्तु न चिन्तितमिदम्।

---

* वचनान्तरेष्विति। "अस्ते सन्ध्यागते बाले भृगौ मासि मलिम्लुचे।
देवतादर्शनं दानं महादानं विवर्ज्जयेदिति स्मृतौ—
भृगावस्ते गुरौ सिंहे गुर्व्वादित्ये मलिम्लुचे।
त्यजेद्दानं महादानं व्रतं देवविलोकनमिति लघुहारीतवचने—
तीर्थस्नानविवाहदेवभवनं मन्त्रादि देवेक्षणं
दूरेणैव जिजीविषुः परिहरेदस्तं गते भार्गवे—

इति सोमशेखराख्यनिबन्धधृतवचने च देवतादर्शनं देवविलोकनमित्यादिसामान्यपदानां स्मृतिवचनस्थदेवतादर्शनं लघुहारीतवचनस्थदेवविलोकनं सोमशेखराख्यनिबन्धधृतवचनस्थादिपदग्राह्यदेवेक्षणमिति सामान्यशब्दानाम् अनावृत्तपरत्वम् अनावृत्तविशेषणविशिष्टपरत्वमेवेत्यर्थः। अनादिदेवतास्नानार्थमेव तदपेक्ष्यत्वादिति अनादिदेवतां दृष्ट्वा शुचः स्युरित्यादिवचने देवताया अनादित्वविशेषणात् तदेकवाक्यतया वचनान्तरस्थदर्शनीयदेवताया अपि तदपेक्षासत्त्वात् अन्यथा यथाश्रुतार्थस्वीकारे च देवतामात्रदर्शननिषेधः स्यादिति इष्टापत्तौ प्रागुक्तं देवताया अनादित्वविशेषणं व्यर्थं स्यादिति भावः। अस्य च विशेषणस्य अनावृत्तविशेषणस्य विशेषवचननिरपेक्षत्वात् विशेषवचननिरपेक्षप्रवृत्तत्वात्।

† प्रतिबन्धिं दर्शयति आवृत्तेत्यादि। तावत्कालं समयाशुद्धिसत्ताकालम् अपूज्यता आपद्येत इति दर्शनं विना पूजनासम्भवादिति भावः। विधिनिषेधानुपालकस्यैव शास्त्रतो देवपूजकत्वात् इति तु पूजनाभावापत्तौ हेतुः। तथाच विधिनिषेधानुपालकत्वे समनियतशास्त्राधीनदेवपूजकत्वनियमात्तावत्कालापूजने निषेधानुपालकत्वसमनियतदेवपूजकत्वनियमो व्याहन्येत इति ग्रन्थकर्त्तुराशयः।

बालवृद्धकालमाह।

"पश्चात् वृद्धस्तु पूर्व्वेण दशाहं पश्चिमेन तु।
प्रत्युत्थाने दशाहन्तु पूर्व्वेण तु दिनत्रयम्॥"

तथा।

"प्राच्यामस्तङ्गमने त्रयोदश चतुर्दशान्यपरे।
प्रागुदये पञ्च निशा भृगुसूनोः षड़परे ज्ञेयाः॥"

तथा पठन्ति।

"जीवे केशरिसंस्थिते भृगुसुते नष्टे तथा बालके
वृद्धे दर्शयुगाग्निभे(१) रवियुते जीवे च मासे बुधः।
विद्यां पार्थिवदर्शनं सुरगृहं कूपं मठं मन्दिरं
कुर्य्यान्नैव विवाहनञ्च नगरारम्भन्तड़ागानि च॥"

तथा।

"रविणा संयुते जीवे सिंहसंस्थे गुरौ तथा।
अस्तङ्गते तथा शुक्रे बाले वृद्धे तथैव च॥
व्रतं यानं विवाहञ्च विद्यां पार्थिवदर्शनम्।
देवतायतनं कूपतड़ागारामम्मन्दिरम्॥
देवादीनां प्रतिष्ठाञ्च यागं कर्णस्य वेधनम्।
सर्व्वथा नैव कुर्य्याच्च करणे मरणम्भवेत्॥"

"केशरिणि सुरसचिवे व्रतमुद्वाहञ्च वर्जयेत्प्राज्ञः।

---

(१) क्वचिदादर्शे दर्शयुगाश्विभे इति पाठः।

व्रतकरणे व्रतभङ्गः स्यात् उद्वाहे योषितां मरणम्* ॥"

---

* स्वसिद्धान्तस्य प्रामाण्यसंस्थापनाय ग्रन्थकारान्तरीयसंवादं दर्शयति धवलेना-ऽपीति। पक्षं वृद्धस्तु पूर्व्वेणेति पूर्व्वेण प्रातः प्रातः पूर्व्वदिशि दृष्टा रविकिरणाच्छन्नतया न दृश्यते चेद्गुरुः तदा प्रागस्तमितः, अस्तमितकालात् प्राक् पक्षं पञ्चदशाहं व्याप्य वृद्धः। पश्चिमेनेति सायं सायं पश्चिमदिशि दृष्टा रविकिरणाच्छन्नतया न दृश्यते चेद्गुरुस्तदा प्रत्यगस्तमितः। अस्तमितात् प्राक् दशाहं व्याप्य वृद्ध इत्यर्थः। प्रत्यग्बाल इति पूर्व्वदिशि अस्ते अस्तादूर्द्धं दशाहं व्याप्य प्रत्यग्बालः उदितो भवति, एवं पश्चिमदिशि अस्ते अस्तादूर्द्धं दिनत्रयं व्याप्य पूर्व्वेण पूर्व्वदिग्विशिष्टः सन् बालः पुनरुदितो भवतीत्यर्थः। प्रागस्ते च वृद्धस्य कालान्तरमाह तथा प्राच्यामित्यादि। एवं प्रागुदये च बालस्य कालान्तरमाह प्रागुदये पञ्चनिशेत्यादि।

अस्तकालमाह ज्योतिषे।

"द्वात्रिंशद्दिवसश्चास्ते जीवस्य भार्गवस्य च।
द्विसप्ततिर्महत्यस्ते पादास्ते द्वादश क्रमादिति॥"

भङ्ग्यन्तरेणाह।

"पक्षं वृद्धो महास्ते तु बालस्तत्र दशाह्निकः।
पादास्ते तु दशाहानि वृद्धो बालो दिनत्रयम्॥"

महत्पादास्तः शुक्रस्य वृहस्पतेस्तन्नास्ति। जीवस्यास्तकालः द्वात्रिंशद्दिनानि वृद्धबालयोः कालः पक्षमात्रमिति विशेषः। केशरिसंस्थिते सिंहगते भृगुसुते शुक्रे नष्टे अस्तं गते दर्शयुमाग्निभे क्वचित् पुस्तके दर्शयुगाश्विभे इति पाठद्वयं दृश्यते तदुभयमपि लिपिकरप्रमादः दर्शयुगान्विते इत्येव पाठः साधुः दर्शयुगान्विते दर्शद्वयान्विते मासे मलमासे इत्यर्थः रवियुते जीवे गुर्व्वादित्ययोगे। विद्यां विद्यारम्भं पार्थिवदर्शनं राजदर्शनं मठं छात्रावासगृहं मन्दिरं साधारणगृहं पुरं वा। तड़ागानि वाप्यादिजलाशयान् आराम उपवनम्। व्रतभङ्गः व्रतफलाभावः। जन्ममासे इति। न जन्ममासे न च चैत्रपौषे चौरं विवाहो न च कर्णवेध इति। यो जन्ममासे क्षुरकर्म्मयात्रां कर्णस्य वेधं कुरुते च मोहादित्यादि। जन्मोदये जन्मसु तारकासु मासेऽथवा जन्मनि जन्मभे वा। व्रतेन विप्रो न बहुश्रुतो वा

"यात्रा चौरविवाहौ व्रतकरणकर्णवेधनं विद्याम्।
कुर्य्यान्न जन्ममासेऽस्तमिते शुक्रे शशाङ्के च॥"
"भृगावस्ते गुरौ सिंहे गुर्व्वादित्ये मलिम्लुचे।
त्यज्येद्दानं महादानं व्रतं देवविलोकनम्॥
अस्ते सम्ध्यागते बाले भृगौ मासि मलिम्लुचे।
देवतादर्शनं दानं महादानं विवर्ज्जयेत्॥
महागुरौ विपन्ने च भृगावस्ते रवौ गुरौ।
महच्छब्दान्वितं कर्म्म नैव कुर्य्याद्विचक्षणः॥"
"कन्यायां कर्किसंस्थे मिथुनहरिगृहे केचिदाहुर्द्दिजेन्द्राः
चापे मीने च राशौ दिवसकृतिगते सिंहसंस्थे च जीवे।
केचिल्लुप्ते च जीवे दिनकरकिरणैर्लुप्तशुक्रप्रकाशे
विद्यारम्भं विवाहं सुरवरभवनं नैव यज्ञं प्रतिष्ठाम्॥"

एतानि पण्डिताः पठन्ति।

विवाहस्य—"त्रिदशगुरौ रविभवनमुपेते
भृगुतनये रविकिरणविलीने।
विबुधविलोकनवरफलदानं
भवति न शोभनफलमिति सत्यः॥" *

आरम्भ एव व्रतादेर्न्निषिद्धो न तु समाप्तिः।

---

विद्याविशेषैः प्रथितः पृथिव्यामित्यादिवचनैकवाक्यत्वात् जन्ममासे यात्राचौरविवाहकर्णवेधानामेव निषेधः न तु व्रतकरणविद्यादेः। एवं चोद्वाहश्च कुमारीणां जन्ममासे प्रशस्यते इति वचनात् विवाहनिषेधस्तु पुरुषस्यैवेति बोध्यम्।

* शशाङ्के चेति। चन्द्रे अस्तमिते नष्टचन्द्रे अमावास्यायामित्यर्थः। महागुरौ

तदाह काश्यपः ।

"ऋक्षैकमन्दिरगतौ यदि जीवभानू
शुक्रोऽस्तगः सुरवरैकगुरुश्च सिंहे ।
नारभ्यते व्रतविवाहगृहप्रतिष्ठा-
चौरादिकर्म्मगमनागमनञ्च धीरैः ॥"

नन्वधिमासे तत्तत्कर्म्मनिषेधात् षष्टिदिवसत्वाच्च तन्मासस्य षष्टि-दिवसेष्वेव निषेधः स्यात्* ।

---

महागुरुस्तु पुरुषस्य अदत्तकन्यायाश्च मातापितरौ, दत्ताया भर्त्ता एव महागुरुः । रवौ असि संक्रान्तिशून्ये चान्द्रमासि मलमास इति यावत् वस्तुतो रवेः प्रकृतास्तासम्भवात् । महच्छब्दान्वितं कर्म्मेति महादानमहापूजादि कर्म्म । मिथुनेति हरिशयने सति बौध्यं याम्यायने हरौ सुप्ते सर्व्वकर्म्माणि वर्ज्जयेदित्येकवाक्यत्वात् सर्व्वकर्म्माणीति सावकाशकर्म्माणीति ज्ञेयानि । हरिगृहे सिंहे लुप्ते अस्तं गते प्रकाशे उदये । पण्डिताः पठन्ति विवाहस्य विवाहसम्बन्धे । एतेन एतानि मूलग्रन्थे न लभ्यन्ते परन्तु निबन्धकारीयग्रन्थे दृश्यन्ते इत्यायाति । त्रिदशगुरौ बृहस्पतौ रविभवनस्थे सिंहगते भृगुतनये शुक्रे रविकिरणविलीने अस्तं गते विबुधविलोकनवरफलदानमिति वरं श्रेष्ठं फलं यस्य तत् वरफलञ्च तत् दानञ्चेति वरफलदानं महादानमित्यर्थः विबुधविलोकनञ्च वरफलदानञ्च तयोः समाहारः विबुधविलोकनवरफलदानं शोभनफलं शोभनफलजनकं सम्यक् फलजनकं न भवतीत्यर्थः ।

* ऋक्षैकमन्दिरगतेत्यादि । एकस्मिन्नक्षत्रे गुर्व्वादित्ययोगे इत्यर्थः । व्रतेति व्रतपदमिह अविशेषादनन्तादिव्रतपरम् उपनयनादिपरञ्च आरम्भ एव निषिद्धो न तु समाप्तिरित्युक्तम् । अत्रायमाशयः । अनन्तव्रतादौ आरब्धानन्तरं समाप्तिसमये समयाशुद्धावपि । समाप्ते च व्रते तत्र प्रतिष्ठा तदनन्तरं न कालनियमस्तत्र तत्र विघ्ने परान्दिके इति वचनात् दोषाभावः । उपनयनादौ च भूकम्पादेर्न दोषोऽस्ति वृद्धिश्राद्धे कृते पुनरिति वचनात् अन्तरा समयाशुद्धौ दोषाभावः सुतरामेव । षष्टिदिवसत्वाच्च मलमासस्येति मलमासत्वेनाभिमतमासस्य इत्यर्थः द्विराषाढ़ादिनियमेन षष्टितिथ्यात्मकत्वात् ।

नैतदुक्तं हि ज्योतिःशास्त्रे।

"षष्ट्या तु दिवसैर्मासः कथितो बादरायणैः।
पूर्व्वमर्द्धं परित्यज्य उत्तरार्द्धं प्रशस्यते॥
अमावास्याद्वयं यत्र रविसंक्रान्तिवर्ज्जितम्।
मलिम्लुच सः विज्ञेयः उत्तरस्तूत्तमाभिधः॥"

अमावास्याद्वयसमाप्तिर्यदैकराशिस्थे सूर्य्ये इत्यर्थः।

तथा शङ्खधरलिखितवचनानि।

"पक्षद्वयेऽपि संक्रान्तिर्यदि न स्यात्सितासिते।
तन्मासि मासिकं कार्य्यमुत्तरे मासि कारयेत्॥
एवं षष्टिदिनो मासस्तदर्द्धस्तु मलिम्लुचः।
त्यक्त्वा तदुत्तरे कुर्य्यात् पितृदेवादिकाः क्रियाः॥" *

तदेवमादिवचनैरुत्तरार्द्धस्य सकलकर्म्मार्हत्वज्ञापनान्न विरोधः†।

ननु किं सकलकर्म्मानर्हत्वमेव मलमासस्य नैतत्।

---

* अमावास्याद्वयमिति अमावास्यान्तक्षणद्वयमित्यर्थः रविसंक्रान्तिपदेन क्रियोत्पत्तिराश्यन्तरसंयोगावुच्येते। यत्रेति यत्किञ्चित्त्रिंशत्तिथ्यात्मकमासपरं तथाच स्वक्षणावच्छिन्नरविराशिभिन्नराशिसंयोगानुकूलक्रियोत्पत्तिशून्यस्वाव्यवहितामावास्यान्त्यक्षणकत्वे सति स्वप्रथमक्षणावच्छिन्नरविराशिभिन्नराशिसंयोगशून्यस्वघटकामावास्यान्त्यक्षणकत्वं मलमासत्वमिति लक्षणपर्य्यवसितं प्रथमस्वपदं चान्द्रमासाव्यवहितपूर्व्वक्षणपरं द्वितीयस्वपदं चान्द्रमासपरम्। स्वत्वमनुगतमतमाश्रित्य एतल्लक्षणं पर्य्यवसितम्। तन्मासि मासिकं मलमासत्वेन अभिमतो यो मासः तन्मासत्वेन विहितं मासिकं सावकाशं कर्म्म इत्यर्थः। तदर्द्धस्तु पूर्व्वार्द्धस्तु।

† न विरोध इति। नन्वधिमासे सर्व्वकर्म्मनिषेधादित्यादिना यो विरोध आशङ्कितः तस्य षष्टितिथ्यात्मकस्य बादरायणाद्युक्तमासस्य पूर्व्वार्द्धे त्रिंशत्तिथ्यात्मकमासे

यदाह वृहस्पतिः ।

"नित्यनैमित्तिके कुर्य्यात् प्रयतः सन्मलिम्लुचे ।
तीर्थस्नानं गजच्छायां प्रेतश्राद्धन्तथैव च ॥"

तीर्थस्नानमनावृत्तं गजच्छाया अमावास्याया अपराह्णः तत्र श्राद्धं यत् प्रेतस्य चतुर्थाहादि । वार्षिकश्राद्धं प्रतिसांवत्सरिकं वा* ।

अथ पुराणम् ।

"वनस्पतिगते सोमे छाया या प्राङ्मुखी तदा ।
गजच्छाया तु सा ज्ञेया पितॄणां दत्तमक्षयम् ॥"

---

कर्म्मनिषेधपर्य्यवसानेन उत्तरार्द्धस्य कर्म्मार्हतया च स च विरोधः समाहितः इत्यर्थः ।

* अधुना मलमासे कर्म्मसामान्यस्य निषेधः उत कर्म्मविशेषस्य इत्याशङ्क्यते नन्वधिमासे इत्यादि । नित्यनैमित्तिके इति नित्यपदम् अहरहःक्रियमाणकर्म्मपरं नैमित्तिकपदम् एकोद्दिष्टपरत्वेन वक्ष्यमाणम् । तीर्थस्नानादिकं स्वयं व्याकरोति तीर्थस्नानमनावृत्त-मित्यादि । तत्र अपराह्णे । प्रेतस्य यत् श्राद्धमिति सामान्येनोक्त्वा तदेव विशिनष्टि चतुर्थाहादीति ।

"चतुर्थे पञ्चमे चैव नवमैकादशे तथा ।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते ॥"

इति यमोक्तम् । वार्षिकश्राद्धं सपिण्डीकरणम् ।

"असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैः ।
तथैव मासिकं पूर्व्वं सपिण्डीकरणं तथा ॥"

प्रतिसांवत्सरिकमिति मलमासमृतविषयम् ।

"मलमासमृतानान्तु श्राद्धं यत् प्रतिवार्षिकम् ।
मलमासेऽपि तत् कार्य्यमिति भागुरिभाषितम् ॥"

पैठीनसिरपि । "मलमासे मृतानान्तु श्राद्धं यत् प्रतिवत्सरम् ।
मलमासेऽपि कर्त्तव्यं नान्येषान्तु कदाचनेति ॥"

तथा ।

"सैंहिकेयो यदा सूर्य्यं ग्रसते पर्व्वसन्धिषु ।
हस्तिच्छाया तु सा ज्ञेया तत्र श्राद्धम्प्रकल्पयेत् ॥"

आह ऋष्यशृङ्गः ।

"अवषट्कारहोमश्च पर्व्व चाग्रयणन्तथा ।
मलमासे तु कर्त्तव्यं काम्या इष्टीर्व्विवर्ज्जयेत् ॥"

आह प्रजापतिः ।

"न कुर्य्यान्मलमासे तु काम्यं कर्म्म कथञ्चन ।
त्यक्ता नैमित्तिकं श्राद्धं तद्धि तत्रैव कीर्त्तितम् ॥
एकोद्दिष्टञ्च यच्छ्राद्धं तन्नैमित्तिकमुच्यते ।
तत्कार्य्यं पूर्व्वमासेन कालाधिक्येऽपि धर्म्मतः ॥"

आह सत्यव्रतः ।

"जातकर्म्मणि यच्छ्राद्धं नवश्राद्धन्तथैव च ।
प्रतिसंवत्सरश्राद्धं मलमासेऽपि तत् स्मृतम् ॥
यस्मिन्राशिगते भानौ विपत्तिं यान्ति मानवाः ।
तेषां तत्रैव कर्त्तव्या पिण्डदानोदकक्रिया ॥
वर्षे वर्षे तु यच्छ्राद्धं मातापित्रोर्मृताहनि ।
मलमासेऽपि तत्कार्य्यं व्याघ्रस्य वचनं यथा ॥" *

---

* गजच्छाया अमावास्थापराह्न इत्युक्तम् । तत्र अमायां दर्शयति अथ पुराणम् । वनस्पतिः अमावास्या । अतएव—

"अमावास्यां गते सोमे छाया या प्राङ्मुखी भवेत् ।
गजच्छाया तु सा प्रोक्ता तत्र श्राद्धं प्रशस्यते ॥"

तथा प्रचेताः ।

"अधिमासो न कर्त्तव्यः श्राद्धे सांवत्सरादिके ।
वर्षवृद्ध्यभिषेकादि कर्त्तव्यमधिकेन तु ॥"

अधिमासो न कर्त्तव्यः त्यजनीयत्वमेवैतदस्य न कार्य्यम् । सांव-

---

इति वचने अमावास्यामिति स्पष्टमुक्तम् । अवषट्कारहोम इति अग्निहोत्रोपासन-वैश्वदेवादयः पर्व्व दर्शपौर्णमासौ पार्व्वणस्थालीपाकश्च इति हेमाद्रिमाधवौ ग्रन्थकृन्मते अमावास्यापार्व्वणं वक्ष्यमाणम् आग्रायणं नवशस्येष्टिः । नैमित्तिकं काम्यनैमित्तिकं कालाधिक्येऽपि मासाधिक्येऽपि मलमासेऽपीत्यर्थः । जातकर्म्मणि यत् श्राद्धं जातकर्म्मनिमित्त-श्राद्धम् । एतच्छन्दोगव्यतिरिक्तपरम् ।

"नाष्टकासु भवेच्छ्राद्धं न श्राद्धे श्राद्धमिष्यते ।
न सोष्यन्ति जातकर्म्मप्रोषितागतकर्म्मसु ॥"

इति छन्दोगपरिशिष्टनिषेधात् तथाच नाष्टकासु इति सर्व्वाण्येवान्वाहार्य्यवन्तीति गोभिलसूत्रात् अष्टकादीनां गृह्यकर्म्मत्वेन,—

"यत् श्राद्धं कर्म्मणामादौ या चान्ते दक्षिणा भवेत् ।
अमावास्यां द्वितीयं यदन्वाहार्य्यं तदुच्यते ॥"

इति गोभिलसूत्रान्तरात् श्राद्धप्रसक्तौ निषेधः । श्राद्धे अन्वष्टकाश्राद्धे सोष्यन्ति सूतायन्ति आगतप्रसवं ज्ञात्वा होमः । नवश्राद्धं स्वयं वक्ष्यमाणं प्रतिसंवत्सरश्राद्धमिति मलमासमृतस्येति शेषः ।

विपत्तिं यान्ति नाशं प्राप्नुवन्ति । तेषां तत्रैव कर्त्तव्या इति तु अन्त्याधिमासविषयं असंक्रान्तोऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैरित्यादि वचनैकवाक्यत्वात् । वर्षे वर्षे तु यत् श्राद्धमिति प्रतिसांवत्सरिकश्राद्धस्य यन्मलमासकर्त्तव्यत्वमुक्तं तन्मलमासमृतस्य प्रतिसांवत्सरिकश्राद्धमेव बोध्यं न तु शुद्धमासमृतस्येति ।

तथाच कालमाधवधृतपैठीनसिः ।

"मलमासमृतानाञ्च श्राद्धं यत् प्रतिवत्सरम् ।
मलमासेऽपि कर्त्तव्यं नान्येषान्तु कदाचन ॥"

त्सरादिश्राद्धञ्च कर्त्तव्यमेव। आदिशब्देन पुत्त्रजन्मादिनिमित्तं वृद्धिश्राद्धं नवश्राद्धञ्च भन्यते।

नवश्राद्धमाह आश्वलायनः।

"नवश्राद्धं दशाहानि नवमिश्रन्तु षड्तून्।
अतःपरं पुराणं वै त्रिविधं श्राद्धमुच्यते॥" *

---

* अधिमासो न कर्त्तव्य इत्यस्य तात्पर्य्यार्थमाह त्यजनीयत्वमेवेत्यादि। एतत् त्यजनीयत्वमेव अस्य न कार्य्यम्। पर्य्यवसितार्थमाह सांवत्सरिकादिश्राद्धं कर्त्तव्यमेव।

हेमाद्रिस्तु। "वर्षे वर्षे च यत् श्राद्धं मातापित्रोर्मृतेऽहनि।
मलमासे न कर्त्तव्यं व्याघ्रस्य वचनं यथा।
अधिमासे न कर्त्तव्यं श्राद्धं सांवत्सरादिकमिति॥"

मलमासमृतशुद्धमासमृतभेदेन अनयोर्वचनयोर्विरोधः परिहरणीयः। एतेन उत्तरार्द्धे अधिकेन तु इत्यस्य अधिके मलमासे वर्षवृद्ध्यभिषेकादिः न तु कर्त्तव्य इत्यर्थः अवसीयते। नवश्राद्धं दशाहानि नवमिश्रन्तु षड्तून् इति दशाहानि दशाहपर्य्यन्तम्। अत्र हेमाद्रौ विशेष उक्तः। यथा नागरखण्डे भर्त्तृयज्ञः।

"त्रीणि सञ्चयनस्यार्थे तानि वै शृणु साम्प्रतम्।
यत्र स्थाने भवेन्मृत्युस्तत्र श्राद्धन्तु कारयेत्॥
एकोद्दिष्टं ततो मार्गे विश्रामो यत्र कारितः।
ततः सञ्चयनस्थाने तृतीयश्राद्धमिष्यते॥
पञ्चमे सप्तमे तद्वदष्टमे नवमे तथा।
दशमैकादशे चैव नव श्राद्धानि तानि वै॥"

कात्यायनः। "चतुर्थे पञ्चमे चैव नवमैकादशे तथा।
यदत्र दीयते जन्तोस्तन्नवश्राद्धमुच्यते॥"

व्यासः। "प्रथमे सप्तमे चैव नवमैकादशे तथा।
यत्तु वै दीयते जन्तोस्तन्नवश्राद्धमुच्यते॥"

"आद्यमेकादशेऽहनीति" वचनात् एकादशाहश्राद्धं षोड़शसम्बन्ध्येव। "श्राद्धमेकं दिनद्वयमिति" वचनाच्च द्वादशाहश्राद्धस्याप्यनुप्रवेशः*। अभिषेको यौवराज्यस्य। तत्साहचर्य्यात् वर्षवृद्धिपदमपि राजवृद्धिपरं तत्परस्मिन्मासि कर्त्तव्यम्। जन्मदिनन्तु सौर एव नियतम्। ननु तस्याप्युत्कर्षः श्रूयते।

यथा गृह्यपरिशिष्टम्।

"उपाकर्म्म तथोत्सर्गः प्रसवाहोऽष्टकादयः।
मानवृद्धौ परा कार्य्या वर्ज्जयित्वा तु पैतृकम्॥"

प्रसवाहो जन्मदिनम्†। नैतत्सौर एव मासि तिथिद्वैधे तिथि-

---

नवमिश्रन्तु षड़ृतून् षड़ृतून् संवत्सरं व्याप्य नवमिश्रमिति पारिभाषिकम् मासिकादीनां नाम। अतःपरं पुराणमिति एतदपि पारिभाषिकं तथाच संवत्सरादूर्द्धं यत् सांवत्सरिकपार्व्वणादिकं तदेव पुराणपदवाच्यम्।

* आद्यमेकादशेऽहनीति वचनादिति। पूर्व्वप्रतीकन्तु,—

"मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम्।
प्रतिसंवत्सरञ्चैव आद्यमेकादशेऽहनि॥"

अस्यार्थः। संवत्सरं व्याप्य प्रतिमासं मृताहनि मृताहे मृताहनीत्यार्षं कर्त्तव्यं मासिकं श्राद्धमिति शेषः। प्रतिसंवत्सरं संवत्सरं प्रति मृताहनीत्यनुषङ्गेणान्वयः सांवत्सरिकमिति शेषः एकादशेऽहनि अशौचान्ताद्द्वितीयदिने आद्यश्राद्धं कर्त्तव्यमित्यनुषङ्गेणान्वयः। षोड़शसम्बन्ध्येव षोड़शश्राद्धान्तर्गतमित्यर्थः। द्वादशाहश्राद्धस्याप्यनुप्रवेश इति। तथाच बौधायनसूत्रम्। एकादश्यां द्वादश्यां वा श्राद्धकर्म्म प्रचक्षते। मत्स्यपुराणञ्च। एकादशाहश्राद्धमभिधाय द्वितीयेऽह्नि पुनस्तद्वत् एकोद्दिष्टं समाचरेत् इति।

† साहचर्य्यादिति अभिषेकपदस्य यौवराज्याभिषेकपरत्वेन राज्ञ उपस्थितेरिति भावः। वर्षवृद्धिपदमिति वर्षस्य वयसो वृद्धिर्येन इति व्युत्पत्त्या राज्ञो दीर्घजीवित्व-

स्वप्नापेक्षत्वादस्य वचनस्य उपाकर्म्मणः सौर एव नियतत्वात् । तत्सहचरितत्वात् प्रसवाहस्य ।

तदाह ।

“दशहरास्वनुत्कर्षश्चतुर्ष्वपि युगादिषु ।
उपाकर्म्मणि चोत्सर्गे तत्कर्त्तव्यं वृषादितः ॥”

अत्र तत्कर्त्तव्यं वृषादित इति स्थाने माघ्याश्चैव विशेषत इति कैश्चित् पठितं तदसङ्गतम्* । माघी चेत् मघायुक्ता स्यादिति

---

जनकमङ्गलकर्म्माभिप्रेत्याह राजवृद्धिपरमिति । तत्परस्मिन् मासि कर्त्तव्यं शुद्धमासे कर्त्तव्यम् । अतएव काठकगृह्यम् ।

“चूड़ां मौञ्जीबन्धनञ्च अग्न्याधेयं महालयम् ।
राजाभिषेकं काम्यञ्च न कुर्य्यादधिमासके ॥”

उपाकर्म्म तथोत्सर्गः वेदारम्भः वेदसमापनञ्च प्रसवाहो जन्मतिथिकृत्यम् अष्टकादयः अष्टकादिश्राद्धानि ।

* नैतदिति परमासकर्त्तव्यतारूपोत्कर्षो नेत्यर्थः । अत्र हेतुमाह सौर एवेत्यादि । तथाच एकस्मिन् सौरमासि जन्मतिथ्यादिकृत्यनिमित्तीभूतजन्मतिथेर्वारद्वयप्राप्तिरूपमानवृद्धौ जन्मतिथ्यादिकृत्यं परजन्मतिथौ कार्य्यम् । प्रसवाहस्य सौरमासनियतत्वमित्यर्थः । तदाह उपाकर्म्मणः सौरमासकर्त्तव्यतामाह दशहरास्वित्यादि । हेमाद्रावपि एतद्वचनं लिखितम् । परन्तु तृतीयचतुर्थचरणम् अन्यथा पठितम् । यथा—उपाकर्म्म-महाषष्ठ्योर्ह्येतदुक्तं वृषादितः । अस्यार्थः । वृषादितः वृषस्थसूर्य्ये आदिना सिंहस्थसूर्य्ये तुलास्थसूर्य्ये मकरस्थसूर्य्ये मेषस्थसूर्य्ये च सौरज्यैष्ठभाद्रकार्त्तिकमाघवैशाखेषु चेत्यर्थः । दशहरासु ज्यैष्ठशुक्लदशम्याम् । चतुर्ष्वपि युगादिषु इति यद्यपि युगादिविधायकवचने राशिस्थसूर्य्ये इत्याद्यश्रवणात् मुख्यचान्द्रभाद्रकृष्णत्रयोदशी-कार्त्तिकशुक्लनवमी-माघपौर्णमासी-वैशाखशुक्लतृतीयासु च उपाकर्म्मणि वेदारम्भे उत्सर्गे वेदसमाप्तौ च अनुत्कर्षो नायाति तथापि वृषादित इति

श्रुतेः तदेकवाक्यतया सौरतिथिबोधनात् अनुत्कर्ष एव प्रतिभाति ।

तथाच विष्णुपुराणभविष्यपुराणयोः ।

"वैशाखमासस्य तु या तृतीया नवम्यसौ कार्त्तिकशुक्लपक्षे ।

नभस्यमासस्य तु कृष्णपक्षे त्रयोदशी पञ्चदशी च माघे ।

एता युगाद्याः कथिताः पुराणे अनन्तपुण्यास्तिथयश्चतस्रः ॥"

ब्रह्मपुराणञ्च । "वैशाखे शुक्लपक्षे तु तृतीयायां कृतं युगम् ।

कार्त्तिके शुक्लपक्षे तु त्रेता च नवमेऽहनि ॥

अथ भाद्रपदे कृष्णत्रयोदश्यान्तु द्वापरम् ।

माघे तु पौर्णमास्याञ्च घोरं कलियुगं तथा ॥" इति ।

उपाकर्म्मणि वेदारम्भे । उत्सर्गे वेदसमाप्तौ ।

याज्ञवल्क्यः । "अध्यायानामुपाकर्म्म श्रावण्यां श्रवणेन तु ।

हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥"

कात्यायनः ।

"अथातस्तोपाकर्म्म श्रवणेन श्रावण्यां पौर्णमास्यां वा" इत्यादि ।

पुनर्याज्ञवल्क्यः ।

"पौषमासस्य रोहिण्यामष्टकायामथापि वा ।

जलान्ते छन्दसां कुर्य्यादुत्सर्गं विधिवद्बहिः ॥" इत्यादि ।

उपाकर्म्मणि तथोत्सर्गे च अनुत्कर्ष-वचनविषये हेमाद्रौ विशेष उक्तः ।

यथा कालवृद्धावुपाकर्म्मोत्कर्षः कात्यायनेन दर्शितः ।

"उत्कर्षः कालवृद्धौ स्यादुपाकर्म्मादिकर्म्मणि ।

अभिषेकादिवृद्धीनां न तूत्कर्षो युगादिषु ॥"

यत्तु अनुत्कर्षप्रतिपादकं ऋष्यशृङ्गवचनम् ।

"दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु ।

उपाकर्म्म-महाषष्ठ्यादावेतदुक्तं वृषादितः ॥"

इति छन्दोगविषयम् । तेषां हि कालवृद्धावपि सिंहार्के एव उपाकर्म्म ।

विष्णुविरोधात्*। न हि मघायुक्ता मकरस्थसूर्य्ये सम्भवति†।

---

यदाह गार्ग्यः। "सिंहे रवौ तु पुष्यर्क्षे मध्याह्ने निचरेद्बहिः।
छन्दोगा मिलिताः कुर्य्युरुत्सर्गं सर्व्वछन्दसाम्॥" इति।

अत्र तत् कर्त्तव्यं वृषादित इति स्थाने इति एतत्पाठस्थाने इत्यर्थः। तदसङ्गतमिति।

* माघी चेन्मघायुक्ता स्यादित्यादि विष्णुविरोधादिति। ननु माघ्याञ्चैव विशेषत इति पाठकल्पनेऽपि कथं विष्णुविरोधः सम्भवति। तथाहि वृषादित इति पाठस्थाने माघ्याञ्चैव विशेषत इति पाठकल्पने वृषादिपदविरहात् सौरमासावगतिर्न जायते। ततश्च माघी मघायुक्ता चेत् स्यात् तस्यां तिलैः श्राद्धं कृत्वा पूतो भवेत् इति विष्णुवचने मघायुक्तेति विशेषणेन सौरमाघे मघासम्भवात् सौरफाल्गुनादावपि क्षतिविरहात् कथं विष्णुविरोधः सङ्गच्छते इति चेन्नैवम्। तत्कर्त्तव्यं वृषादित इति पाठस्थाने माघ्याञ्चैव विशेषत इति पाठकल्पने सौरबोधकवृषादिपदविरहात् एतद्वचनेन सौरमासाप्रतीतावपि—

"दशहरासु नोत्कर्षश्चतुर्ष्वपि युगादिषु।
उपाकर्म्म-महाषष्ठेराद्यैतदुक्तं वृषादितः॥"

इति हेमाद्रिधृतेन ऋष्यशृङ्गवचनेनैकवाक्यतया दशहरादौ सौरज्यैष्ठादावेवानुत्कर्षस्यावश्यवक्तव्यत्वात् तत्सहचरिततया च माघ्याञ्चैव विशेषत इत्यत्रापि सौरमाघप्रतीतौ सौरमाघे च माघ्यां मघायोगासम्भवेन विष्णुविरोधस्य जागरूकत्वात् वस्तुतो विष्णुविरोधस्य उपलक्षणतया पौनरुक्तिदोषेण असङ्गतकथनस्य युक्तियुक्तत्वाच्च। तथाहि माघे तु पौर्णमास्याञ्च घोरं कलियुगं तथा इत्यादिवचनेन माघीपौर्णमास्या युगादित्वेन चतुर्ष्वपि युगादिषु इत्यनेन प्राप्तिः माघ्याञ्चैव विशेषत इत्यस्य पौनरुक्त्यं सुतरामेव।

† नहि मघायुक्ता मकरस्थे सम्भवतीति। तथाच मघानक्षत्रस्य सिंहघटकतया तत्स्थे चन्द्रमसि मकरस्थे सूर्य्ये षड्ष्टकेनावस्थानात् सप्तमराश्यवस्थानाभावेन परमविप्रकर्षाभावात् सूर्य्याचन्द्रमसोर्यः परो विप्रकर्षः सा पौर्णमासीति गोभिलसूत्रात् मकरराशौ मघायुक्ता पौर्णमासी न घटते इति भावः।

पुष्याश्लेषयुक्ता तत्र भवति। तेन मघायुक्तायाः कुम्भ एव सम्भवात् कथमनुत्कर्षः।

अतएव।

"पौर्णमास्यौ भवन्त्यन्याः कामं नक्षत्रयोगतः।

माघ एव तु माघी स्यान्मकरस्थे दिवाकरे॥"*

न नक्षत्रमपेक्षत इति वा चतुर्थं सर्व्वथा त्वनाकरमेव। तत्र वृषादित इति सप्तम्यास्तसिः वृषादिष्वित्यर्थः। तेन वृष एव दशहरा†। तुलामकरमेषसिंहेषु चतस्रो युगाद्याः। कर्कटसिंहयोरेवोपाकर्म्मोत्सर्गाविति(१)। अतो जन्मदिनमपि सौर एव कार्य्यम्‡। एवञ्च सति वर्षवृद्धग्रभिषेकादि कर्त्तव्यमधिकेन तु

---

(१) उपाकर्म्मोत्सर्गाविति क्वचिदादर्शे पाठः।

---

* पुष्याश्लेषयुक्ता तत्र भवतीति। तथाच पुष्याश्लेषयोः कर्कटराशिघटकतया तत्स्थे चन्द्रे मकरराशौ रवौ च सप्तमराश्यवस्थानात् पुष्याश्लेषान्यतरनक्षत्रयुक्ता पौर्णमासी तत्र घटत एवेति भावः। मघायुक्ता कुम्भ एव सम्भवादिति। तथाच मघानक्षत्रस्य सिंहघटकतया तत्स्थे चन्द्रे कुम्भराशौ रवौ च सप्तमराश्यवस्थानसम्भवादिति भावः। अन्याः माघीपौर्णमासीभिन्नाः।

† न नक्षत्रयोगमपेक्षते इति मकरराशौ माघीपौर्णमासीति शेषः। चतुर्थं माघ्याश्चैव विशेषत इति कल्पितचतुर्थचरणम्। अनाकरमेव अमूलमेव प्रमाणान्तु प्रागनुसन्धेयम्। उपसंहरति तेनेति। वृष एव वृषस्थे रवौ सौरज्यैष्ठ एवेत्यर्थः। ग्रन्थकृन्मते सौरज्यैष्ठसम्बन्धिनी शुक्लदशम्येव दशहरा न त्वाषाढ़गता चान्द्रज्यैष्ठसम्बन्धिनी दशमीति व्यवस्था।

‡ तुलामकरमेषसिंहेषु चतस्रो युगाद्या इति। यद्यपि युगादिविधायकवचने तुलामकरादिपदं नास्ति तथापि ग्रन्थकृन्मते मासपदस्य सौरपरत्वे विधायकवचनस्यकार्त्तिकादि-

इत्यत्र वर्षवृद्धिपदं यदि जन्मदिनाभिप्रायं तदा तस्यायमर्थः। अधिकेनाधिमासेनाधिमासस्यैवाधिकत्वाद्वर्षवृद्ध्यभिषेकमपि कर्त्तव्यम्। तुशब्दोऽप्यर्थः। निपातानामनेकार्थत्वात्*। अभि-

---

पदानां सौरपरत्वावगतेरवश्यभावज्ञापनार्थं तुलामकरमेषसिंहेषु इत्युक्तम्। कर्कटसिंहयोरेव उपाकर्म्मोत्सर्गाविति तथाच निगमः।

"श्रावण्यां श्रावणीकर्म्म यथाविधि समाचरेत्।
उपाकर्म्म तु कर्त्तव्यं कर्कटस्थे दिवाकरे॥" इति।

गार्ग्यः। "सिंहे रवौ तु पुष्यर्क्षे मध्याह्ने विचरेद्बहिः।
छन्दोगा मिलिताः कुर्य्युरुत्सर्गं सर्व्वछन्दसाम्॥"

जन्मदिनमपि जन्मतिथिकृत्यमपीत्यर्थः। सौरे एव सौरमास एव। वर्षवृद्धिपदस्य राजवृद्ध्यर्थकत्वे लक्षणापत्तेराह वर्षवृद्धिपदं यदि जन्मदिनाभिप्रायमिति। तथाच जन्मदिनमपि जन्मतिथिकृत्यमपि सौरे एव सौरमास एव कार्य्यम्।

अतएव न जन्ममासि न च चैत्रपौषे चौरं विवाहो न च कर्णवेध इति। यो जन्ममासे क्षुरकर्म्म यात्रामिति। जन्माख्यमासं किल भागुरिश्च इति। उद्वाहश्च कुमारीणां जन्ममासे प्रशस्यते इति। मासेऽथवा जन्मनि जन्मभे वा व्रतेन विप्रो न बहुश्रुतोऽपीत्यादि बहुषु वचनेषु सौरार्थो दृश्यते।

* अधिकेनाधिमासेनाधिमासस्यैवाधिकत्वात् वर्षवृद्ध्यभिषेकमपि कर्त्तव्यमिति। जन्मतिथेर्निरवकाशत्वमेव वीजम्।

अतएव भविष्ये।

"कुर्य्यात् प्रात्यहिकं कर्म्म प्रयत्नेन मलिम्लुचे।
नैमित्तिकन्तु कुर्व्वीत सावकाशं न यद्भवेदित्यादि॥"

ननु जन्मदिनकृत्यस्य सौरमासीयत्वे कदाचित्तत्तिथेरप्राप्तौ जन्मदिवसनिमित्तगुर्व्वादिपूजनमभिधाय "प्रतिसंवत्सरञ्चैव कर्त्तव्यश्च महोत्सव" इति वचनस्य "षष्ठीच दधिभक्तेन वर्षे वर्षे पुनः पुनः" इति वचनस्य च का गतिः। ग्रन्थकृन्मते एतद्वचनद्वयममूलमेव। यदिच बहुप्रामाणिकपरिगृहीतत्वेन समूलत्वमस्माभिरङ्गीक्रियते तदा सर्व्वेषु जन्मदिवसे इत्यत्र

षेकोऽपि पुष्याभिषेकः। पौषे मलमासेऽपि कार्य्यः इत्यर्थः*।

---

दिवसपदं सावनदिनपरम्। यन्मासीय-यत्संख्यकदिने जातः वर्षे वर्षे तन्मासीय-तत्संख्यकदिने गुर्व्वादयः पूजनीयाः। अस्मिन्नर्थे न कुत्रापि व्यभिचारः।

अतएव दीपिकायाम्।

"जन्मर्च्चयुक्ता यदि जन्ममासे यस्य ध्रुवं जन्मतिथिर्भवेच्च।
भवन्ति संवत्सरमेव यावन्नैरुज्यसम्मानसुखानि तस्य॥"

इति वचनं सङ्गच्छते। तथाच अत्र समुच्चयायोगात् भवेच्चेति चकारो वार्थे तस्य च जन्मतिथ्यावन्वयः। ततश्च यस्य जनस्य जन्ममासे जन्मनक्षत्रयुक्ता चकारवाच्य-वाकारात् केवला वा जन्मतिथिर्यदि भवेत् तस्य जनस्य संवत्सरं यावत् नैरुज्यसम्मान-सुखानि भवन्ति। अत्र यदिकारात् जन्ममासे अनिष्टकरो जन्मतिथ्यप्राप्तिपक्षोऽपि ध्वनितः चान्द्रमासीयत्वे तु कदाचिदपि जन्ममासे जन्मतिथ्यभावो न घटते जन्मर्च्चयुक्तेति विशेषोपादानं नैरुज्यादेरातिशय्यज्ञापनार्थमिति कल्पनीयम्।

* राजाभिषेकस्य मलमासे स्पष्टनिषेधादाह अभिषेकोऽपि पुष्याभिषेकः। एष च कालिकापुराणवचनात् स्फुटीभविष्यति।

पौषे मलमासे इति।

"दशानां फाल्गुनादीनां प्रायो माघस्य च क्वचित्।
नपुंसकत्वं भवति न पौषस्य कदाचन॥"

नपुंसकत्वं मलमासत्वम्।

तथाच। "असंक्रान्तो हि यो मासः कदाचित्तिथिवर्ज्जितः।
कालान्तरात् समायाति स नपुंसक इष्यते॥"

इति वचनेन पौषस्य मुख्यमलमासत्वनिषेधात् पौषे मलमासे इत्यत्र मलमासपदं क्षयापरनामगौणमलमासपरम्।

तथाच काठकगृह्ये।

"यस्मिन् मासे न सङ्क्रान्तिः सङ्क्रान्तिद्वयमेव वा।
मलमासः स विज्ञेयो मासे त्रिंशत्तमे भवेदिति॥"

अत्र क्षयमाससाधारणे मलमासत्वकीर्त्तनं मलमासवत् सावकाशकर्म्मनिषेधार्थम्।

पौषस्य क्षयमासत्वमाह वार्हस्पत्यज्योतिर्ग्रन्थे।

"यद्येकवर्षे त्वधिमासयुग्मं यत् कार्त्तिकादित्रितये क्षयाख्यम्।

तद्वर्ज्जनीयं त्रितयं प्रयत्नाद्विवाहयज्ञोत्सवमङ्गलेषु॥"

क्षयमासलक्षणमाहतुर्ज्योतिःसिद्धान्तभीमपराक्रमौ।

"असङ्क्रान्तमासोऽधिमासः स्फुटः स्यात् द्विसङ्क्रान्तमासः क्षयाख्यः कदाचित्।

क्षयः कार्त्तिकादित्रये नान्यदा स्यात् तदा वर्षमध्येऽधिमासद्वयं स्यात्॥"

तथाच क्षयापरनामगौणमलमासरूपे पौषे मरकदुर्भिक्षाद्यनिष्टनिवारकतया निरवकाशत्वेन पुष्याभिषेकः क्षितिपतिनावश्यं करणीयः। तद्विधिस्तु कालिकापुराणेऽष्टषष्टितमेऽध्यायेऽनुसन्धेयः। यथा—

पुष्याभिषेकः पुष्यस्नानम्। तस्य विधिर्यथा—

और्व्व उवाच।

"शृणु राजन्! प्रवक्ष्यामि पुष्यस्नानविधिक्रमम्।

येन विज्ञातमात्रेण विघ्ना नश्यन्ति सन्ततम्॥

पौषे पुष्यर्क्षगे चन्द्रे पुष्यस्नानं नृपश्चरेत्।

सौभाग्यकल्याणकरं दुर्भिक्षमरकापहम्॥

विष्ट्यादिदुष्टकरणे व्यतीपाते च वैधृतौ।

वज्रे शूले हर्षणादौ योगे यदि न लभ्यते॥

तृतीयायुक्तपुष्यर्क्षे रविसौरिकुजेऽहनि।

तदा समस्तदोषाणां तत् स्नानं हानिकारकम्॥

ग्रहदोषाश्च जायन्ते यदि राज्येषु चेतयः।

तदा पुष्यर्क्षमात्रे तु कुर्य्यान्मासान्तरेऽपि तत्॥

इयन्तु ब्रह्मणा शान्तिरुद्दिष्टा गुरवे पुरा।

शक्रार्थं सर्व्वदेवानां शान्त्यर्थञ्च जगत्पते!॥

तुषकेशास्थिवल्मीककीटदंशादिवर्ज्जिते।

शर्कराक्लसिभस्मादिदोषेण परिवर्ज्जिते॥

काकोलूककङ्कैश्च काकोलैर्गृध्रश्येनकैः ।
वर्ज्जिते कण्टकिवनविभीतकविवर्ज्जिते ॥
शिग्रुश्लेष्मातकाभ्याञ्च जलौकाद्यैर्विवर्ज्जिते ।
सुस्थाने चम्पकाशोकवकुलादिविभूषिते ॥
हंसकारण्डवाकीर्णे सरसीरेऽथवा शुचौ ।
पुष्यस्नानाय नृपतिर्गच्छेयात् स्थानमुत्तमम् ॥
ततः पुरोहितो राजा नानावाद्यैर्निःस्वनैः ।
प्रदोषसमये गच्छेत्तत्स्थानं पूर्व्ववासरे ॥
तस्य स्थानस्य कौवेर्य्यां दिशि स्थित्वा पुरोहितः ।
सुगन्धचन्दनैः पानैः कर्पूराद्यधिवासितैः ॥
गोरोचनाभिः सिद्धार्थैरक्षतैश्च फलादिभिः ।
गन्धद्वारेत्यादिभिस्तु मन्त्रैः सर्व्वाधिवासितैः ॥
अधिवास्य तु तत् स्थानं पूजयेत्तत्र देवताः ।
गणेशं केशवं शक्रं ब्रह्माणञ्चापि शङ्करम् ॥
उमया सहितं देवं सर्व्वाश्च गणदेवताः ।
मातृश्च पूजयेत्तत्र नृपतिः सपुरोहितः ॥
मङ्गलान् सकलान् कृत्वा नानानैवेद्यसञ्चयम् ।
प्रदद्यात्पायसं स्वादु फलं मोदकयावकौ ॥
अधिवास्य तु तत् स्थानं दूर्व्वासिद्धार्थकाक्षतैः ।
तस्मात् स्थानात्तु भूतान्निःसारयेन्मन्त्रमीरयन् ॥
अपसर्पन्तु ते भूता ये भूता भूमिपालकाः ।
भूतानामविरोधेन स्नानमेतत्करोम्यहम् ॥
ततः करौ पुटीकृत्य मन्त्रेणानेन पार्थिवः ।
आवाहयेदिमान्देवान् पूज्यान् पुष्याभिषेकतः ॥
आगच्छन्तु सुराः सर्व्वे येऽत्र पूजाभिलाषिणः ।
दिशोऽभिपालकाः सर्व्वे ये चान्येऽयंशभागिनः ॥

ततः पुष्पाञ्जलिं दत्त्वा पुनर्मन्त्रं पठेदिमम् ।
अद्य तिष्ठन्तु विबुधाः स्थानमासाद्य मामकम् ॥
श्वः पूजां प्राप्य यातारो दत्त्वा शान्तिं महीभुजे ।
तत्र तां नृपतो रात्रिं नयेत्तु सपुरोहितः ॥
स्वप्ने शुभाशुभं विद्यान्नृपस्तु सपुरोहितः ।
कृत्वा पूजान्तु देवानां रात्रौ स्थाने नृपः स्वपेत् ॥
शुभाशुभफलं स्वप्ने ज्ञेयं दोषज्ञसम्मते ।
दुःस्वप्नदर्शनं चेत् स्यात्तदा पुष्याभिषेचने ॥
होमं चतुःशतं कुर्य्याद्दद्याद्वापि गवां शतम् ।
गोवाजिकुञ्जराणाञ्च प्रासादस्य गिरेस्तरोः ॥
आरोहणं शुभकरं राज्यश्रीवृद्धिकारकम् ।
दधिदेवसुवर्णानां भुजगस्य च दर्शनम् ॥
वीणादूर्व्वाक्षतफलपुष्पच्छदविलेपनम् ।
शितांशुच्छत्रशङ्खानां पद्मस्य सुहृदां तथा ॥
लाभः क्षयकरः शत्रोरलङ्कारस्य भूभृतः ।
दर्शनञ्चोपरागस्य निगड़ेनास्य बन्धनम् ॥
मांसस्य भोजनञ्चैव पर्व्वतस्य विवर्त्तनम् ।
नाभिमध्ये तरूत्पत्तिर्मृतं प्रत्यनुरोदनम् ॥
अगम्यागमनं कूपपङ्कगर्त्तावतीर्णता ।
पर्व्वतस्य तथा नद्याः प्रोत्तारः शत्रुकर्त्तनम् ॥
स्वपुत्त्रमरणञ्चैव पानं रुधिरमद्ययोः ।
भोजनं पायसस्यापि मनुष्यारोहणं तथा ॥
कल्याणसुखसौभाग्यराज्यशत्रुक्षयांस्तथा ।
एते स्वप्नाश्च कुर्व्वन्ति नृपस्य नृपसत्तम ! ॥
खरोष्ट्रमहिषाणान्तु आरोहो राज्यनाशकः ।
नृत्यं गीतं तथा हास्यं पाठश्चाप्यशुभप्रदः ॥

रक्तवस्त्रपरीधानं रक्तमाल्यानुरञ्जनम् ।
रक्तां कृष्णां स्त्रियञ्चैव कामयन् मृत्युमाप्नुयात् ॥
कूपान्तरे प्रवेशस्य दक्षिणाशागतिस्तथा ।
पङ्के निमज्जनं स्नानं भार्य्यापुत्रविनाशनम् ॥
नाभौ यस्य भवेत् स्वप्ने तरुत्पत्तिर्नृपस्य च ।
आदाय गर्भनाड़ीन्तु शकुनो याति खं द्रुतम् ॥
स तु राज्यान्तरं प्राप्य महाकल्याणमाप्नुयात् ।
दीर्घं विंशतिहस्तन्तु हस्तषोड़शविस्तृतम् ॥
कुर्य्यात्तु लक्षणोपेतं यज्ञमण्डलमुत्तमम् ।
ततोऽपरेऽह्नि पूर्व्वाह्ने मातॄणां पूजनञ्चरेत् ॥
कुशलयां वसोर्धारां वृद्धिश्राद्धं तथैव च ।
चन्दनागुरुकस्तूरीधूपकर्पूरचूर्णकैः ॥
सम्पूज्य मण्डलस्थानं तस्मिन् ह्रौं शम्भवे नमः ।
अस्त्राय हुं फड़ित्येवं लिखेन्मन्त्रद्वयं बुधः ॥
मन्त्रविन्मण्डलन्तत्र सूत्रैः कम्बलसम्भवैः ।
कौषेयैर्वा स्वस्तिकाख्यं प्रथमं मण्डलं लिखेत् ॥
चतुर्हस्तप्रमाणन्तु मण्डलं विलिखेत्ततः ।
हस्तप्रमाणं पद्मन्तु मण्डलस्य प्रकीर्त्तितम् ॥
द्वाराणि सार्द्धहस्तानि कर्णिकाकेशरोज्ज्वलम् ।
सितं रक्तञ्च पीतञ्च कृष्णं हरितमेव च ॥
शालिचूर्णैस्तु कौसुम्भैर्हारिद्रैर्द्दैरिद्रवैः ।
कुर्य्यात्तथाञ्जनैश्चूर्णैं राजा मण्डलवद्धये ॥
पश्चात्ततः समारभ्य नाडीं पश्चिमगामिनीम् ।
पश्चिमद्वारमध्येन शतहस्तां विनिर्द्दिशेत् ॥
प्रत्येकद्वारमध्ये तु पद्मञ्चैवाष्टपत्रकम् ।
कुर्य्यान्मण्डलभागे तु चूर्णैरेव पृथक् पृथक् ॥

चूर्णैस्तु मण्डलं कृत्वा सूत्राण्युत्सारयेत्ततः ।
उत्सार्य्य सूत्रं प्रथमं मण्डलं पूजयेत्ततः ॥
भवनाय नम इति ततो हस्तं वियोजयेत् ।
सव्यावलम्बहस्तस्तु रजःपात्रं समारभेत् ॥
मध्यमानामिकाङ्गुष्ठैरुपरिष्टाद्दयथेच्छया ।
अधोमुखाङ्गुलिं कृत्वा पातयेत् सुविचक्षणः ॥
समरेखा तु कर्त्तव्या विच्छिन्ना पुञ्जवर्ज्जिता ।
अङ्गुष्ठपर्व्वनैपुण्यात् समा कार्य्या विजानता ॥
संसक्तां विषमं स्थूलं विच्छिन्नं कृशरावृतम् ।
पर्य्यन्तमर्पितं इस्तमालिखेन्न कदाचन ॥
संसक्ते कलहं विद्याद्दूरे रेखे तु विग्रहम् ।
अतिस्थूले भवेद्व्याधिर्नित्यपीड़ाविमिश्रिते ॥
बिन्दुभिर्भयमाप्नोति शत्रुपचान्न संशयः ।
कृशायां चार्थहानिः स्याच्छिन्नायां मरणं ध्रुवम् ॥
वियोगी वा भवेत्तस्य इष्टद्रव्यसुतस्य वा ।
अविदित्वा लिखेद्यस्तु मण्डलन्तु यथेच्छया ॥
सर्व्वदोषानवाप्नोति ये दोषाः पूर्व्वभाषिताः ।
सितसर्षपदूर्व्वाभ्या रेखाः कार्य्याः प्रमाणतः ॥
विमलं विजयं भद्रं विमानं शुभदं शिवम् ।
वर्द्धमानञ्च देवञ्च रत्नाख्यं कामदायकम् ॥
रुचकं स्वस्तिकाख्यञ्च द्वादशैते तु मण्डलाः ।
यथास्थानं यथायत्नं योजनीया विचक्षणैः ॥
सागरे मथ्यमाने तु पीयूषार्थं सुरासुरैः ।
पीयूषधारणार्थाय निर्म्मिता विश्वकर्म्मणा ॥
कला कलान्तु देवानाममिला ते पृथक् पृथक् ।
यतः कृतास्तु कलसास्ततस्ते परिकीर्त्तिताः ॥

नवैव कलसाः प्रोक्ता नामतस्तान्निबोधत ।
गोह्योऽपगोह्यो मरुतो मयूखश्च तथापरः ॥
मनोह्वा लसिभद्रश्च विरुजस्तनुशोषकः ।
इन्द्रियघ्नोऽथ विजयो नवमः परिकीर्त्तितः ॥
तेषामेव क्रमान्नृप ! नव नामानि यानि तु ।
शृणु तान्यपराण्येव शान्तिदानि सदैव हि ॥
क्षितीन्द्रः प्रथमः प्रोक्तो द्वितीयो जलसम्भवः ।
पावनाख्यो ततो द्वौ तु यजमानस्ततः परः ॥
कोषसम्भवनामा तु षष्ठः स परिकीर्त्तितः ।
सोमस्तु सप्तमः प्रोक्तश्चादित्यस्तु तथाष्टमः ॥
विजयो नाम कलसो योऽसौ नवम उच्यते ।
स तु पञ्चमुखः प्रोक्तो महादेवस्वरूपधृक् ॥
घटस्य पञ्चवक्त्रेषु पञ्चवक्त्रः स्वयन्तथा ।
यथाकाष्ठास्थितः सम्यक् वामदेवादिना मतः ॥
मण्डलस्य च मध्यान्तः पञ्चवक्त्रं घटं न्यसेत् ।
क्षितीन्द्रं पूर्व्वतो न्यस्य पश्चिमे जलसम्भवम् ॥
वायव्ये वायवं न्यस्य आग्नेये ह्यग्निसम्भवम् ।
नैर्ऋत्यां यजमानन्तु ऐशान्यां कोषसम्भवम् ॥
सोममुत्तरतो न्यस्य सौरं दक्षिणतो न्यसेत् ।
न्यस्यैवं कलसांश्चैव तेषु च तान् विचिन्तयेत् ॥
कलसानां मुखे ब्रह्मा ग्रीवायां शङ्करः स्थितः ।
मूले तु संस्थितो विष्णुर्मध्ये मातृगणाः स्थिताः ॥
दिक्पाला देवताः सर्व्वा वेष्टयन्ति दिशो दश ।
कुक्षौ तु सागराः सप्त सप्तद्वीपाश्च संस्थिताः ॥
नक्षत्राणि ग्रहाः सर्व्वे तथैव कुलपर्व्वताः ।
गङ्गाद्याः सरितः सर्व्वा वेदाश्चत्वार एव च ॥

कलसेषु स्थिताः सर्व्वे तेषु तानपि चिन्तयेत् ।
रत्नानि सर्व्वबीजानि पुष्पाणि च फलानि च ॥
वज्रमौक्तिकवैदूर्य्यमहापद्मेन्द्रस्फाटिकैः ।
सर्व्वधाममयं विल्वं नागरोडुम्बरं तथा ॥
बीजपूरकजम्बीरकाश्मीराम्रातदाड़िमान् ।
यवं शालिञ्च नीवारं गोधूमं सितसर्षपम् ॥
कुङ्कुमागुरुकस्तूरीमदनं रोचनं तथा ।
चन्दनञ्च तथा मांसीमेलां कुष्ठं तथैव च ॥
कर्पूरं पत्रचण्डञ्च जलं निर्यासकाम्बुदम् ।
शैलेयं बदरं जातीपत्रपुष्पे तथैव च ॥
कालशाकं तथा शुक्रां देवीं पूर्णकमेव च ।
वचां धात्रीं समञ्जिष्ठां तुरुष्कं मङ्गलाष्टकम् ॥
दूर्व्वां मोहनिकां भद्रां शतमूलीं शतावरीम् ।
पर्णानां सबलां क्षुद्रां सहदेवां गजाह्वयाम् ॥
पूर्णकोषां सितां पाठां गुञ्जां शिरसिकान्तलौ ।
व्यामकं गजदन्तञ्च शतपुष्पां पुनर्नवाम् ॥
ब्राह्मीं देवीं शिवां रुद्रां सर्व्वसन्धानिकां तथा ।
समाहृत्य शुभानेतान् कलसेषु निधापयेत् ॥
कलसस्य यथादिष्टं विधिं शम्भुं गदाधरम् ।
यथाक्रमं पूजयित्वा शम्भुं मुख्यतया यजेत् ॥
प्रासादेन तु मन्त्रेण शम्भुतन्त्रेण शङ्करम् ।
प्रथमं पूजयेन्मध्ये नानानैवेद्यवेदनैः ॥
दिक्पालानां घटेष्वेव दिक्पालानपि पूजयेत् ।
पूर्व्वं बहिःस्थापितेषु ग्रहाणां कलसेषु च ॥
नवग्रहान् पूजयेत्तु मातृमोढघटेषु च ।
सर्व्वे देवा घटे पूज्या घटस्तेषां पृथक् पृथक् ॥

नवैव तत्र पूर्व्वोक्ता: सदा मुख्यतमा नृप ! ।
भक्ष्यैर्भोज्यैश्च पेयैश्च पुष्पैर्नानाविधैः फलैः ॥
यावकैः पायसैश्चापि यथासम्भवयोजितैः ।
पुष्यस्नानाय नृपतिः पूजयेत् सकलान् सुरान् ॥
दक्षिणे मण्डलस्याथ कुण्डं निर्म्माय पायसैः ।
समिद्भिः शालिसिद्धार्थैर्घृतैर्दूर्व्वाक्षतैस्तथा ॥
केवलैश्च तथैवाज्यैः पूजयेत् सकलान् सुरान् ।
होमान्ते तोषयेद्विप्रैर्नृपः सार्द्धं पुरोहितम् ॥
होमान्ते मण्डलोदीच्यां वेदिकायां सपट्टकाम् ।
रोचनाख्यमलङ्कारान् तथा सर्व्वान्नियोजयेत् ॥
हस्ता स्वङ्गुलमङ्गुष्ठं विदशाङ्गुलयावधि ।
वृत्तं वा चतुरस्रं वा पद्मकत्रिकसंहितम् ॥
रत्नेशान् पद्ममध्ये तु गौरस्तिकविनायकैः ।
श्रीः श्रीवत्सो वरारोहा स्वामी देवी शुभान्विता ॥
रत्नैः सर्व्वैरलङ्कारैः पट्टं कार्य्यं विहस्तकम् ।
हस्तविस्तारमुच्छ्रायं कर्त्तव्यन्तु दशाङ्गुलम् ॥
स्नानार्थं सार्द्धहस्तन्तु पट्टं वृत्तासनान्वितम् ।
शय्या चतुर्गुणा दीर्घा धनुर्मानन्तु पीठकम् ॥
गजसिंहकृताटोपं हेमरत्नविभूषितम् ।
सिंहाख्यं सार्द्धविस्ताराद्दण्डासनमथापि वा ॥
व्याघ्रचित्रकपट्टैर्वा उपधानानि कारयेत् ।
अन्यैर्वा निर्म्मितैश्चर्म्मसृदुतूलकपूरितान् ॥
शय्या दैर्घ्यार्द्धविस्तीर्णा चतुर्हस्ता सुलक्षणा ।
वितस्त्यधिकमिच्छन्ति नृपस्य गुरुविद्यया ॥
अर्द्धचन्द्रसमं कुर्य्यादासनं चतुरस्रकम् ।
उपधानानि शय्यायाः कर्णादिमूलदेशतः ॥

षोड़शैवाच कार्य्याणि वर्षचिन्हयुतानि च।
यानं सिंहासनं पट्टं अर्घ्योपकरणादिकम्॥
राज्ञो नूतनयोग्यं तद्वेद्या उत्तरतो न्यसेत्।
तेषान्तु पश्चिमे स्वर्णरत्नौघनिचिते वरे॥
पर्य्यङ्के यज्ञदार्व्वोघनिर्म्मिते मद्रदारुरे।
ऊर्द्ध्वाच्छादनसंयुक्तचर्म्माण्यष्टौ चतुष्टयम्॥
वृषभस्य तथोर्णायाः सिंहशार्दूलयोरपि।
पादपीठे रत्नयुते पादावारोप्य पार्थिवः॥
तस्मिन् पर्य्यङ्कपृष्ठस्थे चर्म्मखण्डचतुष्टये।
नानालङ्कारभूषाढ्यं नृपतिं रत्नमालिनम्॥
स्नापयेद्ब्राह्मणैः सार्द्धं राजानं सुखसङ्गतम्।
संवीतकम्बलं कृष्णं रत्नवस्त्रावशोभितम्॥
कलसैर्बलिपुष्पाद्यैः शालिचूर्णैश्च स्नापयेत्।
अष्टौ षोड़शविंशाष्टशतमष्टाधिकञ्च वा॥
कलसानां समाख्याता अधिकस्योत्तरोत्तरम्।
जयकल्याणदैर्मन्त्रैर्मङ्गल्यैश्च शाम्भवैः॥
वैष्णवैरथ दिक्पालैर्ग्रहमन्त्रैश्च मातृकैः।
आज्यं तेजः समुद्दिष्टमाज्यं पापहरं परम्॥
आज्यं सुराणामाहारमाज्ये लोकाः प्रतिष्ठिताः।
भौमान्तरीक्षं दिव्यं वा यत्ते कल्मषमागतम्॥
सर्व्वं तदाज्यसंस्पर्शात् प्रणाशमुपगच्छतु।
ततोऽपनीय गात्रात्तु कम्बलं वस्त्रमेव च॥
कलसैः स्नापयेद्भूपं पुष्पस्नानार्थपूरितैः।
एभिर्मन्त्रैर्नरश्रेष्ठ! तत्त्वतत्त्वार्थसाधकैः॥
सुरास्त्वामभिषिञ्चन्तु ये च सिद्धाः पुरातनाः।
ब्रह्मा विष्णुश्च रुद्रश्च साध्याश्च समरुद्गणाः॥

आदित्या वसवो रुद्रा आश्विनेयौ भिषग्वरौ ।
अदितिर्देवमाता च स्वाहा लक्ष्मीः सरस्वती ॥
कीर्त्तिर्लक्ष्मीर्धृतिः श्रीश्च सिनीवाली कुहूस्तथा ।
दितिश्च सुरसा चैव विनता कद्रुरेव च ॥
देवपत्न्यश्च याः प्रोक्ता देवमातर एव च ।
सर्व्वास्त्वामभिषिञ्चन्तु सर्व्वे चाप्सरसां गणाः ॥
नक्षत्राणि मुहूर्त्ताश्च पक्षाहोरात्रसन्धयः ।
संवत्सरो दिवा रात्रिः कलाः काष्ठाः क्षणा लवाः ।
सर्व्वे त्वामभिषिञ्चन्तु कालस्यावयवाश्च ये ।
वैमानिकाः सुरगणा मनवः सागरैः सह ॥
सरितश्च महानागा यक्षाः किंपुरुषास्तथा ।
वैखानसा महाभागा द्विजा वैहायसास्तथा ॥
सप्तर्षयः सदाराश्च ध्रुवस्थानानि यानि तु ।
मरीचिरत्रिः पुलहः पुलस्त्यो भृगुरङ्गिराः ॥
क्रतुः सनत्कुमारश्च सनकोऽथ सनन्दकः ।
सनातनश्च दक्षश्च जैगीषव्योऽथ नन्दनः ॥
एकतश्च द्वितश्चैव त्रितो जाबालिकाश्यपौ ।
दुर्व्वासा दुर्विनीतश्च कण्वः कात्यायनस्तथा ॥
मार्कण्डेयो दीर्घतपाः शुनःशेफो विदूरथः ।
और्व्वः संवर्त्तकश्चैव च्यवनोऽत्रिः पराशरः ॥
द्वैपायनो यवक्रीतो देवरातः सहानुजः ।
एते चान्ये च बहवो देवव्रतपरायणाः ॥
सशिष्यास्तेऽभिषिञ्चन्तु सदाराश्च तपोधनाः ।
पर्व्वतास्तरवो नद्यः पुण्यान्यायतनानि च ॥
प्रजापतिः क्षितिश्चैव गावो विश्वस्य मातरः ।
वाहनानि च दिव्यानि सर्व्वे लोकाश्चराचराः ॥

अग्नय: पितरस्तारा जीमूता: खं दिशो जलम् ।
एते चान्ये च बहव: पुण्यसंकीर्त्तना: शुभा: ॥
तोयैस्त्वामभिषिञ्चन्तु सर्व्वोत्पातनिवर्हणा: ।
इत्येवं शुभदैवत्यैर्मन्त्रैर्दिव्यैस्तथापरै: ॥
शैवैर्नारायणै रौद्रैर्ब्रह्मशक्रसमुद्भवै: ।
आपो हि ष्ठा हिरण्येति सम्भवेति सुरेति च ॥
मानस्तोकेति मन्त्रेण गन्धद्वारेत्यनेन च ।
सर्व्वमङ्गलमङ्गल्यै: श्रीश्च ते यद्वयोगिभि: ॥
इत्येवं स्नानमासाद्य गात्रमावृत्य कम्बलै: ।
सर्व्वमङ्गलमन्त्रेण वस्त्रं कार्पासकं भ्रियात् ॥
आचम्य च ततो देवान् गुरुं विप्रांश्च पूजयेत् ।
ध्वजं छत्रं चामरञ्च घण्टामश्वान् गजांस्तथा ॥
मन्त्रं जप्त्वा धारयेत्तु ततो गच्छेद्धुताशनम् ।
तत्र गत्वा वह्निमध्ये वह्निशेषोँश्च्य पार्थिव: ॥
अनिमित्तनिमित्तानि लक्षयेत्तत्र विन्दुभि: ।
दैवज्ञकञ्चुकामात्यवन्दिपौरजनैर्वृत: ॥
वादित्रघोषैस्तुमुलैस्तथा तौर्य्यत्रिकै: शुभै: ।
कृत्वा शेषे पुन: शान्तिमाशीर्वाच्य च वै द्विजान् ॥
पूर्णां विधाय विधिवद्दक्षिणां कनकान्वित ।
धान्यानि चाथ वासांसि दत्त्वा कुर्य्याद्विसर्ज्जनम् ॥
तत: शेषजलै: सर्व्वानमात्यादीन् पुरोहित: ।
सेचयेच्चतुरङ्गञ्च बलञ्चापि सराष्ट्रकम् ॥
एवं कृत्वा नृप: पश्चात्त्रिरात्रं संयतो भवेत् ।
मांसमैथुनहीनश्च कुर्य्यान्मङ्गल्यसेवनम् ॥
पुष्यनक्षत्रयुक्ता तु तृतीया यदि लभ्यते ।
तस्यां पूज्या सदा देवी चण्डिका शङ्करेण ह ॥

तथा कुथुमिः ।

"अब्दमम्बुघटं दद्यादन्नञ्चामिषसंयुतम् ।
संवत्सरे विवृद्धेऽपि प्रतिमासञ्च मासिकम् ॥"

"संवत्सरे विवृद्धेऽपी"त्यधिमासात्तिथिवृद्ध्या वेति द्वयोरपि ग्रहणम्*। तेनैकं मासिकश्राद्धमम्बुघटश्राद्धानि च त्रिंशद्विवर्द्धन्ते ।

---

पञ्चालिकाविवाहाद्यैः शिशूनां कौतुकैस्तथा ।
वैवाहिकेन विधिना मोदयेच्चण्डिकां शिवाम् ॥
चतुष्पथेषु सर्व्वेषु देवदेवीगृहेषु च ।
पताकाभिरलङ्कुर्य्यादेवं कुर्व्वन्न सीदति ॥
एवं कृत्वा शान्तियागं तथा पुष्याभिषेचनम् ।
चतुरङ्गैः समं राजा भार्य्याभिस्तनयैः सह ।
राज्यमण्डलसंयुक्तः परत्रेह न सीदति ॥
नातः परतरो यज्ञो नातः परतरोत्सवः ।
नातः परतरा शान्तिर्नातः परतरं शिवम् ॥
अनेनैव विधानेन नृपतेरभिषेचनम् ।
युवराज्याभिषेकञ्च कुर्य्याद्राजपुरोहितः ॥
नृपाभिषेककरणमादौ यदि समाचरेत् ।
अनेनैव विधानेन स्थिरः स्यान्नृपतिस्तदा ॥
अयं यज्ञः समुद्दिष्टः शक्रार्थं ब्रह्मणा पुरा ।
एनं यज्ञं नृपो इष्ट्वा परत्रेह न सीदति ॥"

इति कालिकापुराणे पुष्याभिषेकः ६८ अध्यायः ।

* अब्दमम्बुघटमिति । अब्दमिति यस्मिन्नब्दे पित्रादेर्मरणं तदब्दं व्याप्य प्रत्यहं संवत्सरे विवृद्धेऽपि मलमासपातेन तिथिवृद्ध्या वा विवृद्धेऽपि त्रयोदशमासात्मकसंवत्सरे अर्थात् मलमासेऽपि दद्यात् । एतत्काम्यं तत्प्रयोगश्च—अमुकगोत्र प्रेत अमुकदेवशर्म्मन् एतत्ते अन्नं सामिषं सोदकं स्वधा इति । संवत्सरे विवृद्धे त्रयोदशमासात्मकसंवत्सरे अधि-

तथा सत्यव्रतः।

"संवत्सरस्य मध्ये तु यदि स्यादधिमासकः।
तदा द्वादशके श्राद्धे कार्य्यं तदधिकं भवेत्॥"*

अतो यद्विष्णुवचनम्।

"मासिकार्थञ्चेदधिमासपातो मासिकार्थं दिनमेकं वर्द्धयेत्।"

तत्र यत् वर्द्धनं खण्डनमिति व्याख्यातं तत् कुथुमिसत्यव्रतवचनेन बाधितम्। न च वाच्यम्।

"चतुर्थीह्ने त्रिपक्षे च षण्मासे चाब्दिके तथा।
प्रतिमासं तथा तस्य श्राद्धान्येतानि षोड़श॥"

इति निबध्यते†। सप्तदशत्वापत्तेः यतोऽधिकश्राद्धविधानदर्शना-

---

मासादिति। द्वादशमासाः संवत्सरः क्वचित्त्रयोदशमासा इति श्रुतेः। तिथिवृद्ध्या वेति वाकारः समुच्चये दिनवृद्धिक्रमसञ्चयाभ्यां तिथिवृद्ध्या चेत्यर्थः। द्वयोरपि ग्रहणमिति। तथाच औत्पातिकमलमाससमानधर्म्मभानुलङ्घितनामासंक्रान्तमासे तिथिवृद्ध्यभावात् तद्व्यावृत्तये अधिमासात्तिथिवृद्ध्या केति द्वयोरपि ग्रहणमित्युक्तम्।

* उपसंहरति तेनेति। एकं मासिकश्राद्धं वर्द्धते त्रिंशद्‌वृषट्श्राद्धानि विवर्द्धन्ते इति लिङ्गव्यत्ययेनान्वयः। तथाच त्रयोदशमासात्मकमलमासयुतवत्सरे प्रतिमासकर्त्तव्यतया एकमासिकश्राद्धस्य वृद्धिः प्रत्यहकर्त्तव्यतया त्रिंशद्‌वृषट्श्राद्धानां वृद्धिश्च भवतीति भावः। संवत्सरस्य मध्ये एकादशमासाभ्यन्तरे इत्यर्थः। तथाच असंक्रान्तेऽपि कर्त्तव्यमाब्दिकं प्रथमं द्विजैरित्यादिवचनात् अन्त्याधिमासे मासिकवृद्धिर्नास्तीति भावः। द्वादशके श्राद्धे प्रकृतद्वादशमासे द्वादशमासिके कृते अधिकं यन्मलमासात्मकमधिकं भवेत् तच्च तत् त्रयोदशमासिकं कार्य्यमित्यर्थः।

† अत इति। मलमासपाते मासिकवृद्धेरावश्यकत्वं यतः अत इत्यर्थः। मासिकार्थ-

दुत्सर्गसिद्धसंख्यानुवादमात्रत्वात्। अमावास्यायां मृतस्य श्रौनामासिकं वृद्धौ खण्डनीयमेव।

---

श्चेदिति चेद्यदि मलमासपातः एकादशमासाभ्यन्तरे इति शेषः। यत् वर्द्धनं खण्डनमिति वर्धक् छेदनपूरणे इत्यनेन चुरादिवर्धधातोश्छेदनार्थत्वादाह वर्द्धनं खण्डनमिति। कुथुमिसत्यव्रतवचनेन बाधितमिति कुथुमिवचनम् श्रब्दमम्बुघटं दद्यादिति वचनं सत्यव्रतवचनं संवत्सरस्य मध्ये तु इति वचनं बाधितम् तन्मतं खण्डितमित्यर्थः। चतुर्थाहे अस्थिसञ्चयनदिने षण्मासि एकाहन्यूनषण्मासे प्रथमषाण्मासिकश्राद्धमित्यर्थः। आब्दिके एकाहन्यूनाब्दिके द्वितीयषाण्मासिकश्राद्धमित्यर्थः। अन्यथा प्रतिमासिकमित्यनेन षष्ठमासिकादेः प्राप्तत्वात् षण्मासि इत्यादेरनुवादकता स्यात्। प्रतिमासं मासं मासं प्रति प्रतिमासं द्वादशमासिकानि इत्यर्थः। एतानि षोड़शश्राद्धानि।

अतएव हेमाद्रिः।

> अस्थिसञ्चयने श्राद्धं त्रिपक्षे मासिकानि च।
> रिक्तयोश्च तथा तिथ्योः प्रेतश्राद्धानि षोड़श॥ इति।

रिक्तयोस्तिथ्योरित्येकेनाह्ना न्यूने षष्ठे द्वादशे च मासि इत्यर्थः इत्याह। एतत् षोड़शश्राद्धं शिष्यपर्य्यन्तरहितस्य साग्नेर्वोध्यं तस्य सपिण्डीकरणनिषेधात्। एवं निरग्नेरपि शिष्यपर्य्यन्तरहितस्य सपिण्डनं नास्ति। यथा—

लघुहारीतः।

> "पुत्त्रेणैव तु कर्त्तव्यं सपिण्डीकरणं स्त्रियाः।
> पुरुषस्य पुनस्त्वन्ये भ्रातृपुत्त्रादयोऽपि चेति॥"

आदिशब्दग्राह्यमाह स एव।

> "भ्राता वा भ्रातृपुत्त्रो वा सपिण्डः शिष्य एव वा।
> सहपिण्डक्रियां कृत्वा कुर्य्यादभ्युदयं ततः॥"

भ्राता वेति वाशब्दात् भ्रात्रपेक्षया प्रधानत्वेन पूर्व्वाधिकारिणां दौहित्रादीनां समुच्चयः। चतुर्थाहे इति नवश्राद्धोपलक्षणम्। नवश्राद्धन्तु प्राग्दर्शितम्। नवश्राद्धत्वसामान्यधर्म्ममादाय षोड़शत्वसंख्यापूर्त्तेः श्राद्धान्येतानि षोड़श इत्यनेन न विरोधः।

तथा कुथुमिः ।

“संवत्सरातिरिक्तो वै मासो यः स्यात्त्रयोदशः ।
तस्मिंस्त्रयोदशं श्राद्धं न कुर्य्यादिन्दुसंक्षये ॥”

अमावास्यायां मासिकस्य विशेषेण मलमासे निषेधात् । अपि तिथ्यन्तरकार्य्यस्याभ्यनुज्ञानम् । न च अमावास्यापार्व्वणश्राद्धस्यायं निषेध इति वाच्यम् । पुरुषभेदेन तस्यानियतसंख्यत्वात्त्रयोदशत्वानुपपत्तेः । नन्वत्राप्यब्दशेषेऽधिमासश्राद्धस्य क्रियमाणस्य त्रयोदशत्वं न पुनर्द्वितीयादिमासेषु क्रियमाणानां तेषां द्वितीयादिसंख्यत्वात् । नैतत् वार्षिकश्राद्धानि संकलय्य यतः कुतश्चिदारभ्य गणने त्रयोदशत्वं सर्व्वेषां त्रयोदशा इति गणनवत् पणपुराणादिवद्वा* । किञ्च पर्व्व चाग्रयणं तथेति पर्व्वामावास्या तन्नि-

* सप्तदशत्वापत्तेरिति । मलमासपाते इति शेषः । उत्सर्गसिद्धसंख्यानुवादमात्रत्वादिति सामान्यसिद्धसंख्यानुवादमात्रात् । अमावास्यायां मृतस्य ऊनमासिकम् । ऊनमासिकं मलमाससम्बन्धिमासिकम् ।

तथाच व्यासः ।

“मलिम्लुचे तु सम्प्राप्ते ब्राह्मणो म्रियते यदि ।
ऊनाभिधेयो मासोऽसौ कथं कुर्य्यात्तदाब्दिकम्” ॥ इति ।

वृद्धौ खण्डनीयमेवेति । तथाचामावास्यामृतस्य मलमासपाते मासिकवृद्धिर्नास्तीति भावः । तिथ्यन्तरकार्य्यस्य अमावास्याभिन्नतिथिमृतस्य मलमासनिमित्तकत्रयोदशमासिकवृद्धिर्भवतीत्यर्थः । पुरुषभेदेन नानापुरुषकर्त्तृकपार्व्वणानुष्ठानेन तस्य पार्व्वणस्य अनियतसंख्यत्वात् नियतसंख्यावाचकशब्देनानभिधानात् । त्रयोदशत्वानुपपत्तेरिति तथाच मलमासीयामावास्यायाः पूर्व्वं कस्यापि पार्व्वणमेकं भूतं, कस्यापि पार्व्वणद्वयं, कस्यापि त्रयं, चतुष्टयादिकं वा, इत्यतः अमावास्यायां कर्त्तव्यस्य पार्व्वणस्य सर्व्वेषां त्रयोदशत्वं न सम्भवतीत्यभि-

मित्तकस्य प्रतिप्रसवात् कथं तन्निषेधः* । नन्वेकस्मिन्मासि

---

प्रायः । अथवा पुरुषभेदेन इत्युपलक्षणम् । एकस्यापि जीवनपर्य्यन्तं पार्व्वणस्य विहित-त्वात् । संख्याया अनियतत्वं, प्रेतश्राद्धस्य षोड़शत्वं, मलमासपाते सप्तदशत्वं नियतम् । तत्र प्रथमादिभेदोऽपि नियत इति भावः । अब्दशेषे अधिमासश्राद्धस्येति । तथाच मल-मासपाते वत्सरस्य त्रयोदशमासात्मकत्वात् तत्र क्रियमाणस्य पार्व्वणस्य सुतरां त्रयोदशत्वम् इति भावः ।

* अमावास्यापार्व्वणश्राद्धस्य मलमासकर्त्तव्यताविधायकस्पष्टवचनं दर्शयति किञ्चेति । पर्व्व अमावास्या तन्निमित्तकस्येति । यच्चात्र स्मार्त्तेन दूषणमभिहितं, न तु पार्व्वणश्राद्ध-परम्, तस्य कृष्णपक्षनिमित्तकत्वेन पर्व्वनिमित्तकत्वाभावादित्यादि, तन्न ।

"अमावास्यां यत्क्रियते तत्पार्व्वणमुदाहृतम् ।

क्रियते वा पर्व्वणि यत् तत्पार्व्वणमिति स्थिति"रिति वचने अमावास्यां यत् क्रियते इति श्रुतेः, पर्व्वणि यत् क्रियते इति श्रुतेश्च । अमावास्यापर्व्वणोर्निमित्तत्वे बाधकाभावात् । न चात्र यत्पदद्वयश्रुतेः यत्पदेन कृष्णपक्षनिमित्तकश्राद्धमुच्यते । तथाच यत्कृष्णपक्षनिमित्तश्राद्धम् अमावास्यां पर्व्वणि च क्रियते तदेव पार्व्वणमित्यर्थो वाच्य इति वाच्यम् । एतद्वचने कृष्णपक्षनिमित्तश्राद्धानुपस्थितेः यत्पदेन तच्छ्राद्धकथनस्यायुक्तत्वात् । न च विधायकवचने अमावास्यापर्व्वणोरश्रवणात् यत्पदेन कृष्णपक्षनिमित्तश्राद्धं सुतरां वाच्यमिति वाच्यम् । "अमायां पितृभ्यो दद्यात् पूर्व्वेद्युर्ब्राह्मणान् सन्निपात्य" इति निर-पेक्षश्रुतिबलात् अमावास्याष्टका कृष्णपक्षपञ्चदशीषु चेत्यभिधाय ।

"एतच्चानुपनीतोऽपि कुर्य्यात् सर्व्वेषु पर्व्वसु ।
श्राद्धं साधारणं नाम सर्व्वकामफलप्रदम् ॥
भार्य्याविरहितोऽप्येतत् प्रवासस्थोऽपि नित्यशः ।
शूद्रोऽप्यमन्त्रवत् कुर्य्यादनेन विधिना बुधः ॥"

इति विशेषविधिबलाच्च कृष्णपक्षातिरिक्तामावास्यानिमित्तकस्य पर्व्वनिमित्तकस्य च पृथक् श्राद्धद्वयस्य श्रवणात् । न च कृष्णपक्षनिमित्तस्य श्राद्धस्य पर्व्वकरणपक्षे फलविशेषज्ञापक-मेवेदं वचनं न तु पर्व्वनिमित्तकश्राद्धविधायकमिति वाच्यम् । एतच्चानुपनीतोऽपि कुर्य्या-

तिथिद्वये सति पूर्व्वस्मिन्नेव मासि द्वादशभिर्मासैः सिद्धे संवत्सरे वार्षिकपुनराब्दिकसपिण्डीकरणान्तानान्तन्नैव कृतत्वात् कथं पुनर्मासिकप्रसक्तिः*। नैतत् वार्षिकादीनामेव वचनोत्कर्षात्।

---

दिति एतच्चेति चकारश्रुतेः पर्व्वनिमित्तत्वेन पृथक्श्राद्धस्यावश्यवक्तव्यत्वात्। तथाचायं वचनार्थः। एतत्प्रागुक्तश्राद्धचतुष्टयं, पर्व्वसु पर्व्वनिमित्तं साधारणं श्राद्धञ्च, "अनुपनीतो" जाताग्निः अपि समुचितसाग्न्यादिश्च "भार्य्याविरहितोऽपि" "प्रवासस्थोऽपि नित्यशः" कुर्य्यात्। श्राद्धस्य फलाकाङ्क्षायां "सर्व्वकामफलप्रदमिति" विशेषणम्। अनेन विधिना" एतच्छ्राद्धपञ्चकम् "शूद्रोऽपि" "अमन्त्रवत्" कुर्य्यादिति। यत्तु अपरपक्षे यदहः सम्पद्यते अमावास्यायान्तु विशेषेणेति निगमवचनम्। अस्यार्थः—कृष्णपक्षे यदहः यां तिथिं प्राप्य सद्द्रव्यब्राह्मणादिकं लभ्यते तस्यां तिथौ कृष्णपक्षनिमित्तं श्राद्धम्, अमावास्यायाम् अमावास्यानिमित्तं श्राद्धञ्च कुर्य्यादिति शेषः। तुश्चार्थे। एतद्रूपेण ग्रन्थकर्त्तुराशयवर्णने न स्मार्त्तोक्तदोषावकाशः इति दिक्। अतएव हेमाद्रिणा अवषट्कारहोमाश्च पर्व्व चाग्रयणन्तथा वचनमुक्त्वा अवषट्कारहोमाः अग्निहोत्रोपासनवैश्वदेवादयः पर्व्व दर्शपौर्णमासौ पार्व्वणस्थालीपाकश्च इति व्याख्यातम्। प्रतिप्रसवात् अमावास्यापार्व्वणस्य मलमासे कर्त्तव्यताविधानात्।

* अमावास्यामृतस्य मलमासे मासिकवृद्धिर्न सम्भवतीत्याह नन्वेकस्मिन्नित्यादि। एकस्मिन् मासि सौरमासि तिथिद्वये सति अमावास्याद्वये सति पूर्व्वस्मिन्नेव मासि मलमासरूपपूर्व्वचान्द्रमासेनैव द्वादशभिर्मासैः पूर्व्वमृततिथिं विहाय अपरमृततिथिमादाय परिगणितैः द्वादशभिर्मासैः सिद्धे समाप्ते संवत्सरे वार्षिकपुनराब्दिकसपिण्डीकरणान्तानां द्वितीयषाण्मासिकद्वादशमासिकसपिण्डीकरणश्राद्धानामित्यर्थः। "पूर्व्वेद्युराब्दिकं श्राद्धं परेद्युः पुनराब्दिकमिति" वचनात् वार्षिकपुनराब्दिकपदाभ्यां द्वितीयषाण्मासिकद्वादशमासिके उच्येते। कथं मासिकप्रसक्तिरिति। अमावास्यामृतस्य त्रयोदशे मासि कथं मासिकवृद्धिप्रसक्तिः। सपिण्डनोत्तरं मासिकासम्भवादिति भावः।

तथाच विष्णुधर्म्मोत्तरे मार्कण्डेयः ।

"संवत्सरस्य मध्ये तु यदि स्यादधिमासकः ।
तदा त्रयोदशे मासि क्रिया प्रेतस्य वार्षिकी ॥"

वर्षनिमित्ताया वार्षिकपुनराब्दिकसपिण्डीकरणान्तश्राद्धक्रियाया उत्कर्षात् । यत्तु वदन्ति ।

"यस्मिन्राशिगते भानौ विपत्तिं यान्ति मानवाः ।
तेषां तत्रैव कर्त्तव्या पिण्डदानोदकक्रिया ॥"

इति वचनेन तेषामनुत्कर्षः तन्न । मृततिथिकर्त्तव्यसांवत्सरिकश्राद्धविषयत्वादेवास्य वार्षिकसपिण्डीकरणयोस्तु नैवंरूपत्वात् ।

इत्यधिमासनिरूपणम् । *

---

* निषेधयति नैतदिति । वचनोत्कर्षात् विशेषवचनेन उत्कर्षात् अमावास्यामृतस्य मलमासे मासिकनिषेधेन शुद्धमासि अन्यस्योत्कर्षादिति । विपत्तिं विनाशम् । तेषां तत्रैव तत्सौरमास एव । मृततिथिकर्त्तव्यसांवत्सरिकविषयत्वात् मलमासमृतस्येति शेषः । शुद्धमासि मृतस्य मलमासे सांवत्सरिकश्राद्धनिषेधात् ।

इति मलमासनिरूपणम् ।

## अथ सम्प्रति द्विराषाढ़निरूपणम्।

तत्र ज्योतिःशास्त्रम्।

"व्रजति यदा मिथुनं विहाय कर्किं
त्यक्त्वा राजविवर्ज्जितान्तिथिञ्च सूर्य्यः।
भवति तदा नियतं द्विराषाढ़ः
सुरशयनस्य विधिर्द्वितीयमासि॥"*

राजा सोमस्तेन विवर्ज्जिता अमावास्योच्यते, तां विहाय कर्कट-गमनविशेषणात् कर्कटगमन एव तदतिक्रमो न मिथुनगमन-समय इति अमावास्याद्वयातिक्रमावगतेराषाढ़द्वयमेको मिथुने कर्कटे चापरः। एतदेवापरोऽप्याह।

---

* अथ द्विराषाढ़निरूपणमिति। अधिमासं निरूप्य तत्प्रसङ्गेन द्विराषाढ़निरूपणम् प्रतिजानीते सम्प्रति द्विराषाढ़निरूपणं द्विराषाढ़ादिनिरूपणं अथवा मुख्यगौणसाधारण-द्विराषाढ़निरूपणं क्रियते मयेति शेषः। व्रजति यदेति वचनार्थं स्वयं विवृणोति राजा सोम इत्यादि। तेन विवर्ज्जिता चन्द्रसम्बन्धरहिता। कर्कटगमन एव तदतिक्रमो न मिथुनगमन इति। तथाचायं वचनार्थः। सूर्य्यः पूर्व्वामावास्यान्त्यक्षणं विहाय उपान्त्य-क्षणादौ यदा मिथुनं व्रजति सञ्चरति, मिथुनं त्यक्त्वा राजविवर्ज्जितां सोमसम्बन्धरहितां परामावास्याञ्च विहाय कर्किं कर्कटराशिं व्रजति प्रतिपदादितिथाविति शेषः तदैव द्विराषाढ़ः द्विचान्द्राषाढ़ो भवति तत्र सुरशयनस्य हरिशयनस्य विधिः द्वितीयमासि कर्कट-गतशुद्धाषाढ़े भवतीत्यर्थः। तथाच पूर्व्वामावास्याया उपान्त्यक्षणादौ मिथुनसङ्क्रमे तदुत्तरशुक्लप्रतिपदादिदर्शान्तमासस्य स्वाव्यवहितप्राक्क्षणावच्छिन्नमिथुनस्थरव्यारब्धतया चान्द्राषाढ़त्वम्। एवं परामावास्याम् अतिक्रम्य शुक्लप्रतिपदादौ कर्कटसङ्क्रमे तच्छुक्ल-प्रतिपदादिदर्शान्तमासस्यापि स्वाव्यवहितप्राक्क्षणावच्छिन्नमिथुनस्थरव्यारब्धतया च चान्द्राषाढ़त्वमिति द्विराषाढ़त्वं निर्विवाद इति भावः।

"मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत् ।
द्विराषाढ़: स विज्ञेयो विष्णु: स्वपिति कर्कटे ॥"

अमावास्याद्वयान्तं स्पृशेदित्यर्थ: । पूर्व्ववचनेन "राजविवर्ज्जितां" त्यक्त्वा कर्कटगमनश्रुते: यदि दर्शद्वयमतिक्रमतीति बोद्धव्यम् ।

तथा ।

"अमावास्यामतिक्रम्य कुलीरं याति भास्कर: ।
द्विराषाढ़: स विज्ञेयो विष्णु: स्वपिति कर्कटे ॥"

अमावास्यामतिक्रम्यामावास्याद्वयमित्यर्थ: । एकातिक्रमस्य सदा दर्शनात् । न च तामतिक्रम्यैवान्तरं प्रतिपदि कर्कटगमने द्विराषाढ़ इति वाच्यम् । द्वितीयायामपि कर्कटसंक्रान्तौ द्विराषाढ़स्य निर्व्विवादत्वात् ।

तथा ।

"प्राप्त आषाढ़मासे तु सिनीवालीद्वयं भवेत् ।
द्विराषाढ़: स विज्ञेय: पतिते चाधिमासके ॥"

सिनीवाल्यमावास्यान्तद्वयं* भवेन्निष्पद्येत । निष्पत्तिश्च तिथेरन्तपर्य्यन्तेनैव ।

---

* अमावास्याद्वयान्तं स्पृशेदित्यर्थ इति । तथाच एकस्मिन् राशौ संक्रान्तिशून्यं पूर्व्वापरामावास्यान्त्यक्षणद्वयञ्चेत्तदैव अमावास्याद्वयान्त्यस्पर्शनं भवेदिति भाव: । यदि दर्शद्वयमतिक्रमतीति । दर्शद्वयान्त्यक्षणद्वयमतिक्रम्य सूर्य्य: राश्यन्तरं सञ्चरतीत्यर्थ: । प्राप्ते आषाढ़मासे तु सौराषाढ़मासे प्राप्ते सतीत्यर्थ: । सा दृष्टेन्दु: सिनीवालीति कोषात् चतुर्द्दशीयुक्तामावास्याया: सिनीवालीत्वात् । तदन्त्यद्वयस्य एकस्मिन् राशौ सत्त्वेऽपि मलमासासम्भवादाह सिनीवाल्यमावास्यान्त्यद्वयमिति सिनीवालीद्वयमन्नामावास्यान्त्यक्षणद्वयमित्यर्थ: ।

तथा ।

"अमावास्यामतिक्रम्य यदार्कः कर्कटं व्रजेत् ।

द्विराषाढ़ं तदा प्राहुः पतिते चाधिमासके ॥"

पुराणस्य ।

तदेतैर्मिथुनस्थसूर्य्येण द्वयातिक्रमे मुख्यश्चान्द्रो द्विराषाढ़ो दर्शितः। तस्यैव मिथुनस्थरव्युपक्रान्ततया द्विरावृत्तत्वात् सौरस्य नावृत्तिरित्युक्तम्। न च चान्द्रसौराभ्यां द्विराषाढ़स्तस्य प्रत्यब्द-मेव भावात्*। मेषवृषसूर्य्येऽप्यधिमासे पतिते द्विराषाढ़ः पतिते चाधिमासक इति भूतनिर्द्देशात्। स तु गौणः कर्कटे चान्द्राषाढ़लाभनिमित्ततागुणयोगात्। कर्कटादावप्यधिमासपाते द्विराषाढ़माह पारस्करः।

---

* प्रथमक्षणाद्यवच्छिन्नामावास्याद्वयमादाय मलमासापत्तिवारणाय तिथेरन्तपर्य्यन्ते-नैवेति अन्त्यक्षणपर्य्यन्तेनैव इत्यर्थः। यदार्कः कर्कटं व्रजेदिति पूर्व्वामावास्यान्त्य-क्षणमतिक्रम्य मिथुनमभिभुज्यमानोऽर्कः परामावास्यान्त्यक्षणमतिक्रम्य यदा कर्कटं व्रजेत् सञ्चरेदित्यर्थः। "पतिते चाधिमासके" इत्यनेन पूर्व्वामावास्यायाः परतः शुक्लप्रतिपदि मिथुनसङ्क्रमेण अमावास्याद्वयातिक्रमेऽपि द्विराषाढ़त्वाभावं बोधयति। न च चान्द्र-सौराभ्यामिति। तथाच चान्द्रत्वेन सौरत्वेन च आषाढ़स्य द्वित्वादिति भावः। निषेध-यति तस्य प्रत्यब्दमेव भावादिति। तस्य द्विराषाढ़स्य प्रत्यब्दमेव भावात् अब्दम् अब्दं प्रति प्रत्यब्दम् इत्यव्ययं, तस्य भावः तस्मात्। तथाच चान्द्रसौराभ्यां द्विराषाढ़त्वस्वीकारे तस्य प्रतिवर्षसद्भावात् मिथुनस्थसूर्य्ये अमावास्याद्वयस्पर्शाभावेऽपि द्विराषाढ़त्वापत्त्या "मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत्। द्विराषाढ़स्तदा ज्ञेयः" इत्यादि विशेषवचनं व्यर्थं स्यादिति भावः।

"कृष्णपक्षे त्रयोदश्यां* कर्कटं याति भास्कर:।
द्विराषाढ़: स विज्ञेय: कुलीरे माधव: स्वपेत्॥"

कुलीर: कर्कट:। कृष्णत्रयोदश्यां दक्षिणायनसंक्रान्तौ नियत एवोत्तरत्रिकेऽधिमासपात:।

तथा ज्योति:शास्त्रम्।

"उत्तरमयनमायाते सवितरि पतनं यदाधिमासस्य।
भवति तदा द्विराषाढ़: शेते कर्किणि सुराराति:॥"

उत्तरमयनमायाते दक्षिणायने कर्कटादावित्यर्थ:। तदेवं सर्व्वत्राधिमासपाते द्विराषाढ़ इत्युक्तम्।

अतएव परिशिष्ट: सामान्येनैवाह।

---

* "मेषवृषसूर्य्येऽप्यधिमासे पतिते" इत्यादि स तु गौण इति। "माधवादिषु षट्-केषु मासि दर्शद्वयं यदा। द्विराषाढ़: स विज्ञेय:" इत्यादिवचनबोधित:। वैशाखादि-मासे दर्शद्वये द्विराषाढ़: स तु गौणो गौणीलक्षणायुत इत्यर्थ:। तस्य द्विवैशाखत्वेन मुख्यद्विराषाढ़त्वाभावात्। गुणमाह कर्कटे चान्द्राषाढ़लाभनिमित्ततागुणयोगादिति। चान्द्राषाढ़लाभो निमित्तो यस्य तस्य भाव: चान्द्राषाढ़निमित्तता तदेव गुणं तस्य योगात्। तथाच आषाढ़े मलमासे सति शुद्धचान्द्राषाढ़स्य कर्कटगतत्वेन मुख्यद्विराषाढ़ो भवति ततश्च आषाढ़ाव्यवहितोत्तरत्वविशिष्टकर्कटगतचान्द्राषाढ़त्वावच्छिन्नशक्तस्य द्विराषाढ़पदस्य वैशाखादेर्मलमासत्वेऽपि चान्द्राषाढ़स्य कर्कटगतत्वेन कर्कटगतचान्द्राषाढ़स्य कर्कटगतचान्द्राषाढ़त्वगुणयोगात् गौणद्विराषाढ़त्वमक्षुण्णमिति भाव:। द्विराषाढ़माह गौणद्विराषाढ़माह "कृष्णपक्षे त्रयोदश्या"मिति तु मलमासावश्यम्भावज्ञापनार्थम्। न तावन्मात्रनियम:। तेन कृष्णचतुर्द्दश्याम् अमावास्यान्यत्वप्रागपि संक्रान्तौ अपरामावास्यान्वयात् ऊर्द्धमपर-संक्रान्तौ मलमासो भवत्येव।

"यदाधिमासः पतति तदा पूर्व्वो मलिम्लुचः।
कार्य्यं नात्राभिषेकादि द्विराषाढ़ो भवेत्तदा॥
अमावास्याद्वयं यत्र रविसंक्रान्तिवर्ज्जितम्।
द्विराषाढ़ः स विज्ञेयः शेते च श्रावणेऽच्युतः॥"

एतदेव सङ्क्षिप्योक्तम्।

"माधवादिषु षट्केषु मासि दर्शद्वयं यदा।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥"

ननु पूर्व्ववचने अमावास्याद्वयस्य रविसंक्रान्तिवर्ज्जितत्वे नाधिमासपातो द्विराषाढ़निमित्तमवगम्यते। तच्च चतुर्द्दश्यां पूर्व्वसंक्रान्तौ प्रतिपदि च परसंक्रान्तौ* भवतीति कथं दर्शेऽपि पूर्व्वसंक्रान्तौ द्विराषाढ़वर्णनम् उच्यते "दिवसस्य हरत्यर्क" इति। तैः सम्भूयाभ्यां तृतीयाब्दमध्य एव नियताधिमासपातनिमित्ताभिधानात्। संक्रान्तिविरहितामावास्याद्वयस्य विंशत्यब्दैरपि दुर्लभत्वात्। एकराशिस्थसूर्य्यस्य दर्शद्वयातिक्रममात्रं तस्य लक्षणम्। तेन तन्नच्यते अतएव तस्यार्कौ दर्शकश्चैकराशौ दर्शद्वयातिग इत्युक्तम्।

---

* कुलीरे माधवः स्वपेदिति। आगामिवर्षे इति बोध्यम्। एतत् पूर्व्वः मिथुनार्के शुक्लद्वादश्यादौ हरिशयनस्य जातत्वात्। उत्तरत्रिके श्रावणादित्रिके। उत्तरमयनमायाते गते सति अतीते सति इत्यर्थमाह दक्षिणायने इति। द्विराषाढ़ः गौणद्विराषाढ़ः। शेते कर्किणीत्यपि आगामिवर्षे ज्ञेयं सर्व्वत्र अधिमासपाते द्विराषाढ़ इत्युक्तं गौणद्विराषाढ़ इत्युक्तमित्यर्थः। अतएव गौणद्विराषाढ़त्वादेव। सामान्येनैवाह मासविशेषमनभिधाय द्विराषाढ़मात्रमुक्तम्। चतुर्द्दश्यां पूर्व्वसंक्रान्तौ प्रतिपदि च परसंक्रान्ताविति तु अमावास्याद्वयं यत्र रविसंक्रान्तिवर्ज्जितमित्यादि समग्रामावास्यावर्ज्जनरूपयथाश्रुतार्थमादाय।

तल्लक्षणीयमाह ।

"सूर्य्येण लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः ।"

चान्द्रमात्रस्यापि सूर्य्यलङ्घितस्य प्रत्यब्दं भावात्तं विशिनष्टि ।

"अमावास्यापरिच्छिन्नं रविसंक्रान्तिवर्ज्जितम् ।
अधिमासं विजानीयाद्गर्हितं सर्व्वकर्म्मसु ॥"

प्रतिपदुपक्रान्तामावास्यान्त इत्यर्थः । तस्यैव मुनिभिर्नानाविधमुपलक्षणं दर्शितम् । अन्यथा "अमावास्याद्वयं स्पृशेत् ।" "अमावास्याद्वयं यत्र रविसंक्रान्तिवर्ज्जितम् ।" अमावास्यामतिक्रम्येत्यव्यवस्थितवादान्नार्थो व्यवतिष्ठते । तस्मात्तृतीयाब्दनियतपतनो यथोक्तोऽधिमासो मिथुने पतने मुख्यं द्विराषाढ़ं करोति अन्यत्र गौणम्* ।

इति द्विराषाढ़विवेकः ।

---

* कथं दर्शेऽपि पूर्व्वसंक्रान्तौ द्विराषाढ़त्वर्णनमिति पूर्व्वपक्षो दृढ़ीकृतः "सूर्य्येण लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुच" इत्यादिवक्ष्यमाणवचनात् । तदेवोपपादयति दिवसस्येत्यादि । तैः सम्भूय आभ्याम् । तृतीयाब्दमध्य एवेति । एकस्मात् मलमासात् तृतीयवर्षमध्ये एवेत्यर्थः । नियताधिमासपातनिमित्ताभिधानात् मलमासान्तरस्यावश्यम्भावात् । विंशत्यब्दैरपि दुर्लभत्वात् । तथाच । एकस्मात् मलमासात् तृतीयवर्षे मलमासान्तरपातस्य नियतत्वात् यत्र यत्र मलमासस्तत्र तत्रैव संक्रान्त्या अमावास्यासामान्यवर्ज्जितत्वं न सम्भवति इति भावः । दर्शद्वयातिक्रमणमात्रं दर्शद्वयान्त्यक्षणद्वयस्यातिक्रमणमात्रम् । तस्य मलमासस्य । चान्द्रमात्रस्यापि चान्द्रमात्रस्यैव न तु स्वाव्यवहितपूर्व्वामावास्यान्त्यक्षणसहितस्य । प्रत्यब्दं भावात् केवलचान्द्रमासोल्लङ्घनस्य तु प्रायेण प्रतिवर्षसम्भवादित्यर्थः । अतो वि-

सम्प्रति देवशयनादीनि चिन्त्यन्ते ।

उत्कर्षानुत्कर्षचिन्ता तु पश्चात् भविष्यति ।

तत्र भविष्यपुराणम् ।

"मैत्राद्यपादे स्वपितीह विष्णु-
वैष्णव्यमध्ये परिवर्त्तते च ।
पौष्णावसाने च सुरारिहन्ता
प्रबुध्यते मासचतुष्टयेन ॥
आभाकासितपक्षेषु मैत्रश्रवणरेवती ।
आदिमध्यावसानेषु प्रस्वापावर्त्तनोत्सवाः ॥"

अत्र यथासंख्यमन्वयः । तेन आषाढ़ीयानुराधाद्यपादे भाद्रीयश्रवणामध्ये कार्त्तिकीयरेवत्यन्ते भगवतो वासुदेवस्य यथाक्रमं शयनपार्श्वपरिवर्त्तनोत्थानानि भवन्ति । अयञ्च द्वादश्यां प्राप्तौ मुख्यः कल्पः ।

यथा पुराणम् ।

---

भिनष्टि विशेषयति । अमावास्यापरिच्छिन्नं स्वाव्यवहितपूर्व्वत्वस्वघटकत्वोभयसम्बन्धेन अमावास्याद्वयान्त्यक्षणद्वयविशिष्टं चान्द्रमासं सर्व्वकर्म्मसु गर्हितम् अधिमासं मलमासं जानीयात् इत्यन्वयः । प्रतिपदुपक्रान्तं शुक्लप्रतिपत्प्राक्क्षणमारभ्यापरामावास्यान्त्यक्षणपर्य्यन्तं रविवर्ज्जितश्चेत् मलमासः ज्ञेय इत्यर्थः । उपलक्षणं लक्षणम् । अव्यवस्थितवादात् अनियतलक्षणत्वेन निर्णयाभावात्, नार्थौ न यथार्थौ व्यवतिष्ठते व्यवस्थितौ भवति । अन्यत्र मिथुनभिन्ने ।

"आभाकाद्येषु मासेषु मथुरा माधवस्य च ।
द्वादश्यामेव कुर्व्वीत शयनावर्त्तनादिकम् ॥"

तथा ।

"निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
अन्यत्र पादयोगेऽपि द्वादश्यामेव कारयेत् ॥"

तथा विष्णुधर्म्मोत्तरे ।

"विष्णुर्दिवा न स्वपिति न च रात्रौ प्रबुध्यति ।
द्वादश्यामृक्षसंयोगे पादयोगो न कारणम् ॥"

तदेव स्पष्टयति ।

"अप्राप्ते द्वादशीऋक्षे उत्थानशयने हरेः ।
पादयोगेन* कर्त्तव्ये नाहोरात्रं विचिन्तयेत् ॥"

द्वादशीनक्षत्रयोगमात्रेण यथाक्रमेण निशासन्ध्यादिवसेषु शयनावर्त्तनोत्थानानि कर्त्तव्यानि । अस्य पुनरभावे तिथ्यन्तरेऽपि पाद-

---

* देवशयनादीनि हरिशयनादीनि चिन्त्यते निरूप्यते मयेति शेषः । उत्कर्षानुत्कर्षचिन्ता सौरचान्द्रविवेचनम् । तत्र शयनादिनिरूपणप्रसङ्गे । वैष्णवमध्ये श्रवणमध्यपादे परिवर्त्तते पार्श्वेन परिवर्त्तते । मासचतुष्टयेन इति विशेषणे तृतीया । आषाढ़शुक्लपक्षमारभ्य कार्त्तिकशुक्लपक्षपर्य्यन्तमासचतुष्टयविशिष्टः सन् इत्यर्थः । आभाकासितपक्षेषु आषाढ़भाद्रकार्त्तिकशुक्लपक्षेषु । मैत्रश्रवणरेवती आदिमध्यावसानेषु इति सम्बन्धाभाव आर्षः । उत्सव उत्थानम् । अन्यत्र पादयोगेऽपि स्वापादिविहितनिशादेरन्यत्र पादयोगेऽपि इत्यर्थः । द्वादश्यामेव कारयेत् तत्तन्नक्षत्रयुक्तद्वादश्यामेव कारयेदित्यर्थः । द्वादश्यामृक्षसंयोगे पादयोगो न कारणमिति द्वादश्यामृक्षयोगमात्रमेव शयनादौ हेतुः न पादविशेषयोगः । यदा द्वादश्यामृक्षयोगसत्त्वे अन्यतिथौ विहितनक्षत्रपादविशेषयोगः न शयनादिः कारणम् ऋक्षे मैत्रश्रवणरेवतीनक्षत्रे । पादयोगेन दशमीप्रतिपद्भिन्नतिथौ पादविशेषयोगेन ।

योगमात्रेण दिवाशयनं निशायामुत्थानं न तत्र निशाद्यादरः ।

अतएव मत्स्यपुराणे सामान्येनैवोक्तम् ।

"रेवतीऋक्षपर्य्यन्ते मेषादाववलोकिते ।
उत्तिष्ठन्तं हृषीकेशं योगनिद्रा विमुञ्चति ॥"

निशादिकं द्वादशीविशेषणम् ।

यथा ।

"निशि स्वापो दिवोत्थानं सन्ध्यायां परिवर्त्तनम् ।
पादयोगादन्यतिथौ द्वादश्यामृक्षसङ्गमात् ॥"

पूर्व्ववचनेन द्वादश्यां नक्षत्राप्राप्तावहोरात्रानादरस्य प्रदर्शितत्वात् । अर्थाद्द्वादश्यान्तस्यादरः कार्य्य इत्युक्तम् । तेनानन्तरितवचनेऽपि निशि स्वापादिकं द्वादश्यामृक्षसङ्गमादित्यनेन सम्बध्यते। पादयोगादन्यतिथाविति तु केवलमेव कारणम् ।

एवम् ।

"न दिवा स्वपिति गोविन्दो न रात्रौ प्रतिबुध्यते ।" इति । तदपि द्वादश्यामेव* । यत्तु निशि स्वाप इत्यस्य स्वल्पयोगो

---

* नाहोरात्रं विचिन्तयेदिति । निशि स्वापो दिवोत्थानमित्यादिविचारो नास्तीति भावः । यथाक्रमेणेत्यादि शयने निशा पार्श्वपरिवर्त्तने सन्ध्या उत्थाने दिवस आदरणीय इत्यर्थः । अस्य द्वादश्यामृक्षयोगस्य । तिथ्यन्तरे दशमीप्रतिपद्भिन्नैकादश्यादिपञ्चतिथिषु । पूर्व्ववचनेन अप्राप्ते द्वादशीऋक्षे इत्यादिवचनेन । सम्बध्यते गृह्यते । केवलमेव द्वादश्यामृक्षाभावे पादविशेषयोगमात्रमेव कारणं शयनादेरिति शेषः । द्वादश्यामेव नक्षत्रमात्रयोग एवेत्यर्थः । द्वादश्यामृक्षाभावे त्रयोदश्यादौ पादविशेषयोगात् परिवर्त्तनमात्रं कर्त्तव्यम् न तु शयनबोधने इति ।

व्याख्यानं सन्ध्यायां परिवर्त्तनं पादयोगादन्यतिथौ त्रयोदश्यादौ कर्त्तव्यम्। न पुनः शयनप्रबोधावपि तिथ्यन्तरे। किन्तर्हि निशि स्वापो दिवोत्थानञ्च द्वादश्यामृक्षयोगमात्रेणेति तदसङ्गतम्।

"अप्राप्ते द्वादशीऋक्षे उत्थानशयने हरेः।
पादयोगेन कर्त्तव्ये नाहोरात्रं विचिन्तयेत्॥"

अनेन वृहद्योगग्रन्थलिखितेनैव द्वादशीनक्षत्रयोगाभावे पादयोगेन तिथ्यन्तरेऽपि शयनोत्थानविधानदर्शनात् एतद्वचनविरोधादेव पादयोगादन्यतिथावित्यत्रापि निशादेर्विशेषणत्वं निराकृतम्। "नाहोरात्रं विचिन्तये"दित्यस्य निर्विषयत्वापत्तेः। यतएव तिथ्यन्तरे दिवापि शयनं रात्रावप्युत्थानम्, अतएव तन्निमित्ता दोषश्रुतिः।

"रात्रौ प्रबोधो विनिहन्ति पौरान्
स्वापो दिवा राष्ट्रकुलं नृभर्त्तुः।
सन्ध्याद्वये स्वल्पफला धरित्री
भवेन्नराणामपि रोगमुग्रम्॥"

द्वादश्यां निशादिनियमात्तिथ्यन्तर एवैतद्वर्णनीयम्*।

---

* वादिमतमाह यत्तु इत्यादि। किन्तर्हि निशि स्वापो दिवोत्थानञ्च द्वादश्यामृक्षयोगमात्रेणेति द्वादश्यामृक्षसंयोगमात्रेण न तु परिवर्त्तनम् इति तस्य मतं दूषयति तदसङ्गतम् इत्यादि। निशादेर्विशेषणत्वं निराकृतमिति द्वादश्यामृक्षाभावे नक्षत्रविशेषस्य पादविशेषयोगेन अन्यतिथौ शयनादेर्विधेयत्वे निशादेरन्यतिथिविशेषणत्वं नास्ति तथाच मैत्रायपादयोगेन त्रयोदश्यादौ हरिशयने। यत्र दिवा पादयोगस्तत्रैव शयनं रात्रौ हरिशयनं न कर्त्तव्यम् इति भावः। द्वादश्यां निशादिनियमात् तिथ्यन्तर एवैतद्वर्णनीय-

तथा ।

"किन्त्वमैत्राद्यपादेन दशम्यंशेन यो दिवा ।
पौष्णशेषेन किन्तेन प्रतिपद्यथ यो निशि ॥"

इदं विष्णुधर्म्मोत्तरे । दशम्यां दिवा मैत्राद्यपादेन किं प्रयोजनम् । प्रतिपदि वा पौष्णशेषेण द्वादश्यां वा निशागतेन कर्म्मानङ्गत्वादित्यर्थः । दशमीप्रतिपदोर्निषेधात् एकादश्यादिपौर्णमासीपर्य्यन्तानान्तिथीनामभ्यनुज्ञानं न चैवं चतुर्द्दशीपौर्णमास्योरन्यतरत्र रेवतीयोगे सत्याश्विनत्वादाभाका इत्यस्य बाधः स्यादिति वाच्यम् । यौगिकानामाषाढ़भाद्रकार्त्तिकानामपरिग्रहात्* । रूढ़िर्योगमपहरतीति रूढ़िपुरस्कारात् यौगिकत्वस्य च प्रतिबन्धेन निराकृतत्वात् । ननु तर्हि यदा रेवत्यन्तः तिथ्यन्तरे नास्ति किन्तु पूर्व्वपादत्रयम् अन्त्यपादस्तु द्वादश्यामेव रात्रौ तत् कथमुत्थानं देवस्य तावद्द्वादश्यां तत्र दिवानियमात् नापि तिथ्यन्तरे तत्राप्यन्त्यपादनियमात् उभयत्र चोभयाभावात् ।

---

मिति पाठो दृश्यते स तु लिपिकरप्रमाद एव परन्तु तिथ्यन्तरे नैव वर्णनीयमित्येव पाठः साधुः । एतत् रात्रौ प्रबोधो विनिहन्ति पौरान् इत्यादिदोषश्रवणं तिथ्यन्तरे नैव वर्णनीयमित्यर्थः । अन्यथा द्वादश्यां निशादिनियमादित्यसंलग्नापत्तेः ।

* दशम्यां दिवा मैत्राद्यपादेनेति । यो मैत्राद्यपादः दशम्यां प्राप्तः तेन किं दिवा वा प्राप्तस्तेन वा किम् इत्यर्थः । यौगिकानाम् आषाढ़युक्ता या पौर्णमासी आषाढ़ी सा अस्मिन् इत्यादि व्युत्पत्त्या सिद्धानामित्यर्थः । अपरिग्रहादिति । तथाच अन्त्योपान्त्यौ त्रिभौ ज्ञेयौ इत्यादिवचनात् रेवतीनक्षत्रयुक्तपौर्णमासीयोगेन आश्विनत्वेऽपि तुलास्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तमासस्य रूढ्या चान्द्रकार्त्तिकतया बाधाप्रसक्तेरिति भावः ।

उच्यते अस्यामेवाप्रतिपत्तौ वचनम्* ।

"रेवत्यन्तो यदा रात्रौ द्वादश्या च समायुतः ।
तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीम् ॥"

एवंविधस्य कालो रेवतीपादत्रयस्यैकादशीव्याप्तत्वे भवति तदा चैकादशीरेवतीयोगस्य दिवावश्यम्भावात् तदनादरेण दिनान्तं विदधद्वचनमेकादश्यामपि त्रयोदश्यादिष्विव पादयोगादरं ज्ञापयति† । न तु द्वादश्यामिवैकादश्यामपि पादयोगस्यानादरः । अन्यथा दिवा रेवत्येकादशीयोगस्योत्थानकालतया प्राप्तस्य बाधो-

* ननु रूढ़िलेऽपि योगबलेन चाश्विनप्रतीतिर्भवतु इत्यत आह रूढ़िर्योगमपहरतीति । तथाच भट्टवार्त्तिकम् । लब्धात्मिका सती रूढ़िर्भवेद्योगापहारिणीति । इति हेतौ रूढ़ि-पुरस्कारात् मासपदस्य रूढ्यर्थस्वीकारात् । यौगिकत्वस्य च मासपदस्य यौगिकार्थस्वीका-रस्य च प्रतिबन्धेन व्यभिचारेण निराकृतत्वादित्यस्य यौगिकत्वस्य च इत्यनेन सम्बन्धः । निराकृतत्वात् खण्डितत्वात् । किन्तु पूर्व्वपादत्रयं तिथ्यन्तरे एकादश्यामेवेति शेषः । तत्र द्वादश्यां दिवानियमादिति निशि स्वापो दिवोत्थानमिति वचनेन रात्रौ प्रबोधो विनिहन्ति इति वचनेन चेति शेषः । तत्राप्यन्त्यपादनियमात् द्वादश्यामपि अन्त्यपादनियमात् । उभयत्र उभयाभावात् तिथ्यन्तरे पादयोगस्य द्वादश्यां दिवा नक्षत्रयोगस्य च अभावा-दित्यर्थः । वचनमिति उच्यते इत्यनेन सम्बन्धः ।

† तदेव वचनं दर्शयति रेवत्यन्त इत्यादि । एवंविधस्य कालः रात्रौ द्वादश्यां रेव-त्यन्तः रेवत्यन्तपादसमायुतौ भवति, एकादशीरेवतीयोगस्य एकादश्यां रेवतीप्रथमपाद-त्रययोगस्य । तदनादरेण दिवोत्थानमिति वचनात् एकादश्यां दिवा रेवतीप्रथमपादत्रय-योगानादरेण इत्यर्थः । दिनान्तं विदधद्वचनं दिनान्तं प्राप्य रेवतीमिति विशेषवचनं दिनान्त-बोधनं विदधद्वचनं विशेषवचनं पादयोगादरं ज्ञापयतीति । तथाच त्रयोदश्यादौ मैत्रादिनक्षत्रपादविशेषयोगेन यथा श्रय"ादिकं तथा एकादश्यामपि पादविशेषयोगेनैव न तु नक्षत्रमात्रयोगेनेति भावः ।

ऽनपेक्षितविधिश्च स्यात्। अतएव पादयोगादन्यतिथौ "द्वादश्यामृक्षयोगत" इति द्वादशीतोऽन्या एकादश्यप्यभिहिता। तथा "द्वादशीऋक्षसंयोगे पादयोगो न कारणम्" इति वदन् द्वादशीव्यतिरिक्तैकादश्यादौ पादयोगकारणमाह "अप्राप्ते द्वादशीमृक्ष" इति। एतदपि द्वादश्यामेव ऋक्षयोगाभावे तिथ्यन्तरे एकादश्यादौ पादादरं दर्शयति।

तथा।

"शयने परिवर्त्ते च समुत्थाने तथा हरेः।
द्वादशीऋक्षसंयोगे पादयोगो न कारणम्॥"

इत्येतदपि द्वादश्यामेव पादयोगानादरं वदति। अन्यथा सर्व्ववचनेषु द्वादशीपदमुपलक्षणं स्यात्*। पादयोगादन्यतिथावित्यत्रापि उपात्तद्वादशीमात्रापेक्षयान्यत्वावगतिः। सामान्येनैकादश्यामपि भवन्तीति कथं पर्य्युदसनीयेत्यादिदूषणमापद्येत।

यत्तु।

---

* न तु द्वादश्यामिवेत्यादि। यथा शयनादौ द्वादश्यां नक्षत्रमात्रयोग आदरणीयः तथा एकादश्यां न त्वित्यर्थः। तथाच शयनादौ एकादश्यां नक्षत्रपादविशेषयोग एव आदरणीय इति भावः। अन्यथा द्वादश्यामिव एकादश्यामपि पादविशेषयोगमनादृत्य नक्षत्रमात्रयोगस्यादरणीयत्वे प्राप्तस्य स्वीकृतस्य। अनपेक्षितविधिश्चेति एतद्बाधविशेषणम् अनपेक्षितो विधिर्यत्र सः। द्वादश्यामेव एवकारात् न तु एकादश्यादौ। सर्व्ववचनेषु द्वादश्यामृक्षसंयोगे इति द्वादश्यामृक्षसङ्गमादिति द्वादशीऋक्षसंयोगे इत्यादिवचनेषु द्वादशीपदमुपलक्षणं स्यादिति एकादश्युपलक्षणापत्तिः स्यात् स्वप्रतिपादकत्वे सति स्वेतरप्रतिपादकत्वमुपलक्षणत्वम् इति तल्लक्षणात्।

"एकादश्यां द्वादश्याञ्च नित्यं सन्निहितो हरिः ।
तत्र नक्षत्रयोगेन पादयोगो न कारणम् ॥"

तत्र पूर्व्वोक्तन्यायेन* रेवतीवचनविरोधादेकान्तप्रत्यासत्तेश्च । तत्रेति द्वादशीमात्रपरामर्शः† । यदपि नारदपुराणे वचनम् ।

"यदा चैकादशीं प्राप्य आदिपादो भवेन्निशि ।
तिथौ तस्यां भवेद्रात्रौ शयनन्तु हरेस्तदा ॥
ऋक्षादिपादयोगे च रजन्यान्तु तिथिद्वये ।
त्रयोदश्यां चतुर्दश्यामृक्षादेव तथा हरेः ।
निशि स्वापो भवेत्तस्य पादयोगस्य कारणात् ॥"

---

* अन्यत्वावगतिरिति । पादयोगादन्यतिथावित्यत्र द्वादशीभिन्नत्वावगतिः । सामान्येन साधारण्येन एकादश्यां भवन्तीति इति, भवन्तीति लिपिकरप्रमादः, भवत्येव पाठः साधुः । अतः अन्यत्वावगतिरित्यनेनास्य सम्बन्धः सङ्गच्छते, पर्य्युदसनीयेत्यादिदूषणं अन्यत्वावगतिरूपपर्य्युदसनीयपदार्थप्रदर्शनरूपदूषणम् । पूर्व्वोक्तन्यायेन पूर्व्वोक्तसिद्धान्तेन, सिद्धान्तश्च—"द्वादश्यामृक्षसंयोगे पादयोगो न कारणम्" । इति वचनात् पादयोगादन्यतिथावित्यादिवचनाच्च द्वादशीमात्रे नक्षत्रयोगे न पादयोगस्य कारणता । द्वादशीमात्रे नक्षत्रयोगाभावे च नक्षत्रविशेषस्य पादविशेषयोगात् शयनादिकञ्च ।

† रेवतीवचनविरोधादिति । एकादशीद्वादश्योरन्यतरस्मिन् नक्षत्रमात्रयोगे शयनादेर्विधेयतास्वीकारे तु "रेवत्यन्तो यदा रात्रौ द्वादश्या च समन्वितः । तदा विबुध्यते विष्णुर्दिनान्ते प्राप्य रेवतीमिति" वचनस्य-"रेवत्यन्तो यदा रात्रा"वित्यनेन रात्रौ रेवत्यन्तविधानादेव विहितकाले एकादश्यां नक्षत्रयोगस्य सुतरां सिद्धत्वात् दिनान्ते एकादश्यामुत्थानस्य प्राप्तेः विशेषवचनवैयर्थ्यरूपविरोधादित्यर्थः । एकान्तप्रत्यासत्तेश्चेति । द्वादश्यामित्यस्य पश्चान्निर्द्दिष्टत्वेन एकादश्यपेक्षया प्रत्यासत्त्यतिरेकादित्यर्थः । तत्रेति द्वादशीमात्रपरामर्शं इत्यस्य हेतुद्वयमिदम् । अत्र मात्रपदेन एकादशीव्यवच्छेदः । तथा च—रात्रौ द्वादश्यां रेवत्यन्तपादयोगे दिनान्ते दिनशेषभागे रेवतीयुक्तद्वादश्यामुत्थानमात्रस्य

तत्तिथित्रयेऽपि पादयोगस्य कारणतामाह। अतो द्वादश्यामिव पादयोगस्यानादरो न त्वेकादश्यामपि। एवं शयनेऽपि यदा दिवा द्वादश्यां मैत्राद्यपादः त्रयोदश्याञ्च तदितरपादत्रयं तत्रापि सायंसन्ध्यायां विधानमुक्तम्। तथाप्युभयोरेकाङ्गविकलत्वादेव* शयनेऽपेक्षासद्भावात् सामान्येन वचनस्य तात्पर्य्यम्। यद्विहित-कालद्वयाभावे विहितनक्षत्रमात्रमादृत्य सायंसन्ध्यायां देवशय-नादिकमाचरणीयमिति। यदा पूर्व्वोक्तकालद्वयन्नास्ति सन्ध्या-याञ्च नक्षत्रस्याप्यलाभस्तदाषाढ़भाद्रकार्त्तिकमासीयशुक्लद्वादशी-मात्रादरेण देवशयनादिकं करणीयम्(१)।

तदुक्तं वराहपुराणे।

"द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे।
आभाकासितपक्षेषु शयनावर्त्तनादिकम्॥"

आदिपदमुत्थानपादग्रहणार्थञ्च(२)। तेन पूर्व्वोक्तकालत्रयाभावे

---

(१) तथा पूर्व्वोक्तकालत्रयाभावे कल्पान्तरमाषाढ़भाद्रकार्त्तिकमासीयशुक्लद्वादशी-मात्रादरेण देवशयनादि करणीयमिति क्वचिदादर्शे लिखितमस्ति।

(२) सन्धिसमय इति उभयत्रापि सम्बुध्यते। उक्तसन्धिसमये नक्षत्रसंयोगे द्वादशी-मात्रे इति क्वचिदादर्शे लिखितमस्ति।

---

वाचनिकत्वात् सामान्यमुखप्रवृत्तस्य तत्र "नक्षत्रयोगेन पादयोगो न कारण"मित्यस्य उत्थानमात्रपरत्वेन सङ्कोचस्यान्याय्यत्वमिति भावः।

* पादयोगस्य कारणतामाह इति। अनेन निशि एकादशी-त्रयोदशी-चतुर्दशी-रूपतिथित्रयेऽपि पादयोगे प्राशस्त्यमात्रमिति ग्रन्थकर्त्तुराशयः। उभयोरेकाङ्गविकलत्वा-देवेति। तथाच दिवा द्वादश्यां मैत्राद्यपादयोगे निशि स्वाप इत्यादिवचनबोधितनिशा-

द्वादश्यां सन्ध्यायां नक्षत्रासम्भवे द्वादशीमात्रे सायंसन्ध्यायां शयनादिकं कुर्य्यादिति वैकल्पिकमिदं* माथुरमिति जल्पन्ति। तथेदमपि वचनमस्मिन्नेव विषये योजनीयम्।

"पौष्णशेषो यदा नाह्नि मैत्राद्यमपि नो निशि।
द्वादश्यामेव तत्कुर्य्यादुत्थानं शयनं हरेः॥"

द्वादशीयुक्तो रेवतीशेषो निशि। दिवा अपरदिने च द्वादशी। अनुराधाद्यपादोऽपि द्वादशीयुक्तो दिवा रात्रौ द्वादशी तदा द्वादशीमात्र एव नक्षत्रमन्तरेण शयनोत्थाने भवतः। तथेदमपि वचनमत्रैव बोद्धव्यम्†।

---

रूपैकाङ्गस्य विकलत्वम्। रात्रौ त्रयोदश्याम् इतरपादत्रययोगेऽपि मैत्राद्यपादे स्वपितीत्यादिवचनबोधिताद्यपादयोगस्यैकाङ्गस्य विकलत्वमिति भावः।

* यद्विहितकालद्वयाभावे इति। निशादिविहितकाले द्वादशीमैत्रादिनक्षत्रयोगद्वादशीतरैकादश्यादिविहितनक्षत्रपादयोगरूपविहितकालद्वयाभावे इत्यर्थः। आचरणीयमिति तथाच द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे इति वचने नक्षत्राणामसम्भवे सन्धिसमये द्वादश्यां शयनादिविधानात् नक्षत्रसम्भवे विहितनक्षत्र एव सन्धिसमये शयनादिकमर्थात् सिध्यति इत्यभिप्रेत्य विहितनक्षत्रमात्रमाहृत्य सायंसन्ध्यायां देवशयनादिकमाचरणीयमित्युक्तमिति भावः। आदिपदं शयनावर्त्तनादिकम् इत्यादिपदं पूर्व्वोक्तकालत्रयाभावे इति। निशादौ द्वादश्या नक्षत्रमात्रयोग एकः। निशाद्यनादरेण एकादश्यादि-पञ्चसु तिथिषु नक्षत्रविशेषपादविशेषयोगः द्वितीयः। सायंसन्ध्यायां द्वादश्यां विहितनक्षत्रयोगः तृतीयः एतद्रूपपूर्व्वोक्तकालत्रयाभावे इत्यर्थः। तदभावे सायंसन्ध्यायां द्वादशीमात्रयोगः इति कल्पचतुष्टयमिति व्यवस्थानिष्कर्षः। इत्येवंविधवैकल्पिकमिदमित्यर्थः।

† माथुरमिति मथुरामाधवसम्बन्धीत्यर्थः। इदमपि वचनं पौष्णशेष इति वक्ष्यमाणवचनम् अस्मिन् विषये द्वादशीमात्रे सायंसन्ध्याविषये। रेवत्यन्तपादो नाह्नीति न दिवा

"आभाकासितपक्षेषु विष्णोरमिततेजसः ।
स्वापावृत्तिप्रबोधाश्च द्वादश्यां क्रमशो मताः ॥"

देवशयनादिकर्त्तव्यता च तन्निमित्तपूजादिकर्म्माचरणम् । तदेव शयनादौ कालचतुष्टयम् । द्वादश्यां निशादौ नक्षत्रयोगः । तदभावे निशाद्यनादरेण तिथ्यन्तरे पादयोगः । तस्याप्यभावे सन्ध्यायां नक्षत्रमात्रेण । तस्याप्यभावे द्वादश्यामेव(१) विधान-सम्भवात्* । होलाकाधिकरणे देशभेदेन कर्म्मव्यवस्थानिराकर-

(१) तस्याप्यभावे द्वादश्यामेव सन्ध्यायामिति अपराण्यपि केवलद्वादशीवचनानि अस्मिन्नेव विषये वर्णनीयानि । ननु माथुरकल्पोऽयं द्वादशीमात्रे पृथगेव नैवं पूर्व्वोक्तकाला-भावे विधानात् इति पाठः क्वचिदादर्शपुस्तके दृश्यते ।

इत्यर्थः । नो निषेधे तथाच मैत्राद्यपादमपि निशि नास्तीत्यर्थः । रेवतीशेषः रेवत्यन्तपादः निशि इत्यन्वयः । परदिने द्वादशी केवलद्वादशी । अनुराधाद्यपादो द्वादशीयुक्तो दिवा इत्यादि । ननु दिवानुराधाद्यपादसम्बन्धे रात्रावपि अनुराधेतरपादयुक्ता द्वादशी सम्भवत्येव कथं रात्रौ केवलद्वादशी इत्युक्तं सङ्गच्छते इति चेदत्रायमाशयः अत्र दिवापदेन भाक्तदिवा अरुणोदय उच्यते । रात्राविति रात्रिपदेनापि त्रियामा उच्यते । तथाच यत्र पूर्व्वारुणो-दयस्य दण्डद्वयसत्त्वे अनुराधाद्यपादसमापनं परदिने च वाणवृद्धी रसक्षय इति नियमात् षड्दण्डह्रासः सौराषाढ़स्य चरमदिनमानं चत्वारिंशत्पलाधिकत्रयस्त्रिंशद्दण्डाः सायंरूप-भाक्तदिवा च किञ्चिदधिकदण्डत्रयम् । ततश्च त्रियामात्मिकायां रात्रौ अनुराधानक्षत्रस्य मुहूर्त्तलाभाभावात् सा द्वादशी केवलैव न कर्म्मयोग्यनक्षत्रयुक्ता न काप्यनुपपत्तिः । इद-मपि वचनम् अनन्तरोक्तम् आभाकासितपक्षेषु इति वचनम् ।

* कालचतुष्टयं दर्शयति द्वादश्यान्निशादावित्यादि । शयनादौ कालचतुष्टयमुक्तम् । एतेन रात्रौ द्वादश्यां रेवत्यन्तपादयोगे दिनशेषभागे एकादश्यां रेवतीनक्षत्रयोगे उत्थानस्य

णात् न च पूर्व्वोक्तकालानाञ्चतुर्णामप्यसम्भवः सम्भवति आषाढ़-भाद्रकार्त्तिकानाञ्च चान्द्राणां पञ्चचतुष्टयेऽप्यपरित्यागात्* ।

---

स्वतन्त्रकालत्वेऽपि न चतुष्टयत्वव्याघातः तस्योत्थानमात्रविषयत्वात् । केवलद्वादशीवचनानि विहितनक्षत्रयोगाभावे द्वादश्यां शयनबोधनबोधकवचनानि ।

"पौष्णर्शेषो यदा नास्ति मैत्राद्यमपि नो निशि ।
द्वादश्यामेव तत्कुर्य्यादुत्थानं शयनं हरेः ॥"

इत्यादीनि अस्मिन् विषये सायंसन्ध्याविषये । ननु माथुरकल्पोऽयम् । द्वादशीमात्रे पृथगेव इति ।

तथाच । आभाकाद्येषु मासेषु मथुरामाधवस्य च ।
द्वादश्यामेव कुर्व्वीत शयनावर्त्तनादिकम् ॥

इति पृथग्वचनसामर्थ्यात् केवलद्वादश्यामेव मथुरामाधवस्य शयनबोधनादिः पृथग्-विधिः नैवम् । पूर्व्वोक्तकालाभावे इति पूर्व्वोक्तकालाभावे द्वादश्यामृक्षसंयोगाद्यभावे एवं सायंसन्ध्यायां विहितनक्षत्रयोगतदभावाभ्यां व्यवस्थितवैकल्पिकेनेत्यर्थः । विधानात् द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे इत्यनेन वैकल्पिकविधानात् ।

* होलाकाधिकरणे चेत्यादि । होलाका वसन्तोत्सवः तदधिकृत्य यत्र विचार्य्यते तद्धोलाकाधिकरणं तत्र च देशभेदेन व्यक्तिभेदेन कर्म्मव्यवस्थानिराकरणात् तथाच सामान्यविधिनैवोपपत्तौ विशेषविधिर्नाङ्गीक्रियते गौरवात् अतएव तस्मात् यस्मादाचारात् स्मृतिवाक्याद्वा या श्रुतिरवश्यं कल्पनीया तयैव तद्गतस्याचारांशस्य स्मृतिपदस्य च उपपत्तेर्न तत्राधिककल्पनेति होलाकाधिकरणार्थ इति दायभागः । तदधिकरणन्तु जैमिनिन्याय-मालायां माधवाचार्य्य आह स्म । अष्टमाधिकरणमारचयति ।

"होलाकादेर्व्यवस्था स्यात् साधारण्यमुतायिमः ।
देशभेदेन दृष्टत्वात् साम्यं मूलसमत्वतः ॥"

होलाकादिशिष्टाचाराणां हारीतादिस्मृतिविशेषाणां चानुष्ठातृपुरुषभेदेन व्यवस्थितं प्रामाण्यम् कुतः देशविशेषे तेषां दृष्टत्वात् । होलाकादयः प्राच्यैरेव क्रियन्ते । वसन्तोत्सवः होलाका । आह्नीनैबुकादयो दाक्षिणात्यैः । स्वस्वकुलागतं करञ्जाकादिस्थावरदेवता-

यत्तु वचनम्।

रेवत्यादिरथान्तो वा द्वादश्याञ्च विना भवेत्।
उभयोरप्यभावे तु सन्ध्यायान्तु महोत्सवः॥

नक्षत्रयुक्ता द्वादशी दिवा न प्राप्ता न वान्याप्युक्ता रात्रौ द्वादशी न च रेवत्यन्तस्तेनोभयोरभावः। यदि हि द्वादशीं विना(१) रेवत्यन्तस्तदावश्यन्तिथ्यन्तरे तत्प्राप्तिः। तत्र दिनस्यानादरात् विहितकाललाभात् उत्थानं भवत्येवेति रात्रावेव क्रियाप्राप्तौ सन्ध्या कर्म्मानुष्ठानाय विधीयत इति न तस्यापि विरोधः। तथा पौर्णमास्यामपि शयनोत्थाने।

(१) दिवा यदा हि द्वादशीं विनेति क्वचिदादर्शपुस्तके पाठः।

---

पूजादिकमाङ्गीनैवुकशब्देनोच्यते। उद्वृषभयज्ञादय उदीच्यैः। ज्यैष्ठमासस्य पौर्णमास्यां बलीवर्द्दानभ्यर्च्य धावयन्ति। सोऽयमुद्वृषभयज्ञः। एवं हारीतादिस्मृतिः काचित् क्वचिद्देशविशेषे दृश्यते। तस्मादव्यवस्थितं प्रामाण्यमिति चेत् नैवम्। तन्मूलत्वेनानुमितस्य वेदस्य सर्व्वसाधारणत्वेन तेषामपि सर्व्वसाधारणत्वात्। अत्रैव गुरुमतमाह।

प्राच्यादिपदयुक्तायाः श्रुतेरनुमितौ पदे।
अर्थाबोधादमात्वं चेन्न सामान्यानुमानतः॥

पूर्व्वोक्तकालानां चतुर्णामपीति। द्वादश्यां निशादौ नक्षत्रमात्रयोगः तदसम्भवे निशाद्यनादरेण नक्षत्रपादविशेषयोगः तदसम्भवे सायंसन्ध्यायां नक्षत्रमात्रयोगः तदसम्भवे सायंसन्ध्यायां द्वादशीमात्रयोगः। सम्भवं दर्शयति आषाढ़भाद्रेत्यादि सौरपरत्वे सर्व्वदा योगाप्रसक्तेराह चान्द्राणामिति। पक्षचतुष्टये द्वादश्यां निशादौ नक्षत्रयोगादिरूपकल्पचतुष्टयेऽपीत्यर्थः। नक्षत्रयुक्ता रेवतीनक्षत्रयुक्ता दिवा न प्राप्ता इति उत्थानविषयमिति दिवोत्थानमिति स्मरणात्।

यथा विष्णुधर्म्मोत्तरे मार्कण्डेयः ।

आषाढ़शुक्लपक्षान्ते भगवान्मधुसूदनः ।
भोगिभोगासनो मायां योगनिद्रान्तमानयन्(१) ।
शेतेऽसौ चतुरो मासान् यावत् भवति कार्त्तिकी ॥

आषाढ़श्चान्द्रस्तस्य शुक्लपक्षान्तः पौर्णमासी ।

तथा यमः ।

क्षीराब्धौ शेषपर्य्यङ्के आषाढ्यां संविशेद्धरिः ।
निद्रां त्यजति कार्त्तिक्यां तयोस्तं पूजयेत् सदा ॥

अयञ्च कल्पोऽन्य एव वैकल्पिकः* न तु पक्षान्तशब्दः सामीप्यात् द्वादश्यादिलक्षणार्थः लक्षणाकारणाभावात् । पौर्णशेषेण किन्तेन प्रतिपद्यथ यो निशेत्यनेन पौर्णमास्यामभ्यनुज्ञानादागमाविरोधात् पक्षान्तशब्द एव वा पक्षस्य त्रिभागेनैकादश्यादितिथिपञ्चकं पौर्णमासीपर्य्यन्तमन्तभागमाह तेन पञ्चतिथीनामन्य-

(१) भोगिभोगासनासीनो मायां निद्रान्तमानयन् इति क्वचिदादर्शे पाठः ।

* रेवत्यादिरथान्तो वा इति । रेवत्यादिरित्यस्य भावार्थं व्याचष्टे नक्षत्रयुक्ता द्वादशी दिवा न प्राप्ता इति न वाप्यन्याप्युक्ता रात्राविति च । अथान्तो वा इत्यस्य विवृतिमाह न च रैवत्यन्त इत्यादि । तेनोभयाभाव इति दिवा रैवतीयुक्ता द्वादशी नास्ति एवं तदन्तपादयुक्त तिथ्यन्तरमपि नास्तीत्युभयोरभाव इत्यर्थः । आषाढ्याम् आषाढ़पौर्णमास्यां संविशेत् शयीत । तयोः आषाढ़ीकार्त्तिक्योः । तं हरिम् । अयञ्च कल्पः आषाढ़पौर्णमास्यादौ शयनादिकल्पः अन्यः द्वादश्यादिशयनादिकल्पभिन्नः । वैकल्पिकः नक्षत्रादश्यादिपादयोगेन सह व्यवस्थितविकल्पः । तथाच त्रयोदश्यादौ नक्षत्रपादयोगाभावे पौर्णमास्यामपि पादयोगेन यथासम्भवशयनादिर्भवितुमर्हतीति भावः ।

तमायां स्वपिति आषाढ़ीकार्त्तिकीपदमध्येतासामन्यतममाह । एतेन किन्त्वमैत्राद्यपादेनेत्यनेन पञ्चतिथीनामभ्यनुज्ञानं सुव्यक्तम् ।

सम्प्रति मिथुनस्थे अधिमासे मुख्यद्विराषाढ़े चिन्त्यते । तत्र कर्कटे देवशयनम् ।

यथाह ।

सम्पूर्णे मिथुनेऽधिको यदि भवेन्मासस्तदा कर्कटे
शेते बुध्यति वृश्चिके स भगवान्मासैश्चतुर्भिर्हरिः ।
कन्यायान्तु शचीपतिः सुरगणैर्वन्द्यस्तदोत्तिष्ठते
दुर्गा चैव तुलाधरे समधिके शेषास्तथान्ये सुराः ॥

तुलाधरे समधिके वृश्चिकेऽन्येऽपि धनदादयो देवा उत्तिष्ठन्तीत्यर्थः । तथा मिथुनस्थो यदा भानुः तथा अमावास्यामतिक्रम्येत्यादिवचनैर्मुख्यो द्विराषाढ़ उक्तः । तन्निमित्तं तु देवशयनं कर्कटे । कन्यायां शक्रोत्सवपार्श्वपरिवर्त्तौ तुलायां दुर्गोत्सवः ।

तथा गृह्यपरिशिष्टम् ।

द्विराषाढ़े समुत्पन्ने(१) कर्कटे शयिते हरौ ।
आखण्डलस्तु कन्यायां तुलायां पार्व्वती तथा ।
अनन्तो वृश्चिके चैव कुम्भे चैव हुताशनः* ॥

(१) अधिमासे समुत्पन्ने इति क्वचिदादर्शे पाठः ।

* मिथुनादौ मलमासे हरिशयनं निरूप्य मिथुनमात्रे मलमासे मुख्यद्विराषाढ़े हरिशयनादिकं निरूपयितुं प्रतिजानीते सम्प्रतीति । अधिको मासः अधिमासो मलमासः इत्यर्थः । कर्कटे सौरश्रावणे वृश्चिके सौरमार्गे । मासैश्चतुर्भिरिति आषाढ़शुक्लपक्षमारभ्य कार्त्तिकपर्य्यन्तम् अष्टसंख्यकपक्षेण इत्यर्थः । कन्यायां सौराश्विने शचीपतिः शक्रोत्थानम् ।

समुत्पन्ने सम्यगुत्पन्ने मुख्ये द्विराषाढ़ इत्यर्थः। तदा हरिशयनार्थं शक्रदुर्गोत्सवहरिहुताशनानां चोत्थानं चान्द्राणामाषाढ़भाद्राश्विन-कार्त्तिकमाघानां कर्कटकन्यातुलावृश्चिककुम्भेष्वेव प्रतिलम्भात्। यद्यपि च

वङ्कुरोत्सवः सिते पक्षे माघे मासार्द्धभे दिवा।
द्वादश्यामथवा पौर्णमास्यां स्यात्सुमहोत्सवः॥

इति सौरवचनमाघश्रुतिरुत्थानेऽस्ति तथापि माघपदोल्लेखविहि-तान् वरचतुर्थीश्रीपञ्चमीप्रभृतीन् चैत्रविहिताशोकाष्टमीमदन-त्रयोदशीचैत्रावलीमदनभञ्जिकाचतुर्द्दशीप्रभृतीन् परभूतांश्च परि-हाय मध्यवर्त्तिनो हुताशनोत्थानमात्रस्य* कुम्भे चैव हुताशन इत्युत्कर्षं ब्रुवाणो यत्रोत्कर्षः श्रूयते तत्रैव अनेकश्रुतिकल्पनापरि-

---

दुर्गा चैवेति दुर्गोत्सवः तुलाधरे सौरकार्त्तिके। आखण्डल इन्द्रः। अनन्तो विष्णुः। कुम्भे सौरफाल्गुने। हुताशनः वङ्कुरोत्सवः।

* चान्द्राणामित्यादि। तथाच चान्द्राषाढ़स्य कर्कटे चान्द्रभाद्रस्य कन्यायां चान्द्राश्विनस्य तुलायां चान्द्रकार्त्तिकस्य वृश्चिके चान्द्रमाघस्य कुम्भे च प्रतिलम्भात् अवश्यम्भावात्। माघे मासार्द्धभे दिवा इति दिवेति भाक्तदिवा इत्यर्थः वङ्कुरोत्सवस्य रात्रिकर्त्तव्यत्वात्। अतएव हेमाद्रौ माघे मासार्द्धभे निशि इत्युक्तम्। शेषार्द्धन्तु द्वादश्यामथ कर्त्तव्यः पौर्णमास्यां महोत्सव इति विशेषः। सौरवचनमाघश्रुतिरिति सौरवचनेन सह चान्द्रमाघश्रुतिरित्यर्थः। तथाच कुम्भे चैव हुताशन इत्यनेन क्वचिद्वचने सौरश्रुतिः माघे मासार्द्धभे दिवा इति वचनेन चान्द्रमाघश्रुतिश्च उत्थाने हुताशनोत्थाने वङ्कुरोत्सवे अस्ति इत्यर्थः। वरचतुर्थी वरदाचतुर्थी। परभूतान् इति वङ्कुरोत्सवस्य परभूतान् चैत्रविहिताशोकाष्टम्यादीन्विशेषणम्। मध्यवर्त्तिन इति वरचतुर्थ्यादेः परभूतस्य चैत्रविहिताशोकाष्टम्यादेः पूर्व्ववर्त्तिन इत्यर्थः। हुताशनोत्थानमात्रस्य वङ्कुरोत्सवमात्रस्य।

द्धाराय गौणस्य चान्द्रस्य शास्त्रार्थता अन्यत्र तु निरपवादो मुख्यः सौर एव वचनार्थ इति दर्शयति तस्मादशोकाष्टमी-प्रभृतीनामुत्कर्षमनुत्कर्षं माघीसप्तमीप्रभृतीनां विशेषकारणमन्त-रेण ब्रुवाणा अवधीरणीया एव मनीषिभिः।

तथा ज्योतिःशास्त्रम्।

कर्किण्यर्के हरौ सुप्ते शक्रध्वजक्रियाश्विने।
तुलायां बोधयेद्देवीं वृश्चिके तु जनार्द्दनम्॥

तथा वैशाखज्यैष्ठयोरप्यधिमासपात एवमेव सर्व्वं कार्य्यम्। प्राप्ते आषाढ इत्यादिकमभिधाय पतिते चेति क्तप्रत्ययात् आषा-ढ़ात् पूर्व्वं भूतत्वप्रतीतेः मेषे वृषे वा पतित इत्यवगतेः। यदा तूत्तरत्रिके अधिमासस्तदा मिथुन एव देवशयनं नियतं किन्तु कर्कटे सिंहे अधिमासे शक्रदुर्गाविष्णुसमुत्थानानि कन्यातुला-वृश्चिकेष्वेव यथाक्रमम्। कन्यायामधिमासपाते शक्रोत्सवः सिंहे एव। दुर्गाविष्णूत्थाने तुलावृश्चिकयोः। तुलायाञ्च वक्राति-चाराभ्यामधिमासपाते वृश्चिके विष्णूत्थानम्।

अतएव सत्यः।

शक्रध्वजस्थापनञ्च(१) विष्णोश्च परिवर्त्तनम्।
मासद्वयेन निर्द्दिष्टं शयनादाद्यकोविदैः॥
दुर्गायाश्च त्रिभिर्मासैरधिमासं विनैव तु।
अधिमासनिपाते तु क्रमादिन्द्राम्बिकाहरीन्।
कन्यातुलावृश्चिकेषु नृप उत्थापयेद्‌ध्रुवम्॥

(१) शक्रध्वजोत्थानञ्चेति क्वचिदादर्शे पाठः।

अनेनैतदुक्तमधिमासं विना शक्रध्वजोत्थानविष्णुपार्श्वपरिवर्त्तने विष्णुशयनान्मासद्वयेन* कर्त्तव्ये दुर्गोत्थानञ्च मासत्रयेणैव। एवकारोऽत्रैव सम्बुध्यते अन्यथा अनर्थकत्वात्। सति त्वधिमासे अन्यथेति तुशब्दार्थं दर्शयति। अधिमासपाते पुनरन्यथा कन्यायां शक्रोत्सवपार्श्वपरिवर्त्तौ तुलायां दुर्गोत्थानं वृश्चिके देवोत्थानमिति। अनेनैतद्दर्शितं शयनात्त्रिभिर्मासैः शक्रोत्सवः चतुर्भिर्दुर्गायाः पञ्चभिर्देवोत्थानम्। एवं मासचतुष्टयेनेत्यस्योत्तरत्रिकाधिमासेऽपवादो दर्शितः अन्यथा भावानुपपत्तेः। उत्तरत्रिकाधिमासे मिथुने देवशयने सत्ययमर्थः सिध्यति। अतोऽधिमासपाते तु क्रमादिति सम्बन्धो† न तु क्रमादिन्द्राम्बिकाहरीन्

---

* यत्रोत्कर्षः श्रूयते इति। उत्कर्षश्रुतिस्तु चान्द्रत्वेन सौरत्वेनोभयथा श्रुतिरित्यर्थः। गौणस्य गौणस्यापि दर्शयतीत्यस्य ब्रुवाणा इत्यनेन सम्बन्धः। उत्कर्षं चान्द्रपरताम् अशोकाष्टमीप्रभृतीनामित्यनेन सम्बन्धः। अनुत्कर्षं सौरपरतां माघीसप्तमीप्रभृतीनामित्यनेन सम्बन्धः अवधीरणीया निन्दनीयाः। एवमेव सर्व्वं कर्कटादौ हरिशयनादिकमेव सर्व्वम्। उत्तरत्रिके श्रावणादिमासत्रये। मिथुन एव हरिशयनं श्रावणादौ मलमासे मिथुन एव आषाढ़शुक्लपक्षसमापनात्। वक्रातिचाराभ्यां मन्दशीघ्रगतिभ्याम्। वृश्चिके विष्णूत्थानमिति शुद्धकार्त्तिकशुक्लपक्षीयद्वादश्यादेर्वृश्चिके अवश्यम्भावात्। विष्णुशयनान्मासद्वयेन विष्णुशयनादूर्द्ध्वं मासद्वयेनेत्यर्थः। मिथुनार्कगताषाढ़ादूर्द्ध्वं मासद्वयं भाद्र एव भवति।

† त्रिभिर्मासैरित्यस्यार्थमाह मासत्रयेणेति। तदपेक्षया आश्विन एव भवति। इन्द्राम्बिकाहरीन् शक्रोत्थानदुर्गोत्सवविष्णूत्थानानि। अधिमासनिपाते तु अधिमासं विनैव तु इत्यनेन व्यवस्थामुक्ता अधिमासनिपाते तु इत्यत्र व्यवच्छेदार्थक-तुशब्दार्थमाह अन्यथेति। तुशब्दार्थं दर्शयति इति अधिमासे पुनरन्यथा अधिमासाभावे शक्रोत्थानादिकं सिंहे उक्तम् अधिमासे तु कन्यायामिति सुतरामन्यथात्वम्। शयनात्त्रिभिर्मासैरिति

कन्यादिष्विति इन्द्रादीनाञ्च कन्यादीनाञ्च समसंख्यत्वेन समासनिर्देशेन समत्वम् । यथासङ्ख्यमन्वयस्य सिद्धत्वात् क्रमादिति वैयर्थ्यापत्तेः । तेनोत्तरत्रिकाधिमासोऽपि यदि कर्कटसिंहयोर्भवति तदा कन्यातुलावृश्चिकेषु "इन्द्राम्बिकाहरीन्" अथ कन्यायां तदा तुलावृश्चिकयोरम्बिकाहरीन् तुलायाञ्च वृश्चिके हरिमुत्थापयेत् इत्यधिमासनिपातक्रमात् । क्रमेण इन्द्रादीनामुत्थानमिति तस्यार्थः । तत्रैव चान्द्रलाभादित्यभिप्रायः । तस्मात् शयनपार्श्वपरिवर्त्तनशक्रदुर्गाविष्णूत्थानानि चान्द्रेष्वेवाषाढादिकेषु । ननु यद्याभाका इत्यादिपरिग्रहस्तदेतन्मूलभूतासु श्रुतिषु आषाढादिपदानि चान्द्रेष्वेष्टव्यानि न केवलं वैशाखपदं नैतत् मिथुनसिंहकन्यातुलोपक्रान्तेषु* प्रतिपदादिमासेषु देव-

---

श्रावणादौ अधिमासे इत्यर्थः । तथाच श्रावणादौ मलमासे मिथुन एव हरिशयनं भवति तदूर्द्ध्वं त्रिभिर्मासैः सुतरां कन्यायामेव शक्रोत्सवः भवति । उत्तरत्रिकाधिमासे श्रावणादित्रिकाधिमासे । अपवादो विशेषः । अन्यथाभावानुपपत्तेः अन्यथाभावोऽन्यथात्वं तदनुपपत्तेरित्यर्थः । अयमर्थः शयनात् त्रिभिर्मासैः शक्रोत्थानं चतुर्भिर्मासैर्दुर्गोत्थानं पञ्चभिर्मासैर्देवोत्थानम् एवंरूपोऽर्थः सिध्यतीत्यर्थः । अतोऽधिमासपाते तु उत्तरत्रिकाधिमासेषु क्रमादिति सम्बन्धः इति क्रमादधिमासपातक्रमादित्यर्थः ।

* कन्यातुलावृश्चिकेषु क्रमादिन्द्राम्बिकाहरीन् उत्थापयेदित्यन्वये क्रमादिति पदस्य वैयर्थ्यं दर्शयति ननु क्रमादिन्द्राम्बिकाहरीन् इत्यस्य कन्यातुलावृश्चिकेषु इत्यस्य च समासनिर्देशेन । यथासंख्यमन्वयस्य सिद्धत्वात् इति संख्यामनतिक्रम्य यथासंख्यं सिद्धत्वादिति तथाच द्वन्द्वात्परं श्रूयमाणः प्रत्येकेन सम्बुध्यते इत्यनुशासनादिति भावः । विशेषयति तेनोत्तरत्रिकाधिमासेऽपीति । यदि कर्कटसिंहयोर्भवति अधिमास इति शेषः उत्तरत्रिकाधिमासोऽपीति पाठे तु प्रथमान्तत्वाद्भवतीत्यनेन सम्बन्धः । कन्यायाम् अधिमासे शक्रोत्थानस्य

शयनादिकं कुर्य्यादिति श्रुतयः कल्प्या न पुनराषाढ़ादिपदवत्यो-ऽनुपयोगात् अतो नास्ति विरोधः कश्चित्। लक्ष्मीप्रबोधः तुलायामिवेति अलमतिविस्तरेणेति सर्व्वं सुस्थम्*। ननु भवन्मते सौरेष्वेवाषाढ़ादिशब्दानां मुख्यत्वात् चान्द्रे तु गौणत्वादाभाके-त्यादिषु सौरग्रहणमेव युक्तम्। यथा वा योग्लोको मन्यते मिथुनाद्युपक्रान्तेषु चान्द्रेषु सौरेषु मिथुनादिषु राशिभोगात्मके-ष्वाषाढ़ादिपदानां रूढ़िणैव वाचकत्वे सत्यपि शयनादिषु "मिथुनस्थ" इत्यादिनिर्द्देशादाभाका इत्यादिष्वपि सौरपरत्वमेव निर्णीयते। अतः कथं चान्द्रेषु शयनादिविधिः।

तथाहि।

"मिथुनस्थे सहस्रांशौ स्नापयेन्मधुसूदनम्।
तुलाराशिगते तस्मिन् पुनरुत्थापयेच्च तम्॥

---

सिंहे विधानात् आह अथ कन्यायां तदित्यादि। तुलायाम् अधिमासपाते तु कन्यायां दुर्गोत्सवस्य समापनादाह तुलायाञ्चेति अधिमासपाते इति शेषः। मिथुनसिंहकन्या-तुलोपक्रान्तेषु मिथुनस्थसिंहस्थकन्यास्थतुलास्थरव्यारब्धेष्वित्यर्थः।

* श्रुतयः कल्प्या इति। मिथुनस्थरव्यारब्धचान्द्रमासे हरिशयनं सिंहस्थरव्यारब्धभाद्रे शक्रोत्थानपार्श्वपरिवर्त्तने कन्यास्थरव्यारब्धाश्विने दुर्गोत्सवं तुलास्थरव्यारब्धकार्त्तिके हरे-रुत्थानञ्च कुर्य्यादिति विषयः। न पुनराषाढ़ादिपदवत्यः इति तथाच अन्यकल्पमते निरूप-पदाषाढ़ादिपदानां सौरशक्तेः सौराषाढ़ादौ कदाचित्तत्तिथेरप्राप्तौ शेते विष्णुः सदाषाढ़े इत्यादेः वर्षे वर्षे विधातव्यं स्थापनञ्च विसर्ज्जनमित्यादेश्च बाधः स्यादिति भावः। यतो हरिशयनादौ चान्द्रग्रहणम् अतो विरोधो नास्ति कश्चित्। तथाच सौरग्रहणे कदाचित् तत्तिथेरप्राप्तौ शेते विष्णुः सदाषाढ़े इत्यादिनियमबाधरूपविरोधो भवेदिति भावः। सर्व्वं सुस्थं निर्बाधमित्यर्थः।

"अधिमासेऽपि पतिते एष एव विधिः स्मृतः।
नान्यथा स्नापयेद्देवं न चैवोत्थापयेद्धरिम्॥" भविष्यपुराणे।

सौरस्य निर्देशात् मिथुन एव देवशयनमुत्थानञ्च तुलायां कार्य्यम्। तन्मध्यपतितं पार्श्वपरिवर्त्तनमपि सौर एव भाद्रे 'आभाका' इति साहचर्य्यात्। नन्वधिमासपातेऽपि मिथुनतुलयोः शयनोत्थान-विधानं कर्कटादावुत्कर्षविधिविरुद्धं, तत्राह—"अधिमासेऽपि पतिते" इत्यस्य सूर्य्यलङ्घितदर्शान्तमासेतर*गणितगम्याधिमासा-न्तरस्य मिथुनादौ पातेऽपि शयनाद्युत्कर्षो नास्तीत्येतदर्थत्वात् अतएवोत्कर्षवचनेष्वपि सौरमेव निर्दिशति। यथा—"विष्णुः स्वपिति कर्कटे।"

तथा।

"अधिमासनिपाते तु क्रमादिन्द्राम्बिकाहरीन्।
कन्यातुलावृश्चिकेषु नृप उत्थापयेद्ध्रुवम्॥"

---

* ननु चान्द्रे सौरे वा आषाढ़ादिपदानां शक्तिरस्तु आस्तां परन्तु विशेषवचने मिथुनस्थादिपदश्रवणात् आभाकादीनां सौरपरत्वमिति योग्लौकमतमपाकर्त्तुमवतारयति यथा वा योग्लौकी मन्यते इत्यादि। योग्लौकः तन्नामा निबन्धकारः। तन्मध्यपतितमित्यादि तथाच मिथुनस्थे शयनविधानेन तुलायां बोधनविधानेन एतदेकवाक्यतायाम् आभाका इति वचने मध्यपठितस्य भाद्रपदस्य पार्श्वपरिवर्त्तनेऽपि सौरभाद्रपरत्वं सुतरामेवेति भावः। शयनोत्थानविधानं मलमासेऽपि पतिते एष एव विधिः स्मृत इत्यनेनेति शेषः। कर्कटा-दावुत्कर्षविधिविरुद्धमिति तथाच एष एव विधिः स्मृतः इत्यनेन यदि अधिमासपातेऽपि मिथुनादौ हरिशयनं स्यात् तदा द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे इत्यादि-वचनविहितः कर्कटे शयनोत्कर्षविधिर्विरुध्येत इति। तत्र समाधानमाह तत्राहेत्यादि सूर्य्यलङ्घितदर्शान्तेतरप्रकृतमलीभूतमुख्यचान्द्रमासेतरस्येत्यर्थः।

एवमादिवचनैश्च पूर्व्वत्रिकाधिमासे सत्युत्कर्षः* शयनादीनां क्रियते। कर्कटे त्वधिमासे सति शयनादीनां मिथुनसिंहकन्यातुलास्वेव क्रिया नोत्कर्षः कस्यचित्। सिंहे त्वधिमासपाते तस्य मलिम्लुचत्वात् शक्रोत्सवपार्श्वपरिवर्त्तौ कन्यायाम्। दुर्गोत्सवः कन्यायामेव सौर एव दुर्गोत्थानविधानात् तस्य चादुष्टत्वात्। विष्णूत्थानं तुलायामेव। कन्यायाञ्च मलिम्लुचे सिंह एव शक्रोत्सवः, दुर्गोत्सवस्तु तुलायां, देवोत्थानमपि तुलायामेव। तदयमर्थः। उत्तरत्रिकेऽधिमासे मिथुनतुलयोरेव देवशयनोत्थाने न तु तयोरुत्कर्षः। शयनोत्कर्षहेतोरधिमासस्यापतितत्वात् उत्थाने च कर्कटशयनोत्कर्षहेतोरभावात्।

अतएव माण्डव्यः।

"अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति।
तस्मिन् शुक्ले सदा विष्णुस्तुलायामथ वृश्चिके॥"

---

* गणितगस्याधिमासान्तरस्येति। तथाच यत्र पूर्व्वं माघवादित्रिके अधिमासस्तत्र पश्चाव्दान्ते तु पश्चिममिति वचनात् पश्चाव्दान्ते श्रावणादित्रिके अधिमासस्य शास्त्रीयतया यत्र पश्चाव्दान्ते मिथुने अधिमासपातः कन्यायां पुनरधिमासान्तरं तत्र कन्यायामधिमासस्य प्रकृततया मिथुने पुनर्गणितगम्यमानमधिमाससमानं न तु प्रकृतमधिमासान्तरं तत्र तत्सत्त्वेऽपि मिथुन एव हरिशयनं मिथुन एव प्रकृताषाढ़समापनात् न तु कर्कटे तस्योत्कर्षः तस्य प्रकृताषाढ़ाधिमासविषयत्वमिति भावः। यत एव प्रकृतमलमासे शुद्धाषाढ़स्य कर्कटगतत्वम् अतएवेत्यर्थः। पूर्व्वत्रिकाधिमासे वैशाखादित्रये प्रकृताधिमासे सतीत्यर्थः। उत्कर्ष इति तत्र शुद्धाषाढ़स्य कर्कटगतत्वात् कर्कट एव शयनोत्कर्षः। भाद्रस्य आश्विनगतत्वात् कार्त्तिकस्य वृश्चिकगतत्वाच्च यथाक्रमं पार्श्वपरिवर्त्तनोत्थानयोरुत्कर्षः।

"शुक्लपक्षे यदा भानुस्तुलां समधिरोहति।
उत्तिष्ठत्यग्रतो विष्णुः पश्चात् कृष्णचतुर्द्दशी॥"

अस्य वचनद्वयस्यार्थस्तावदुत्सर्गापवादन्यायेनावधारितः। तुलायामादित्ये लक्ष्मीप्रबोधो नियतः, तदनन्तरञ्च देवस्य सदेति वचनात्तस्यापि नियतम्। अथ शुक्लपक्षे तुलासंक्रान्तौ चापवादः। शुक्लपक्षे च संक्रान्तिर्द्विधा मेषादित्रिकेऽधिमासपाताद् वा उत्तरत्रिके वा। तत्र मेषादित्रिकेऽधिमासीयद्विराषाढ़े कर्कटे हरिशयनात्—

"कर्किण्यर्के हरी सुप्ते शक्रध्वजक्रियाश्विने।
तुलायां बोधयेद्देवीं वृश्चिके तु जनार्द्दनम्॥"

इति वृश्चिके देवोत्थानस्य उत्कर्षात्तद्विषयत्वम् तावन्नास्य वचनस्य। यदप्युत्तरत्रिकाधिमासेन शुक्लपक्षे तुलासंक्रान्तौ चापि चान्द्रं कार्त्तिकं परिभाव्य* वृश्चिक एव देवोत्थानमिति वर्णयन्ति

---

* कर्कटे त्वधिमासपाते सतीति। तथाच अधिमासनिपाते तत्र तद्वचनस्य पूर्वत्रिकाधिमासमात्रविषयता तदेव दर्शयति शयनादीनामित्यादि। तथाच कर्कटे अधिमासे मिथुन एव हरिशयनस्य वास्तविकत्वात् कर्किण्यर्कें हरौ सुप्ते इति वक्ष्यमाणवचनात् कर्कटहरिशयनस्यज एव आश्विनादौ शक्रोत्थानादिनियम इति स्वयं वक्ष्यति। शयनोत्कर्षहेतोरधिमासस्येत्यादि तथाच यत्र पूर्वत्रिकाधिमासः तत्रैव कर्कटहरिशयनाद्युत्कर्षात् कर्किण्यर्कें इति वचनाच्च तत्रत्यमलमासस्य शयनोत्कर्षहेतुता नोत्तरत्रिकमलमासस्य शयनोत्कर्षहेतुत्वमिति भावः। अस्य वचनद्वयस्य अमावास्यां तुलादित्ये इति वचनस्य शुक्लपक्षे यदा भानुरिति वचनस्य च। उत्सर्गापवादन्यायेन सामान्यविशेषन्यायेन। अथ शुक्लपक्षे तुलासंक्रान्तौ चापवाद इति तथा च यत्र वैशाखादित्रितयान्यतमाधिमासस्तत्रैव कृष्णपक्षे तुलासंक्रान्तिसम्भवात् कर्कटे हरिशयनेन कर्किण्यर्कें इति वचनविषयसद्भावाच्च हरिशयना-

सूरय:। तदेतत् दुर्भिक्षकालायाचितवृत्तिब्राह्मणवदनर्थकवचनमिदम्(१)। तस्मादवश्यं* तुलासंक्रान्त्यनन्तरमेव देवोत्थानमभिधेयं, तदनन्तरिति कृष्णपक्षे च तुलायामेव कृष्णचतुर्दशी। तत्परभूताऽमावास्यायाञ्च लक्ष्मीप्रबोध:, सा च सुखरात्रिरित्युच्यते। इत्युपपन्नमुत्तिष्ठत्यग्रत इति। उत्तरत्रिकाधिमासे चागामिवत्सरे शुक्लद्वादशीत: पूर्वं मिथुनसंक्रान्तौ यदि मिथुनादौ तदन्ते चानुराधाद्वादशीप्राप्ति:, तदा मासि संवत्सरे चैव तिथिद्वैध-

(१) दुर्भिक्षकालायाचितवृत्तिब्राह्मणवदनर्थकं वचनमिदं विपरीत इति क्वचित् आदर्शे पाठ:।

---

देरुत्कर्षात् लक्ष्मीप्रबोधानन्तरमेव वृश्चिक एव हरेरुत्थानम्। यत्र तु श्रावणादित्रितयान्यतममासे अधिमासपात: तत्र शुक्लपक्षे तुलासंक्रान्तिसम्भवात् कर्कटे हरिशयनाभावेन कर्किण्यर्के इत्येतद्वचनाविषयत्वात् शयनादेरुत्कर्षाभावेन शुक्लपक्षे यदा भानुरित्यादिवचनात् हरेरुत्थानानन्तरमेव लक्ष्मीप्रबोधरूपसुखरात्रिका इति अपवाद: विशेष इत्यर्थ:। तद्विषयत्वं कर्किण्यर्के हरौ सुप्ते इत्येतद्वचनविषयत्वम् तावद्वास्य वचनस्य इत्यन्वय: अत्र नास्य वचनस्येति पाठ: प्रामादिक: लिपिकरप्रमादमात्रम्। विपर्य्यायपरत्वन्तावन्नास्य वचनस्येति पाठे व्यक्त एवार्थ:। उत्तरत्रिकाधिमासेन श्रावणादित्रितयान्यतममासाधिमासपातेन। शुक्लपक्षे तुलासंक्रान्तौ चापि तुलासंक्रान्तिसम्भवेऽपि। परिभाव्य परिकल्प्य।

* दुर्भिक्षकालायाचितेत्यादि। दुर्भिक्षकाले अयाचितवृत्तिर्यस्य स चासौ ब्राह्मणश्चेति स दुर्भिक्षकालायाचितवृत्तिब्राह्मण: तद्वदनर्थकवचनमिदम्। तथाच दुर्भिक्षकालायाचितवृत्तिब्राह्मणो यथा अनर्थक: अर्थशून्य: धनशून्य: श्लिष्टपदमिदं तथा इदं वचनं शुक्लपक्षे यदा भानुरिति वचनम् अनर्थकं निरर्थकं तात्पर्य्यशून्यं भवेत्। तथाहि उत्तिष्ठत्यग्रतो विष्णुरित्याद्युपादानात् उत्तरत्रिकाधिमासपाते शुक्लपक्षे तुलासंक्रान्तौ यदि विष्णूत्थापनात् पूर्वं लक्ष्मीप्रबोधरूपसुखरात्रिका भवेत् तदा अग्रत इत्यस्य पश्चादित्यस्य च पदद्वयस्य वैयर्थ्यापातात् वचनमिदम् अनर्थकं भवेदिति भाव:। तस्माच्च वचनानर्थक्यात् इत्यर्थ:।

मित्युत्तरप्राशस्त्यान्मिथुनान्त एव शयनविधिः*। अथ मिथुने तत्प्राप्तिः। कर्कटादौ च तथाविधकालप्राप्तिः, तदा कर्कट एव शयनं वचनात्तदाह सत्यः।

"वृषं त्यक्त्वा चतुर्थ्यूर्द्ध्वं षड़शीतिः सिते यदा।
तदा दैवविदा चिन्त्यं द्विराषाढ़प्रकल्पनम्॥"

कीदृशं तस्य कल्पनमित्यत्राह ज्योतिःशास्त्रे।

"शुक्लचतुर्थीमतिक्रम्य यदा संक्रमते रविः।
द्विराषाढ़ं प्रकल्प्यैवं कर्कटादौ स्वपेद्धरिः॥"

एतदेवाह ऋष्यशृङ्गः।

"प्रथमेऽह्नि द्वितीये वा शुक्ले मेषमियाद्रविः।
द्विराषाढ़मते विष्णुः परं कर्कटके स्वपेत्॥"†

---

* तुलासंक्रान्त्यनन्तरमेवेति। रेवतीनक्षत्रयुक्तद्वादश्यादिरूपविहितकाले इति शेषः उत्तिष्ठत्यग्रत इत्युपलक्षणं पश्चात् कृष्णचतुर्द्दशीत्यप्युपपन्नं मिथुनादाविति। मिथुनस्थे रवौ सति प्रथमे न तु मिथुनस्यादौ तथात्वे द्वादशीतः पूर्वं मिथुनसंक्रान्तावित्यनुपपत्तेः। मासि संवत्सरे चैव तिथिद्वैधमिति सत्यव्रतवचनम्।

तथाच। मासि संवत्सरे चैव तिथिद्वैधं यदा भवेत्।
तत्रोत्तरोत्तमा ज्ञेया पूर्व्वा तु स्यान्मलिम्लुचः॥

† वृषं त्यक्त्वेति। वृषस्थरव्यारब्धशुक्लप्रतिपदादिदर्शान्तं मुख्यचान्द्रमासं त्यक्त्वा इत्यर्थः। चतुर्थ्यूर्द्ध्वं पञ्चम्यादौ षड़शीतिरिति। धनुर्मिथुनकन्यासु मीने च षड़शीतय इति वचनात् द्विराषाढ़ं गौणद्विराषाढ़म्। अस्य द्विराषाढ़स्य शुक्लचतुर्थीमतिक्रम्येति तत्पूर्वशुक्लप्रतिपदादिदर्शान्तमुख्यचान्द्रमाससहितशुक्लचतुर्थीपर्य्यन्तमतिक्रम्येत्यर्थः। द्विराषाढ़ं गौणद्विराषाढ़ं कर्कटादौ आदिना सिंहतुलयोः परिग्रहः अतएव स्वपेदित्युपलक्षणं पार्श्वेन परिवर्त्तयेत् उत्थापयेच्च इत्यपि बोध्यम्। प्रथमेऽह्नि शुक्लप्रतिपदि द्वितीये शुक्लद्वितीयायां मेष-

एतद्व्याख्यातम्। विष्णुः परं कर्कटके स्वपिति शेषन्तु शक्रोत्सवादि यथाकालमेव कार्य्यम्।

तं कालमाह।

"द्विराषाढ़विकल्पोऽयं वैकुण्ठशयनं प्रति।
ध्वजस्तु शतयज्ञस्य सिंह एव विधीयते॥"

यदा च सिंहादौ तदन्ते च श्रवणद्वयलाभस्तदा कर्त्तव्यमाह*।

"द्विराषाढ़े तु सम्प्राप्ते यदि सिंहे हरिद्वयम्।
पर उत्थापयेच्छक्रं कन्यायान्तु विसर्ज्जयेत्॥"

कन्यायां पुनरन्ते च श्रवणप्राप्तौ कर्त्तव्यमाह।

"सैंहे कान्येऽथ पक्षौ चेत् स्यातां हर्य्याद्यसंयुतौ।
सैंहे परे शक्रमहः कन्यायामिन्द्रदुर्गयोः॥"

कन्यायां श्रवणद्वये प्रथमे शक्रोत्थानं द्वितीये तु दुर्गाया इति योगीश्वरेण व्याख्यातो द्विराषाढ़विकल्पः, स पुनरनुपपन्न इति

---

मियात् रविः मेषराशिञ्चरेत् द्विराषाढ़स्तते मलमासं विनापीत्यर्थः। तथाच शुक्लप्रतिपदादौ रवेर्मेषादिसञ्चारे तत्शुक्लप्रतिपदादिदर्शान्तमासस्य चान्द्रचैत्रत्वात् तस्य च सौरवैशाखे मेषशेषे समापनात् तदुत्तरवृषराशौ चान्द्रवैशाखसमापनात् तदुत्तरमिथुनराशौ चान्द्रज्यैष्ठसमापनाच्च कर्कट एव चान्द्राषाढ़ीयद्वादशी सम्भवति। तत्र हरिशयनादिति भावः।

* द्विराषाढ़विकल्पोऽयं द्विराषाढ़परिकल्पनं वैकुण्ठशयनं प्रति मिथुनकर्कटकालभेदेन हरिशयनज्ञापनार्थं तथाच माघवादिनिके द्विराषाढ़े मलमासे सति कर्कट एव हरिशयनं, श्रावणादिनिके द्विराषाढ़े मलमासे मिथुन एव हरिशयनम्, आगामिवत्सरे तु कर्कट एव हरिशयनमिति भेदः। ध्वजस्तु शतयज्ञस्य शक्रोत्थानम्। सिंहे सिंहादौ मलीभूतभाद्रशुक्लपक्षे तदन्ते च सिंहस्थरव्यारब्धशुद्धभाद्रशुक्लपक्षे च श्रवणद्वयलाभः श्रवणनक्षत्रयुक्तशुक्लद्वादशीलाभः सिंहस्थरव्यारब्धचान्द्रमासद्वये इत्यर्थः।

मन्यामहे। तत्र प्रथमतस्तावदनेकाभिधायकमाषाढ़ादिपदं रूढ्यैवेत्यसङ्गतं वचनम्। स्तोकशक्त्युपपन्नेऽर्थे बहुशक्तिरप्रामाणिकीति न्यायात्। एक एव कल्पनायां सौरे विनिगमनाप्रमाणं प्रदर्शितमेव प्राक्। यदपि देवशयनादौ सौरमासग्रहणार्थं वचनमुपन्यस्तं, 'मिथुनस्थे सहस्रांशावित्यादि,' तदपि तदर्थानवबोधादेव सौरपरिग्रहेऽधिमासेऽपि पतित इति नियमविरोधात्। कर्कटवृश्चिकयोरपि शयनोत्थानोत्कर्षदर्शनात्। न च गणितमात्रगम्योत्कर्षानुपयुक्ताधिमासान्तराभिप्रायवर्णनया विरोधपरिहारो वाच्यः। तस्य शास्त्रतो वैदिककर्म्मोत्कर्षनिमित्तत्वेनापरिज्ञातस्य शयनादावुत्कर्षहेतुभावाप्रसक्तौ प्रतिप्रसववचनत्वानुपपत्तेः।* तस्मान्मिथुनस्थे सहस्रांशाविति वचनस्यायमर्थः।

---

* हरिद्वयमिति। तथाच भाद्रमलमासे यदा मलभाद्रसम्बन्धि-श्रवणनक्षत्रयुक्तद्वादशी शुद्धभाद्रसम्बन्धि-श्रवणनक्षत्रयुक्तशुक्लद्वादशी चेत्यर्थः। परे शुद्धभाद्रसम्बन्धि-श्रवणनक्षत्रयुक्तशुक्लद्वादश्यां कन्यायान्तु विसर्ज्जयेदिति भरण्यन्तपाद इति शेषः।

तथाच कालिकापुराणे।

अथातः शृणु राजेन्द्र शक्रोत्थानध्वजोत्सवम्।
यत् कृत्वा नृपतिर्याति नो कदाचित् पराभवम्॥
रवौ हरिस्थे द्वादश्यां श्रवणे सितपक्षके।
आराधयेत् नृपः सम्यक्सर्व्वविघ्नोपशान्तये॥
श्रवणर्क्षयुतायान्तु द्वादश्यां पार्थिवः स्वयम्।
अन्तपादे भरण्यान्तु निशि शक्रं विसर्ज्जयेत्॥

कन्यायां पुनरन्ते चेति आदावन्ते च इत्यर्थः। शक्रमहः शक्रोत्थानम्। सैंहे सिंह एव सैंहं तस्मिन् सौरभाद्र इत्यर्थः। कान्ये कन्या एव कान्यः तस्मिन् सौराश्विन इत्यर्थः,

मिथुनस्थसूर्य्यप्रारब्धे चान्द्रे मासि प्रतिपदादिदर्शान्ते मधुसूदनं स्वापयेत्। तुलास्थसूर्य्यप्रारब्धे चान्द्रेषूत्थापयेत्। अधिमासे पतितेऽपि यदा कर्कटे देवशयनं, वृश्चिके उत्थापनं, तदापि मिथुनतुलोपक्रान्तयोरेव चान्द्राषाढ़कार्त्तिकयोः शयनोत्थाने 'एष एव विधिः सदा,' न पुनरेतस्मादन्यथा कदाचिदपि स्वापः प्रबोधो वा सर्व्वथायमर्थो न व्यभिचरतीत्यर्थः। सौरे तुलाद्यर्थं गृह्यमाणेऽधिमासे कर्कटवृश्चिकयोः शयनोत्थानोत्कर्षादधिमासे-

---

पक्षौ शुक्लपक्षद्वयम्। परे परभूतश्रवणनक्षत्रयुक्तद्वादश्याम्। कन्यायामिन्द्रदुर्गयोरित्यत्र व्यवस्थामाह कन्यायां श्रवणद्वये इत्यादि। द्वितीये कन्यासम्बन्धि-द्वितीयश्रवणनक्षत्रे। दुर्गाया इति विसर्ज्जनमिति शेषः श्रवणेन विसर्ज्जयेदित्येकवाक्यत्वात्। योगीश्वरेण तन्नाम्ना निबन्ध-कारेण। व्याख्यात इत्यनेन द्विराषाढ़विकल्प इत्यनेन सम्बन्धः। अनेकाभिधायकम् अनेका-र्थाभिधायकं रूढ्या रूढ़िशक्त्या। लोकशक्त्युपपन्नेऽर्थे एकत्र शक्तिस्वीकारेणोपपत्तिसम्भवे बहुशक्तिः नानाशक्तिस्वीकारः अप्रामाणिकीति गौरवादिति शेषः। विनिगमनाप्रमाणं तप-स्तपस्यावित्यादिश्रुतिरेवेति शेषः। तदर्थानवबोधनादेव मुनिवचनतात्पर्य्यापरिज्ञानादेव सौर-परिग्रहे हरिशयनादाविति शेषः। अधिमासे पतिते माधवादित्रिके मलमासपाते नियम-विरोधादिति तथाच माधवादित्रिके मलमासपाते कर्कटे हरिशयनोत्कर्षात् मिथुनस्थे सहस्रांशाविति वचनेन हरिशयनस्य मिथुननैयत्यबाधापत्तेरिति भावः। गणितमात्रगम्यः गणितशास्त्रमात्रबोध्यः उत्कर्षानुपयुक्ताधिमासान्तराभिप्रायवर्णनया मासद्वन्द्वाद्यप्रयोजकी-भूतभानुलङ्घितरूपमलमासान्तराभिप्रायवर्णनया विरोधपरिहार इति। तथाच मिथुनादौ हरिशयनादिस्वीकारे कर्कटादौ हरिशयनादीनामुत्कर्षविधायकवचनेन सह यो विरोधः तस्य परिहारः अनया वर्णनया करणीय इति भावः। तस्य गणितमात्रगम्यस्य हेतुभावा-प्रसक्तौ हेतुताप्रसक्तौ प्रतिप्रसववचनत्वानुपपत्तेः गणितमात्रगम्यत्वेन प्रतिप्रसवविधाना-नुपपत्तेः।

ऽप्येष एव विधिर्नान्यथेत्यादिकं वाच्येत । सकलपदानुरोधेन वाच्यार्थवचनं युक्तम् । ततश्च मिथुनस्थे सहस्रांशाविलयत्रोपक्रान्ते चान्द्रे इत्यत्राध्याहार्य्यम् । * सौरपरिग्रहे कल्पनागौरवमिति तथाहि "आभाका" इत्यस्य तावन्मूलभूतञ्चान्द्रसौरयोरन्यतरत्र शयनादिविधानार्थं श्रुतित्रयम् । मतद्वयेऽपि शक्रदुर्गोत्सवार्थमपि श्रुतिद्वयं निर्व्विवादम्† । सौरवादिना त्वपरा अप्यधिकाः

---

* ननु यदि शयनादौ न सौरपरत्वं तदा मिथुनस्थसहस्रांशाविति वचनस्य का गतिरित्यत आह तस्मादित्यादि । अयमर्थः वक्ष्यमाणोऽर्थः । मिथुनस्थ इत्यादिवचनस्य चान्द्रपरतया व्याचष्टे मिथुनस्थसूर्य्यप्रारब्ध इत्यादि । मिथुनस्थे सहस्रांशौ इत्यत्र लक्षणया व्याकरोति मिथुनस्थसूर्य्यप्रारब्धे चान्द्रे मासि इत्यादि । मिथुनतुलोपक्रान्तयोरेव मिथुनस्थतुलास्थरव्यारब्धयोरेव एष एव चान्द्रनियम एव । सदा एतस्मात् चान्द्रात् अन्यथा अन्यप्रकारं कदाचिदपीत्यस्य नेति इत्यनेन सम्बन्धः । अयमर्थः चान्द्रमासग्रहणरूपोऽर्थः । तुलाद्यर्थम् आदिना मिथुनपरिग्रहः । तथाच मिथुने चान्द्राषाढ़े अधिमासे तुलायां चान्द्रकार्त्तिके च अधिमासे कर्कटवृश्चिकयोः शयनोत्थानादिति । तथाच मिथुने चान्द्राषाढ़े अधिमासे मिथुनगतचान्द्राषाढ़स्य मलमासत्वेन कर्म्मानर्हतया कर्कटगतशुद्धचान्द्राषाढ़ एव हरिशयनम् । एवं तुलागतचान्द्रकार्त्तिके मलमासे तत्कार्त्तिकस्य कर्म्मानर्हतया वृश्चिकगतशुद्धकार्त्तिक एव हरिरुत्थानम् । एष एव विधिः कर्कटादिगते शुद्धचान्द्राषाढ़ादौ शयनाद्युत्कर्षे एव विधिः नान्यथा नाधिमासं विना । सकलपदानुरोधेन आषाढ़ादिपदकर्कटादिपदसार्थक्यानुरोधेन वाच्यार्थवचनं पदानां शक्यार्थनिरूपणम् । इत्यत्र एतद्वचने उपक्रान्तचान्द्रे इति मिथुनस्थे सहस्रांशौ इत्यत्र मिथुनस्थरव्यारब्ध इत्यधिकं चान्द्रार्थग्राहकं पदमध्याहार्य्यम् ।

† सौरपरिग्रहे हरिशयनादौ सौरमासमात्रग्रहणे कल्पनागौरवमिति वाचनिकत्वकल्पनागौरवमित्यर्थः तदेव दर्शयति तथाहीति । चान्द्रसौरयोरेकतरत्र चान्द्रे सौरे वा एकतरस्मिन् शयनादिविधानार्थं शयनपरिवर्त्तनप्रबोधविधानार्थं मूलभूतं श्रुतित्रयमिति तथाच चान्द्रे शयनादिस्वीकारे चान्द्राषाढ़े शयनं भाद्रे परिवर्त्तनं कार्त्तिके उत्थानमिति

पञ्चदश श्रुतयः कल्पनीयाः। तथाहि पूर्व्वत्रिकाधिमासे शयनादित्रयस्य शक्रदुर्गोत्सवयोरुत्कर्षार्थम्। एवं पञ्चसिंहे चाधिमासे शक्रोत्सवार्थम्। कन्याधिमासे च दुर्गोत्कर्षार्थम्। तुलाधिमासे च देवोत्थानोत्कर्षार्थम्। तथोत्तरत्रिकेऽधिमासे आगामिवत्सरे कर्कटस्यादौ द्वादशीलाभे तत्र देवशयनार्थम्। मिथुनान्ते च तत्प्राप्तौ तत्रैव शयनार्थम्।*

---

विधित्रयम्। सौरपक्षेऽपि मिथुने शयनं सिंहे परिवर्त्तनं तुलायामुत्थानञ्चेति विधित्रयम्। मतद्वयेऽपि चान्द्रत्वादिसौरत्वाद्युभयमतेऽपि विधिद्वयं समानं तथाच चान्द्रवादिमते भाद्रे शक्रोत्थानं कुर्य्यात् आश्विने दुर्गोत्सवं कुर्य्यादिति विधिद्वयं सौरपक्षेऽपि सिंहे शक्रोत्थानं कन्यायां दुर्गोत्सवं कुर्य्यादिति विधिद्वयम्। निर्विवादम् उभयमतेऽपि विधिकल्पने लाघवगौरवविरहेण विनिगमनाप्रमाणशून्यम्।

* सौरत्वादिमते विधिगौरवं दर्शयति सौरवादिना इत्यादि। पञ्चदशप्रकारं विधिकल्पनप्रकारं दर्शयति तथाहीत्यादि। पूर्व्वत्रिकाधिमासे माघवादित्रिकाधिमासे शयनादित्रयस्य शयनपार्श्वपरिवर्त्तनोत्थानरूपविधित्रयस्य उत्कर्षार्थमित्यग्रिमेन सम्बन्धः शक्रदुर्गोत्सवयोरुत्कर्षार्थम् उत्कर्षार्थञ्च एवं पञ्च पञ्च विधयः कल्पनीया भवन्तीति शेषः। सिंहे अधिमासे शक्रोत्सवार्थं शक्रोत्सवोत्कर्षार्थं विधिरेकः कल्पनीय इति शेषः। कन्यायामधिमासे दुर्गोत्सवार्थं दुर्गोत्सवोत्कर्षार्थमपरो विधिः कल्पनीयः। एवं तुलायामधिमासे च देवोत्थानोत्कर्षार्थम् अन्यो वा विधिः कल्पनीय इति विधित्रयं मिलित्वाष्टौ विधयो भवन्ति। उत्तरत्रिकाधिमासे श्रावणादित्रिकाधिमासे कर्कटादौ शयनादिपञ्चकं कर्कटे हरिशयनं कन्यायां शक्रध्वजपार्श्वपरिवर्त्तौ तुलायां दुर्गोत्सवः वृश्चिके हरेरुत्थानञ्च, तेन त्रयोदश विधयो भवन्ति। कन्याया आदौ अन्ते च श्रवणद्वयलाभे प्रथमे शक्रोत्थानं द्वितीये श्रवणनक्षत्रे देवीविसर्ज्जनं श्रवणेन विसर्ज्जयेदिति श्रवणेन दशम्यान्तु प्रणिपत्य विसर्ज्जयेदिति वचनाभ्यामेकवाक्यत्वात्, तेन पञ्चदश विधयो भवन्तीति व्यवस्थानिष्कर्षः।

"कर्किण्यर्के हरौ सुप्ते शक्रध्वजक्रियाश्विने ।

तुलायां बोधयेद्देवीं वृश्चिके तु जनार्द्दन"मित्यस्यापवादकम् । "ध्वजस्तु शतयज्ञस्य सिंह एव विधीयत" इत्यस्य मूलम् ।

तथा ।

"हरिद्वयं भाद्रपदे यदि स्याद्-
यद्यच्युतः कर्कटके प्रसुप्तः ।
तदा परस्मिं खलु वज्रपाणि-
रुत्तिष्ठते प्राणभृतां शिवाय ॥"*

इति व्यवस्थार्थम् ।

तथा ।

"सिंहे कान्येऽथ पक्षौ चेत् स्यातां हर्य्याद्यसंयुतौ ।
सिंहे परे शक्रमहः कन्यायान्त्विन्द्रदुर्गयोः ॥
शुक्लपक्षद्वये पूजा कल्पोऽयमपरः स्मृतः ।

द्विराषाढ़स्य विद्वद्भिस्तत्समाप्तिश्च तावते"ति व्यवस्थावचनद्वयम् । द्विराषाढ़समाप्तिवचनञ्चेति सौरपरिग्रहेऽधिकाः पञ्चदश श्रुतयः कल्पनीयाः । चान्द्रे तु नैतावती कल्पनीया ।

---

* अत्र प्रमाणं क्रमेण दर्शयति कर्किण्यर्के इत्यादि । इत्यस्यापवादकं विशेषकं "ध्वजस्तु शतयज्ञस्य" इति वचनम् । तथाच, "शक्रध्वजक्रियाश्विने" इति पूर्व्ववचने आश्विने शक्रध्वजविधिरुक्तः । "ध्वजस्तु शतयज्ञस्य सिंह एव विधीयते" इत्यनेन सिंहे पुनरपवाद उक्त इति भावः । "अस्य मूलमिति" अस्य अपवादस्य मूलमित्यर्थः, तदेव दर्शयति, "हरिद्वयमित्यादि," यदा सौरभाद्रस्यादौ अन्ते च श्रवणद्वयप्राप्तिः तदापरस्मिन् श्रवणनक्षत्रे शक्रध्वजविधिरित्यपवादः ।

तथाहि मेषादित्रिकेऽधिमासपाते मिथुनोपक्रान्तः* कर्कटावधि-संक्रान्तिचिह्नितः कर्म्मार्हचान्द्र आषाढ़ः कर्कट एव भवति। मिथुनाधिमासे तु मिथुनोपक्रान्तो मलिम्लुचः संक्रान्तिविवर्ज्जितः। कर्म्मानर्हो द्वितीयोऽप्याषाढ़ो भवति। तेन मिथुनान्तत्रिकाधिमासे कर्कटगामिन आषाढ़स्य मिथुनोपक्रान्तस्य मिथुनोपक्रान्तः कर्कटसमापनीयः शुक्लपक्षः। सकलदेवशयनार्थी विष्णुश्च कर्कटे स्वपिति। तदा सिंहकन्यातुलारब्धमासानां शुक्लपक्षाः सिंहकन्यातुलारब्धास्तेषु यथाक्रमं शक्रदुर्गाविष्णूत्थानानि चान्द्रेषु भाद्राश्विनकार्त्तिकेषु भवन्ति। कन्यातुलावृश्चिकत्वमप्रयोजकम्। अतएव† मेषेऽधिमासपाते प्रति-

---

* ननु तथात्वे "शक्रध्वजक्रियाश्विने" इत्यनर्थकं स्यादित्यत आह व्यवस्थार्थं "सिंहे कान्ये" इत्यादि। तथाच यदा सौरभाद्रस्यादौ अन्ते च श्रवणद्वयलाभः तदापरस्मिन् श्रवणनक्षत्रे शक्रध्वजविधिरपवादकः। यदा पुनर्भाद्रे न श्रवणनक्षत्रप्राप्तिः कन्यायाः पुनरादावन्ते च श्रवणद्वयप्राप्तिस्तदा पूर्व्वस्मिन् श्रवणनक्षत्रे शक्रध्वजविधिः। "शक्रध्वजक्रियाश्विने" अस्याप्यत्र विषयः इति व्यवस्था। परस्मिन् पुनः श्रवणनक्षत्रे देवीविसर्ज्जनविधिरिति न कश्चिद्विरोधः। व्यवस्थावचनद्वयं व्यवस्थापरवचनद्वयमित्यर्थः। द्विराषाढ़समाप्तिवचनञ्च मुख्यगौणद्विराषाढ़निमित्तकशयनादिविधायकवचनञ्च सौरपरिग्रहे शयनादौ सौरमासघटितत्वेन विधायकञ्चेत् तदा अधिका पञ्चदश श्रुतयः कल्पनीया भवेयुरित्यर्थः। चान्द्रे तु शयनादीनां चान्द्रमासविषयत्वे तु। न एतावती न पञ्चदश श्रुतयः। तदेव दर्शयति तथाहि इत्यादि। मिथुनोपक्रान्तः मिथुनस्थरव्यारब्धः।

† कर्कटावधिसंक्रान्तिचिह्नित इत्यादि। तथाच यदा पूर्व्वामावास्यान्त्यक्षणप्राक्क्षणादौ मिथुनसंक्रान्तिः कर्कटसंक्रान्तिस्तु शुक्लप्रतिपदि तदा तच्छुक्लप्रतिपदादिदर्शान्तस्य मुख्यचान्द्रस्य कर्कटगतस्य मिथुनस्थरव्यारब्धतया चान्द्राषाढ़त्वम्, अपिच—"आर्द्रो मलिम्लुचः

यदि वृषप्रवेशे तृतीयायां मिथुनगमने पञ्चम्यां कर्कटसंक्रान्तौ सप्तम्यां सिंहाधिरोहणे नवम्याञ्च कन्यागमने एकादश्यां तुलास्थे त्रयोदश्याञ्चातिचारेण वृश्चिकसंयोगे कर्कटे हरौ सुप्ते कन्यायां प्रथमं शक्रोत्सवो भवति। कन्याशेषे तु दुर्गायास्तुलायाञ्च विष्णु-महोत्सवः कथं स्यात्? * यदि चान्द्रमत्र प्रयोजकम् अन्यथा

"कर्किण्यर्के हरौ सुप्ते शक्रध्वजक्रियाश्विने।

तुलायां बोधयेद्देवीं वृश्चिके तु जनार्द्दन"मिति वचनात्

---

शेषो द्वितीयः प्रकृतः स्मृत" इत्यादिस्मरणात् कर्म्मार्हता च शुद्धत्वमिति भावः। कर्म्मानर्हः द्वितीयः प्रकृतभिन्नः अशुद्ध इत्यर्थः। मिथुनान्तचिकाधिमासे मेषवृषमिथुनान्यतमाधि-मासे। मिथुनोपक्रान्तस्य मिथुनस्थरव्यारब्धस्य। सिंहकन्यातुलारब्धाः सिंहकन्या-तुलास्थरव्यारब्धाः, चान्द्रेषु भाद्राश्विनकार्त्तिकेषु भवन्ति। चान्द्रभाद्रे शक्रोत्थानम्। चान्द्राश्विने दुर्गोत्सवः। चान्द्रकार्त्तिके हरेरुत्थानञ्च। अप्रयोजकं शयनादेरप्रयोजक-मित्यर्थः। अतएव कन्यादेरप्रयोजकत्वादेव।

* तृतीयायां मिथुनगमने इत्यादि। एतत्तु प्रदर्शनमात्रपरं न तु मिथुनसंक्रान्त्यादौ तत्तत्तिथेर्नियतत्वम्। कर्कटे हरौ सुप्ते इति तथाच वैशाखादौ मलमासे शुक्लाषाढ़स्य कर्कटगतत्वात् कर्कट एव हरिशयनस्य नियतत्वमिति भावः। कन्यायां प्रथममिति। अत्र कन्यायामित्यपपाठः, कन्याया इत्येव पाठः साधुः, कन्याया इति पञ्चमी। तथाच,— "कन्यायाः प्रथमं सिंहे" इत्यर्थः। भाद्रे तद्विधानात्। यथा—

"शुक्लाष्टम्यां भाद्रपदे केतुं वेदीं प्रवेशयेदिति।"

अत्र उत्तरत्रचान्द्रमप्रयोजकमित्यनेन सौरविधिः स्पष्टमवगम्यते। "कन्याशेषे त्विति," एतन्मते आश्विनपदस्य सौरपरत्वात् विष्णुमहोत्सव इति। तथाच—

"मिथुनस्थे सहस्रांशौ स्वापयेन्मधुसूदनम्।

तुलाराशिगते तस्मिन् पुनरुत्थापयेच्च तम्॥"

कथमित्यपपाठः आशङ्काया अभावात्।

तुलाशेषे सुखरात्रेः परस्ताद्-दुर्गोत्थानं स्यात् वृश्चिकशेषे च वासुदेवोत्थानमिति। "तस्मिन् शुक्ले सदा विष्णुरिति" बाधितं स्यात्। उत्तरत्रिकाधिमासे सिंहोपक्रान्तो भाद्रः कन्योपक्रान्त आश्विनः तुलोपक्रान्तः कार्त्तिकश्चान्द्रः, तेषां शुक्लपक्षाः कन्यातुलावृश्चिकेषु समाप्यन्ते, तेषु शक्रदुर्गाविष्णूत्थानानि भवन्तीत्येतदपि वचनपञ्चकानतिरिक्तमूलम्।* आगामिवत्सरे मिथुनोपक्रान्तस्य शुक्लपक्षद्वादशीमिथुनान्ते वा कर्कटादौ संक्रान्तिदिन एव वा तत्रैव शयनम्। तदपि चान्द्राषाढ़मूलम्। तदनन्तरं

---

* अन्यथा प्रयोजकत्वे प्रतिबन्दिं दर्शयति "कर्किण्यर्कें" इत्यादि। परस्तादूर्द्धम्। दुर्गोत्थानमिति लिपिकरप्रमादः। कन्याशेषे दुर्गाया इति प्राङ्लिखितेन विरोधात्। वस्तुतस्तु विष्णूत्थानमित्येव पाठः। तथाच वैशाखमलमासे वृश्चिक एव सुखरात्रेः परतो विष्णूत्थानमिति व्यवस्था, तत्र यदि सौरघटितशयनादिविधिः स्यात्, तदा तुलाशेष एव सुखरात्रेः परत उत्थानं स्यादित्यापत्तिः पुनर्वृश्चिके शास्त्रसिद्धमुत्थानमपि बाधितमित्यापत्तिद्वयं दर्शितमिति भावः। सिंहोपक्रान्तः सिंहस्थरव्यारब्धचान्द्रभाद्र इत्यर्थः। कन्योपक्रान्तः कन्यास्थरव्यारब्धः। तुलोपक्रान्तः तुलास्थरव्यारब्धः। एतदपि कन्यादिषु यथाक्रमं शक्रध्वजदुर्गोत्सवविष्णूत्थानरूपकर्म्मापि च वचनपञ्चकानतिरिक्तमूलमिति। वचनपञ्चकानतिरिक्तं मूलं यस्य तत् वचनपञ्चकमूलमित्यर्थः। वचनपञ्चकं यथा —

"कर्किण्यर्कें हरौ सुप्ते" इति।

"अधिमासनिपाते तु क्रमादिन्द्राम्बिकाहरीन्।
कन्यातुलावृश्चिके तु नृप उत्थापयेद्ध्रुवम्॥"

"हरिद्वयं भाद्रपदे यदि स्यात् यदाच्युतः कर्कट एव सुप्तः।
तदा परत्रैं खलु वज्रपाणिरुत्तिष्ठते प्राणभृतां हिताय॥" इति नवम्।

"आभाका" इत्यादि साधारणं वचनद्वयमिति पञ्च।

सिंहशेषे कन्यादौ वा श्रवणालाभे यद्वचनं, तदपि सिंहोपक्रान्तभाद्रस्य चान्द्रस्य परिग्रहादेव, कन्याशेषे च कन्योपक्रान्तस्य चान्द्राश्विनस्यासौ शुक्लपक्षः। कन्योपक्रान्तौ दुर्गोत्थानाय चान्द्राश्विनपरिग्रहादेव कन्यान्तगतैव च तदाष्टमी तुलोपक्रान्तस्य च द्वादशी तुलायामिति द्विराषाढ़समाप्तिवचनमपि न मूलान्तरमाहरतीति सर्व्वथा कल्पनागौरवाय। यदि 'आभाके'-त्यादिपदानि चान्द्रे गौण्या लाक्षणिक्या वाद्वृत्त्या वर्त्तन्ते, तदपि न दोषाय।* उक्तं हि भाष्यकारेण—'लक्षणापि हि लौकिक्ये

---

* आगामिवत्सरे इति। एतत्तु श्रावणादित्रिकाधिमासे। मिथुनोपक्रान्तस्य मिथुनस्थरव्यारब्धचान्द्राषाढ़स्य शुक्लद्वादशी। मिथुनान्ते वा इति वात्र चार्थे। मिथुनान्ते कर्कटादाविति, कर्कटस्य आदिसम्बन्धे। तदेव विवृणोति, संक्रान्तिदिने। वाकारात् तत्परतौ वा इति कल्पान्तरं पूर्व्ववाकारेण समुच्चितम्। यद्वचनं—"सैंहे कान्ये च पक्षौ चे"दिति वचनम्। सिंहोपक्रान्तस्य सिंहस्थरव्यारब्धस्य। कन्योपक्रान्तस्य कन्यास्थरव्यारब्धस्य। दुर्गोत्थानाय दुर्गोत्सवार्थं चान्द्राश्विनपरिग्रहादिति। तथाच—

"अष्टमप्याश्विने षष्ठ्यां सायाह्ने बोधयाम्यतः" इति।

"प्रतिसंवत्सरं कुर्य्यात् स्थापनञ्च विसर्ज्जनम्" इत्यादि नानावचनेषु प्रतिसंवत्सरकर्त्तव्यत्वश्रुतेः सौरपरत्वे कदाचित्तत्तिथेरप्राप्तौ बाधः स्यादिति भावः। न मूलान्तरमावहतीति तथाच सौरपरिग्रहे गौरवदोषोऽत्र गरीयानिति भावः। गौण्या लाक्षणिक्येति। शक्यस्य सादृश्यात्मकः सम्बन्धी गुणः, तदधीना या लक्षणा सा गौणी तया गौण्येति। पदपदार्थसम्बन्धी वृत्तिः। तथाच भट्टाचार्य्यः—"सङ्केतो लक्षणा चार्थे पदवृत्तिः"। ननु चान्द्रपरत्वे लक्षणा स्यादित्यत आह तदपि न दोषाय इति। तथाच—

"शेते विष्णुः सदाषाढ़े" इत्यादि।

"प्रतिसंवत्सरञ्चैव स्थापनञ्च विसर्ज्जन"मित्यादि नानावचनानुपपत्तिमूलत्वादियं लक्षणा न दूषणावहा इति भावः।

बह्वोऽप्रसिद्धकल्पने'ति(१)। अतएव 'वेदमधीत्य स्नायात्' न मुख्य-स्नानपदानुरोधेन इदमदृष्टार्थं स्नानं विधीयते कल्पनागौरवात्। किन्त्वर्थ्यस्नानादिसकलब्रह्मचारिधर्म्मनिवृत्तिमेव लक्षणा ब्रवीति पूर्व्वपक्षन्यायमूलत्वमुक्तम्, अदृष्टकल्पनाभयादेव, 'धान्यमसी'त्यत्र धान्यपदस्य लक्षणया तण्डुलपरत्वं वर्णितम्। तस्मादमुख्यत्वेऽपि चान्द्रेष्वेवाषाढ़ादि'ष्वाभाका' इति वचनेन शयनपार्श्वपरिवृत्तिदेवोत्थानानि विधीयन्ते। एतद्विधिमूलान्येवापराणि पञ्चदशवचनान्यनुष्ठानं स्पष्टीकर्त्तुं न पुनरन्यमूलानि। एवं 'सिंहगते दिनकर' इत्यादिना सिंहस्थभास्करोपक्रान्ते प्रतिपदादिके चान्द्रे भाद्रे शक्रोत्सवः। दीक्षितेन उक्तं, सिंहगते सति यः सितपक्षे श्रवणाद्यपादः तत्र तदुत्थानं स च कन्यास्थे यः सितपक्षीयः श्रवणाद्यपादः सोऽपि भणितुं शक्यते। तस्यापि तद्गमनोत्तरत्वादिति तदयुक्तं सोऽपि भणितुमित्यन्योऽपीत्यविशेषकं स्यात्। राश्यन्तरश्रुतिश्चावगतस्य सिंहस्य बाध एव स्यात्।

तथा।

"ऋक्षत्रये तु मूलादौ नवम्यामाश्विने सिते।
चण्डिकामुपहारैस्तु पूजयेद्राष्ट्रवृद्धये॥"

अत्राप्याश्विनपदं चान्द्रपरम्। * अतो लाघवार्थं "मिथुनस्थे

(१) लौकिकी हि लक्षणा इतोऽप्रसिद्धकल्पनेति मू पु पाठः।

* अत्र लक्षणाया अदुष्टत्वे भाष्यकारसंवादमाह—"उक्तं हीति" "लक्षणापि हीति" इत्यादि। यत एव प्रामाणिकी लक्षणा न दूषणावहा अतएव इत्यर्थः। "वेदमधीत्य

स्नायात्" इत्यादि। मुख्यस्नानपदानुरोधेन स्नायादित्यस्य मुख्यार्थानुरोधेन इत्यर्थः। अदृष्टार्थस्नानं वैधस्नानम्। कल्पनागौरवादिति। वेदमधीत्य इत्यनेन प्राप्तसमावर्त्तनस्नानमपहाय वैधस्नानकल्पने गौरवमेवेति भावः। लक्षणाफलमाह, "किन्त्वर्थ्यस्नानादी"-त्यादि, ब्रह्मचारिधर्म्मनिवृत्तिमेव लक्षणा ब्रवीतीति। तथाच गोभिलः—अथाप्लवनम्। अथ व्रतानन्तरम् आप्लवनं स्नानं कुर्य्यादिति शेषः। उत्तरतः पुरस्ताद्वाचार्य्यकुलस्य परिव्रतं भवति। आचार्य्यगृहादुत्तरस्यां वा स्नानार्थमावृतं स्नानं कुर्य्यात्। अत्र प्रागग्रेषु दर्भेषु उदगाचार्य्य उपविशति। तत्रावृते उदक् उदङ्मुखः। प्राक् ब्रह्मचार्य्युदगग्रेषु। प्राक् प्राङ्मुखः उपविशतीत्यन्वयः। सर्व्वौषधिविकीर्णाभिरद्भिर्गन्धवतीभिः शीतोष्णाभिराचार्य्योऽभिषिञ्चेत्। सर्व्वौषधयश्च—व्रीहयः शालयो मुद्गा गोधूमाः सर्षपास्तिलाः। यवाश्चौषधयः सप्त विपदो घ्नन्ति धारिताः इति छन्दोगपरिशिष्टोक्तास्ताभिः सह या आपो विकीर्णा विपक्वा उष्णीकृतास्ताः सर्व्वौषधिविकीर्णास्ताभिर्गन्धवतीभिश्चन्दनादिगन्धद्रव्ययुक्ताभिः शीतोदकमिश्रिताभिरिति भट्टभाष्यम्। उपयातायार्घ्यमिति कौथुमीयाः। उपयाताया-चार्य्यसमीपमागतायार्घ्यं देयमिति कौथुमीया आचार्य्या आहुः। तथाच यथा—"गङ्गायां कोष" इत्यादौ सत्यपावनेत्यादिगङ्गाधर्म्मप्राप्त्यर्थं लक्षणा, तद्वत् अत्रापीति भावः। अपराणीति शक्रध्वजदुर्गोत्सवादीनि इत्यर्थः। पञ्चदश वचनानि पञ्चदश विषयाः। ते प्रागुक्ताः। न पुनरन्यमूलानि सौरार्थबोधमूलानि। सिंहस्थभास्करोपक्रान्ते सिंहस्थरविप्रारब्धे। मूलादौ मूलापूर्व्वाषाढ़ोत्तराषाढ़ासु, ऋक्षत्रये त्रिषु नक्षत्रेषु। सिते शुक्लपक्षे। नवम्यां महानवमीपर्य्यन्तेषु। तथाच—

"शक्रध्वजात् पञ्चयुते दशाहे मूलर्क्षयुक्ता सितसप्तमी या।
आरभ्य तस्यां दशमीञ्च यावत्प्रपूजयेत् पर्व्वतराजपुत्रीम् ॥" इति।

सप्तम्यां मूलयुक्तायां पत्रिकायाः प्रवेशनम्।
पूर्व्वाषाढ़ायुताष्टम्यां पूजाहोमाद्युपोषणम्।
उत्तरेण नवम्यान्तु बलिभिः पूजयेच्छिवाम् ॥

अत्र यावच्छब्दः सीमार्थे नाभिविधौ, तेन नवमीपर्य्यन्तं पूजा। चान्द्रपरं शुक्लप्रतिपदादिदर्शपर्य्यन्तमुख्यचान्द्रपरम्।

सहस्रांशौ स्नापये"दित्यादिषूपक्रान्ते चान्द्रे मासीत्यध्याहार एव न्याय्यः। "अधिमासेऽपि पतिते" इत्युत्कर्षनिमित्ते सत्यप्येष एवेति। नान्यथा इति* एतद्वचनान्नियमद्वयाविरोधाच्च "तस्मिन् शुक्ले सदेति" नियमोपपत्तिः। किञ्च सौराषाढ़ादिषु शयनादिकमिति वादिनो मेषवृषयोरधिमासे कथं शयनोत्कर्षः, मिथुने शयनस्य विहितत्वात् तस्य चामलिम्लुचत्वात्, "पतिते चाधिमास" इति वचनाच्चेत् न तदा कर्कटेऽप्यधिमासे कथं शक्रादीनामुत्कर्षं ब्रूषे ? पतित इत्यविशेषात् माधवाद्येषु षट्स्विति वचनाच्चेत्† न उत्तरत्रिकाधिमासेऽपि शयनोत्कर्षापत्तेः। कर्कटा-

---

* उपक्रान्ते चान्द्रे इति। तथाच "मिथुनस्थे सहस्रांशौ" इत्यत्र यथाश्रुतार्थमादाय सौरावगतिसत्त्वेऽपि नानावचनविरोधात् "मिथुनस्थे सहस्रांशौ" इत्यस्य मिथुनस्थरव्यारब्ध-चान्द्रे मासि इत्यध्याहारेण चान्द्रमासप्रतीतेर्न कुत्रापि विरोधः सम्भवतीति भावः। अधिमासनिपातेऽपीत्यादि न केवलं मलमासशून्यस्थले शयनादौ उत्कर्षनियमः। मलमास-स्थलेऽपि एष एव शयनादौ उत्कर्षनियम एव। सत्यपि उत्कर्षनिमित्ते। तथाच यत्र यत्रैव –

"विष्णुः स्वपिति कर्कटे" इति।

"आगामिनि तदा वर्षे कुलीरे माधवः स्वपेदिति।"

"कर्किण्यर्के हरौ सुप्ते शक्रध्वजक्रियाश्विने।

तुलायां बोधयेद्देवौ वृश्चिके तु जनार्दनम्॥"

इत्यादि विशेषवचनमास्ते, तत्रैव उत्कर्षनिमित्तता, नान्यत्रेति भावः।

† नियमद्वयाविरोधाच्चेति। माधवादित्रिकाधिमासे, कर्कटादौ हरिशयनादि-नियमस्य उत्तरत्रिकाधिमासे आगामिवर्षे कर्कटादौ हरिशयनादिनियमस्य चेति नियम-द्वयस्य अविरोधाच्चेत्यर्थः।

धिमासे शयनोत्कर्षे मलिम्लुचशयनापत्तेरपेक्षितत्वात्, मलिम्लुचे शयनमापद्येत इति चेत् न, वचनाददोषत्वात्। सिंहकन्ययोश्चाधिमासे सति शयनोत्कर्षे मलिम्लुचशयनापत्तेः परिहृतत्वाच्च,* "माधवाद्येषु षट्स्विति" "कृष्णपक्षे त्रयोदश्या"-

---

एतच्च—"तस्मिन् शुक्ले सदेत्यत्र" हेतुः।

कथं शयनोत्कर्षम्? शयनोत्कर्षं न सम्भवतीत्यर्थः। उत्कर्षप्राप्तिस्तु "शेते विष्णुः सदाषाढ़े" इत्यादिवचनात्। तदेवोपपादयति मिथुने शयनस्य विहितत्वात्। तथाच सौरवादिना "मिथुनस्थे सहस्रांशावित्यादि" विशेषवचनेन सौरघटितविधेः मेषवृषान्यतरमलमासे मिथुनगतचान्द्रमासस्य ज्यैष्ठत्वात् शयनादौ कल्पनीयतया उत्कर्षनिमित्तताप्रसक्तेरिति भावः। तस्य चामलिम्लुचत्वात् मेषवृषयोरन्यतरस्य मलमासत्वस्वीकारपक्षे तस्य मिथुनस्य च मलमासाप्रसक्तेः। "पतिते चाधिमासके इति," "प्राप्ते आषाढ़मासे तु सिनीवालीद्वयं यदा। द्विराषाढ़ः स विज्ञेयः पतिते चाधिमासके॥" इति वचनादित्यर्थः। शक्रादीनां शक्रोत्थानादीनाम्। उत्कर्षमिति भाद्रे तद्विधानात् पतिते इत्यविशेषात् पतिते चाधिमासके इत्यविशेषात्। "माधवाद्येषु षट्स्वेकमासि दर्शद्वयं यदा। द्विराषाढ़ः स विज्ञेयः शेतेऽत्र श्रावणेऽच्युतः॥" इति वचनादित्यर्थः। तथाच माधवादिषण्मासमध्ये अधिमासपाते श्रावणे हरिशयनविधानात् श्रावणे हरिशयने च कर्किण्यर्के इति वचनात् आश्विने शक्रोत्थानविधानादेव उत्कर्षसम्भव इति भावः।

† दूषयति उत्तरत्रिकाधिमासे श्रावणत्रिकाधिमासे इत्यर्थः। शयनोत्कर्षापत्तेरिति माधवाद्येषु षट्स्वेक इति वचनस्य यथाश्रुतार्थमादायेति शेषः। तथाच श्रावणमलमासे आषाढ़स्य मिथुनगतत्वात् शयने उत्कर्षाप्रसक्तेरिति भावः। कर्कटाधिमासे शयनोत्कर्षे इत्यादि तथाच माधवादिषण्मासमध्ये अधिमासपाते माधवाद्येषु षट्स्वेक इति वचनस्य यथाश्रुतार्थमादाय माधवादिषण्मासमध्ये अधिमासपाते श्रावणे हरिशयनरूपोत्कर्षस्वीकारे विष्णुः स्वपिति कर्कटे इति वचनात् मलीयश्रावणे शयनापत्तेरपेक्षासम्भव इति भावः। वचनाददोषत्वादिति माधवाद्येषु षट्स्वेक इति वचने सामान्यतो माधवादिषण्मासे मलमासे

मित्यादिवचनानां सामान्येन कर्कटशयनमुपदिशतामब्दान्तरीयकर्कटाभिप्रायेणाप्युपपत्तेः। न प्रथमवर्षीयकर्कटशयनविधायकत्वं वचनविरुद्धं युज्येत इति चेत् न। "मिथुनस्थे सहस्रांशौ" "अधिमासेऽपि पतित" इति अनयोर्विरोधस्य मेषवृषाधिमासपातेऽप्यविशेषात्* एतन्निमित्तस्य शयनोत्कर्षस्याब्दान्तरेऽपि सम्भवात्, अत्रापि न विरोधो विशिष्यत इति† चेत् न, उत्तरत्रि-

---

कर्कटे हरिशयनविधानेन वाचनिकत्वात् मलमासे हरिशयनेऽपि दोषाभावादित्यर्थः। सिंहकन्ययोरित्यादि सिंहकन्ययोरन्यतरस्य मलमासत्वे विष्णुः स्वपिति कर्कटे इति वचनात् शयनोत्कर्षेऽपि श्रावणस्य मलमासत्वाभावादेव मलमासशयनाप्रसक्तेरित्यर्थः।

* ननु उत्तरत्रिकाधिमासे हरिशयनोत्कर्षः सकलशिष्टाचारविरुद्धः कथं श्रावणादौ मलमासे शयनोत्कर्षः ब्रूषे इत्यत आह माधवाद्येषु षट्सु इति। "माधवाद्येषु षट्स्वेकमासि दर्शद्वयं यदा। द्विराषाढः स विज्ञेयः विष्णुः स्वपिति कर्कटे॥" इति कृष्णपक्षे त्रयोदश्यामित्यादि। कृष्णपक्षे त्रयोदश्यां कर्कटं याति भास्करः। द्विराषाढः स विज्ञेयः कुलीरे माधवः स्वपेदित्यादिनानावचनानां कर्कटे शयनमुपदिशतामिति तु नानावचनानां विशेषणम् अब्दान्तरीयकर्कटाभिप्रायेणाप्युपपत्तेरिति। "कन्यासिंहकुलीरेषु यदा दर्शद्वयं भवेत्। आगामिनि तदा वर्षे कुलीरे माधवः स्वपेत्॥" इति वचनात् वचनविरुद्धम्। आगामिनि तदा वर्षे इति वचनविरुद्धम्। मिथुनस्थे सहस्रांशाविति "मिथुनस्थे सहस्रांशौ स्वापयेन्मधुसूदनम्। तुलाराशिगते तस्मिन् पुनरुत्थापयेच्च तम्॥" इति एकं वचनम्। "अधिमासेऽपि पतिते एष एव विधिः स्मृतः। नान्यथा स्वापयेद्देवं न चैवोत्थापयेद्धरिम्॥" इत्यपरम् इत्यनयोर्विरोधस्येति। तथाच अधिमासनिपातेऽपि मिथुने हरिशयनविधानात् मेषवृषयोरन्यतरमासे मलमासपातेऽपि अधिमासाविशेषात् मिथुने हरिशयनप्रसक्तिः सम्भवतीति भावः।

† ननु मेषवृषान्यतरमासमलमासपातेऽपि, यदि मिथुनहरिशयनं स्यात्, तदा—

"माधवाद्येषु षट्स्वेकमासि दर्शद्वयं यदा।

द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥" इति वचन-

काधिमासेऽप्यविशेषात् । कर्कटशयनविधेरानर्थक्यादवश्यं तद्बाध इति चेत् समानमितरत्रापि अन्यत्राभिनिवेशात् । अथोच्यते ।

"प्रथमेऽह्नि द्वितीये वा शुक्ले मेषमियाद्रविः ।
द्विराषाढ़म्मते विष्णुः परं कर्कटके स्वपेत् ॥"

इति ऋष्यशृङ्गवचनं तस्य न्यायतया मेषपदमुपलक्षणीकृत्य वृष-मिथुनसंक्रान्तिरपि यदि प्रथमद्वितीययोरह्नोरित्यर्थः । प्रथम-मह्नः प्रतिपत्* । द्वितीयमह्नः द्वितीया । तदा मेषे वृषे चाधि-

---

बोधितो माधवाद्यधिमासनिमित्तककर्कटहरिशयनरूपोत्कर्षः कथं सङ्गच्छते ? इत्यत आह, एतन्निमित्तस्य शयनोत्कर्षस्य अब्दान्तरे सम्भवादिति । एतन्निमित्तस्य मेषवृषाद्यधिमासनिमित्तस्य अब्दान्तरे आगामिवर्षे, 'आगामिनि तदा वर्षे कुलीरे माधवः स्वपे'दित्येकवाक्यत्वात् । तथा च, 'अधिमासेऽपि पतिते एष एव विधिः स्मृतः' इति विशेषोक्त्या मेषवृषान्यतरमासाधिमासेऽपि तदब्द एव मिथुनहरिशयनस्यावश्यम्भावितया 'माधवादिषु षट्स्वेक' इति वचनबोधितस्य शयनोत्कर्षस्य अगत्या अब्दान्तरविषयत्वमिति भावः । एतत्तु परत्र अत्रापीत्यादौ हेतुः । तथाच कर्कटहरिशयनोत्कर्षस्य आगामिवर्षे चरितार्थत्वात्, अत्रापि मेषवृषान्यतरमासाधिमासेऽपि विरोधः । 'मिथुनस्थे सहस्रांशाविति' वचन-बोधितमिथुनहरिशयनस्वीकारे कर्कटहरिशयनोत्कर्षेण सह यो विरोध इत्यर्थः, स न विशिष्यते न प्राप्यते इत्यर्थः ।

* निषेधयति 'चेन्नेति' । उत्तरत्रिकाधिमासेऽप्यविशेषादिति विशेषाभावादित्यर्थः । तथाच यदि सामान्यत एव माधवादिमलमासे आगामिवर्षे कर्कटे हरिशयनोत्कर्षः स्वीक्रियते, तदा 'कन्यासिंहकुलीरेषु' इति विशेषवचनं व्यर्थं स्यादिति भावः । कर्कटशयनविधेः, 'अमावस्याद्वयं यत्र' इत्यादिनानावचनबोधितकर्कटशयनोत्कर्षविधे-रित्यर्थः । 'तद्बाधः' श्रावणादिमलमासे, 'मिथुनस्थे सहस्रांशा'विति वचनस्य विषय-सम्भवेन माधवादिमलमासे मिथुनहरिशयनस्यावश्यं बाधः स्वीकर्त्तव्यः । 'समानमितर-त्रापि अन्यत्राभिनिवेशा'दिति इतरत्रापि समानम् । तथाच, यथा कर्कटशयन-

मासपातात् कर्कटे शयनविधिः। अतएव मेषेऽधिमासे मिथुन-संक्रान्तिः षड़शीतिपदवाच्या चतुर्थ्याञ्चतुर्थ्यूर्द्ध्वं वा भवति। तेन;—

"वृषं त्यक्त्वा चतुर्थ्यूर्द्ध्वं षड़शीतिः सिते यदा।
तदा दैवविदा चिन्त्यं द्विराषाढ़प्रकल्पनम्॥" *

कर्कटे शयनकल्पनमित्यर्थः तदेतदसङ्गतम्, उपलक्षणतानिमित्तस्य न्यायस्याभावात्। भवता चानुपन्यासात् उपलक्षणत्वानुपपत्तेः। तस्मात् प्रथमे द्वितीये वेति गताश्विनेऽधिमासे तदा भवतीति तन्निमित्तं कर्कटशयनं ज्ञापयतीति। मेषपदस्य मुख्यानुरोधात् "वृषं त्यक्त्वा चतुर्थ्यूर्द्ध्वं" पञ्चम्यादिष्वित्यर्थः। तदपि गतवर्षास्वधिमासपात एवेति तदभिप्रायमूर्द्ध्वग्रहणञ्च पञ्चम्यादितिथिग्रहणार्थं, न च मेषवृषयोरधिमासे कदापि पञ्च-

---

विधेरानर्थक्यात् तद्बाधः, तथा तद्बाधात् कर्कटशयनविधेरानर्थक्यम् इति समानं तुल्यदोषकरमित्यर्थः। अन्यत्र एकत्रापि अभिनिवेशात् विनिगमनाभावादित्यर्थः। तुल्यन्यायतयेति मेषपदस्य वृषोपलक्षणाबीजं तुल्यन्यायता च यथा मेषमलमासे कर्कटहरिशयनं, तथा वृषमलमासेऽपीति। द्विराषाढ़स्तेति मलमासं विनापीत्यर्थः। 'प्रथमेऽह्नि' इत्यत्राहःपदश्रवणादाह, प्रथमद्वितीययोरह्नोरित्यर्थः। अहःपदस्य तिथिपरतामाह, प्रथमाहः प्रतिपदित्यादि।

* तदाचेति। यदा प्रतिपदि द्वितीयायां वा शुक्लायां मेषादिसंक्रान्तिसम्भवः तदैवेत्यर्थः। यत एव कर्कटे हरिशयनविधिरतएवेत्यर्थः। मेष इति वृषोपलक्षणार्थः। तथाच—'धनुर्मिथुनकन्यासु मीने च षड़शीतय' इति वचनात् शुक्लप्रतिपदि द्वितीयायां वा मेषवृषान्यतरसंक्रान्त्या अन्यतरमलमासे सति षड़शीतिपदवाच्या मिथुनसंक्रान्तिः, चतुर्थ्यां तदूर्द्ध्वपञ्चम्यां सम्भवतीत्यर्थः। द्विराषाढ़ः गौणद्विराषाढ़ इत्यर्थः। कर्कटे हरिशयनकल्पनमित्यर्थः। इति द्विराषाढ़निबन्धनकर्कटहरिशयनकल्पनमित्यर्थः।

ष्यादिषु मिथुनसंक्रान्तिसम्भवः। भवति तु प्रतिपदूर्द्ध्वमिति तथैव वक्तुमुचितम्, अतश्चतुर्थ्यूर्द्ध्वमिति वदन्* गतोत्तरत्रिकाधिमासमेव दर्शयति। किञ्च मेषवृषाधिमासविषयत्वेन वचनद्वयवर्णने,† "द्विराषाढ़स्मृते विष्णु"रित्यनुपपन्नं स्यात्। योऽस्तौकेन

* अथेत्यादि। कर्कटे हरिशयनकल्पनमित्यर्थः, इत्यन्तं यदुक्तं तदेतदसङ्गतम् अयौक्तिकमित्यर्थः। तुल्यन्यायस्याभावात् तुल्यन्यायतया इत्यनेनोक्तस्य न्यायस्याप्रसक्तेरित्यर्थः। तथाच वचने 'द्विराषाढ़स्मृते' मलमासं विना प्रथमे द्वितीये अह्नि, शुक्ले शुक्लपक्षे, रविः यदि मेषं मेषराशिमियात् सञ्चरेत्, तदा विष्णुः कर्कटे सौरश्रावणे स्वपेदित्यन्वयो वाच्यः, सम्भवति च। अत्र यदि आदौ मलमासस्योपस्थितिर्भवेत्तदा, यथा,—मेषे वैशाखमलमासे कर्कटे हरिशयनं तत्तुल्यन्यायतया वृषे ज्यैष्ठमलमासेऽपि 'तथेति' तुल्यन्यायपदस्य सार्थक्यं भवेत्। स एव असिद्धः, मलमासस्य उल्लेखाभावात्। प्रत्युत 'द्विराषाढ़स्मृते' इत्यनेन मलमासाभाव एवोपस्थितः। गताश्विने आश्विनान्ते पूर्व्वाब्दीयोत्तरत्रिकाधिमासे इत्यर्थः। तथाच पूर्व्वाब्दे उत्तरत्रिकाधिमासे सति तदुत्तरशुक्लप्रतिपदादौ रवेर्मेषगमनक्रमेण आषाढ़शुक्लपक्षस्य कर्कटे प्रवेशात् तत्रैव हरिशयनं निष्प्रत्यूहमेवेति भावः। 'चतुर्थ्यूर्द्ध्व'मिति वचनं 'वृषं त्यक्त्वा चतुर्थ्यूर्द्ध्व'मिति वचनम्।

† गतोत्तरत्रिकाधिमासमेव दर्शयति गताब्दीयोत्तरत्रिकाधिमासमेव दर्शयति। तथाच पूर्व्वाब्दे उत्तरत्रिकाधिमासे सति तदुत्तरं मिथुनसंक्रान्तिः षड़शीतिपदवाच्या चतुर्थ्यूर्द्धमेव सम्भवति। इदन्तु न सम्यक्, कदाचित्तिथिक्षीसतः सौरमासवृद्धौ च ज्यैष्ठमलमासेऽपि शुक्लपञ्चम्यां मिथुनसंक्रान्तिः सम्भवितुमर्हति। तथाहि यत्र पूर्व्वामावास्यान्त्यक्षणप्राक्क्षणे च वृषसंक्रान्तिः, ततः सौरज्यैष्ठस्योनत्रिंशद्दिवसे चन्द्रस्पर्शवशात् किञ्चिदमावास्या, ततः शुक्लप्रतिपत् रात्रिशेषे द्वितीया च, ततस्त्रिंशद्दिवसे द्वितीयारात्रौ तृतीयारम्भश्च, तत एकत्रिंशद्दिवसे तृतीया, रात्रौ चतुर्थ्यारम्भः, ततो द्वात्रिंशद्दिवसे पञ्चमीक्षणे षड़शीतिपदवाच्या मिथुनसंक्रान्तिश्च, अतो ज्यैष्ठमलमासे शुक्लपञ्चम्यां मिथुनसंक्रान्तिर्नानुचितेति। वचनद्वयवर्णने, 'वृषं त्यक्त्वा चतुर्थ्यूर्द्धमित्यस्य,' 'प्रथमेऽह्नि द्वितीये च' इत्यस्य च वचनद्वयस्य वर्णने।

किल द्विराषाढो व्याहृतः। एकः सौरो मिथुनराशिभोगात्मा मुख्य आषाढः, द्वितीयस्तु कर्कटभोग्योऽप्याषाढो देवशयनगुण-योगात्*। यद्वा कर्कटसंक्रान्तिचिह्नितश्चान्द्रो द्वितीयो मुख्य आषाढ इति द्विराषाढः। स च यद्यपि प्रतिसंवत्सरं भवति, तथाप्यधिमासे सत्येव देवशयनार्थं गृह्यमाणो द्वितीयोऽसावाषाढ इति। एवञ्चेत् पक्षद्वयेऽपि† द्विराषाढं विनेति न स्यात् कर्कटे शयने तद्गुणयोगेन कर्कटस्याप्याषाढत्वात् कर्कटसंक्रान्ति-चिह्नितत्वे चान्द्र एव वा शयनमित्युभयथापि द्विराषाढत्वमेवेति तद्विनैवेति न स्यात्। अतएव "द्विराषाढप्रकल्पन"मित्येतदप्य-नुपपन्नं, तदन्तरेऽपि तद्रूपत्वादेव द्विराषाढस्य कल्पनाभावात्

---

* अनुपपन्नं स्यादिति। तथाच 'द्विराषाढस्तत' इत्यनेन प्रतीतो मलमासाभावो न सङ्गच्छते इति भावः। कर्कटभोग्योऽपि कर्कटगतोऽपि। देवशयनगुणयोगादिति। तथाच—'मिथुनस्थे सहस्रांशौ स्वापयेन्मधुसूदन'मिति वचनेन योऽस्लौकमते मिथुनस्थ-रवित्वेन सौराषाढत्वेन सामान्यतो हरिशयनविधिः। मुख्यद्विराषाढस्थले तु—

"मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत्।
द्विराषाढः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥" इति विशेषविधि-महिम्ना कर्कटभोग्योऽपि मिथुनभोग्यत्वाभावेऽपि हरिशयनगुणयोगाद्गौण आषाढ इति भावः।

† हरिशयनादिगुणयोगाद्गौणताखीकारे गौरवादाह यद्वेति। कर्कटसंक्रान्ति-चिह्नितः कर्कटसंक्रान्त्युत्तरकर्कटस्थरविगतश्चान्द्राषाढः, द्वितीयः मुख्याषाढः सौराषाढः। द्वितीयः कर्कटगतश्चान्द्राषाढः। एवञ्चेत् हरिशयनार्थं कर्कटगतचान्द्राषाढस्य ग्रहणञ्चेत् पक्षद्वये हरिशयनगुणयोगयुक्त-कर्कटभोग्यगौणाषाढ-कर्कटसंक्रान्तिचिह्नितचान्द्राषाढ-रूप-पक्षद्वये इत्यर्थः।

अधिमासं विनेति वचनार्थस्तस्मिन् सत्येव प्रथमे द्वितीये चेति व्यवस्थितत्वात् द्विराषाढ़पदस्य चानर्थत्वापत्तेः*। अस्मन्मते तु मिथुनाधिमासे मुख्यो द्विराषाढ़ः द्वयोरेव चान्द्रयोः मिथुनोपक्रान्तत्वात् तन्मतेपि कर्कटे चान्द्राषाढ़े शयनम्। तेनैव कार्य्येण द्विराषाढ़कल्पनमिति सर्व्वमुपपन्नम्†। किञ्च—

"द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे।"

---

* द्विराषाढं विना मलमासं विना न स्यादिति। द्वितीयमासे हरिशयनमिति शेषः। कर्कटस्याषाढ़त्वात् गौणाषाढ़त्वात्। चान्द्र एव वा कर्कटगतचान्द्राषाढ़ एव। उभयथापि पक्षद्वयस्वीकारेऽपि द्विराषाढ़प्रकल्पनमित्यनुपपन्नमिति। तथाच यदि भवन्मते 'वृषं त्यक्त्वा' इति वचनं मलमासाभिप्रायकं भवेत्, तदा—

"वृषं त्यक्त्वा चतुर्थ्यूर्द्धं षड़शीतिः स्थिते यदा।

तदा दैवविदा चिन्त्यं द्विराषाढ़प्रकल्पन"मिति प्रकल्पनपदं न सङ्गच्छते। ज्यैष्ठमलमासे द्विराषाढ़स्य वास्तविकत्वादिति भावः। प्रकल्पनाभावात् द्विराषाढ़स्य वास्तविकत्वेन प्रकल्पनासम्भवादित्यर्थः। अधिमासं विनेति वचनार्थः। 'द्विराषाढ़स्मृते' इत्यर्थस्येति शेषः। तस्मिन् वचनार्थे सत्येव प्रथमे प्रतिपदि, द्वितीये च द्वितीयायाञ्च, द्विराषाढ़पदस्य व्यवस्थापितत्वात्।

'प्रथमेऽह्नि द्वितीये च शुक्ले मेषमियाद्रवि'रित्यनेन मलमासव्यवस्थापनात्। अन्यार्थत्वापत्तेः अन्यार्थकल्पनापत्तेश्चेत्यर्थः।

† स्वमतमाह, अस्मन्मते तु द्वयोरेव चान्द्रयोः एकस्य मिथुनगतस्य मलीभूतस्य, द्वितीयस्य कर्कटगतस्य शुद्धस्य चान्द्राषाढ़स्य च। मिथुनोपक्रान्तत्वात् मिथुनस्थरव्यारब्धत्वात्। तन्मतेऽपि तदब्दीयमलमासं विनापि पूर्व्वाब्दीयोत्तरचिकाधिमासपातेऽपि कर्कटे कर्कटगतचान्द्राषाढ़े द्विराषाढ़कल्पनं गौणद्विराषाढ़कल्पनं, 'वृषं त्यक्त्वा' इति वचने इति शेषः। सर्व्वमुपपन्नं द्विराषाढ़प्रकल्पनमिति 'द्विराषाढ़स्मृते' इति चोपपन्नम्।

इति द्विराषाढ़त्वं विष्णोः कर्कटस्वापनिमित्तमवगम्यते। कर्कटशयने द्विराषाढ़त्वे विपरीतो हेतुसद्भावः स्यात्, तदा च प्रतिवचनं द्विराषाढ़कीर्त्तनं मुनीनामफलं स्यात्। अस्मन्मते तु मुख्यद्विराषाढ़ात् कर्कटे चान्द्राषाढ़प्राप्तेस्तत्र शयनम्। एवं मेषवृषयोरप्यधिमासे तदनन्तरितकर्कटे चान्द्राषाढ़प्राप्तिः। उत्तरत्रिके चाधिमासे तदादिवत्सरशेषे कर्कटे चान्द्राषाढ़प्राप्तिरिति तद्गुणयोगेन मिथुनेतराधिमासे गौणद्विराषाढ़स्तेन मुख्यस्य गौणस्य च कर्कटे चान्द्राषाढ़प्राप्तिमुखेन कर्कटशयनहेतुत्वात् तत्कीर्त्तनमुपयोगि, यस्मात् कर्कटे चान्द्राषाढ़प्राप्त्या द्विराषाढ़स्तस्मात् विष्णुः कर्कटे स्वपितीत्यर्थः। किञ्च सिंहे चाधिमासपाते योग्लोकमतेऽपि मिथुन एव देवस्य सुप्तत्वात्।

"कर्किण्यर्के हरौ सुप्ते शक्रध्वजक्रियाश्विने।"

इत्यस्याप्रवृत्तेरन्यस्य शक्रोत्सवरचनस्यादर्शनात् कथं तदुत्कर्षः। न च सिंहस्य मलिम्लुचत्वे सकलकर्म्मानर्हत्वादुत्कर्ष इति वाच्यम्। यतः—

"सूर्य्येण लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः।
तत्र यद्विहितं कर्म्म उत्तरे मासि कारयेत्॥"

इत्यादि वचनानाञ्चान्द्रमासविहितस्य कर्म्मणः पूर्व्वचान्द्रमलिम्लुचतयोत्तरचान्द्रे व्यवस्थितिपरत्वात्, तत्रेति पूर्व्वोक्तचान्द्रपरामर्शात्। सौरे तु विहितस्यानवगतचान्द्रसम्बन्धस्य सोऽपि विधातव्यो व्यवस्था चोत्तरत्र कर्त्तव्येति तद्विकल्पः स्यात्। तस्मात्तुलाधिमासे सुखरात्रिरिव उत्कर्षः सिंहाधिमासे शक्रस्य युक्तः

एवं कन्यायामधिमासे दुर्गायास्तुलाधिमासे च देवोत्थानस्य कथमुत्कर्षः। यद्येतानि नित्यानि तदा "नित्यनैमित्तिकं कुर्य्या"दिति वचनान्मलिम्लुचेऽपि कार्य्याणि काम्यानि चेत् "काम्या इष्टीर्विवर्जयेत्" इति लोप एव स्यात् न तूत्तर एतत्क्रियावचनाभावात्। अतएव स्वल्प एव ग्रन्थे योग्लौकेनोक्तं सिंहाधिमासेऽपि न शक्रक्रियानिवृत्तिः* नैमित्तिकत्वेन मलिम्लुचेऽपि तत्प्राप्तिरित्यादि एवञ्च ग्रन्थभेदेन शक्रस्यैवोत्कर्षाभिधानं परस्परविरुद्धत्वाभिधानमपि योग्लौकस्य यदपि—

"अधिमासनिपाते तु क्रमादिन्द्राम्बिकाहरीन्।
कन्यातुलावृश्चिकेषु नृप उत्थापयेद्ध्रुवम्॥" इति वचनं

तदपि तन्मते पूर्व्वचिकाधिमासे "कर्कटे शयने वृत्ते"

"कर्किण्यर्के हरौ सुप्ते शक्रध्वजक्रियाश्विने"

---

* दोषान्तरमाह किञ्चेति। द्विराषाढ़ः स विज्ञेय इति, मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत्। द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे इति, कर्कटशयने द्विराषाढ़त्वे कर्कटशयनमात्रार्थं द्विराषाढ़त्वकल्पने हेतुहेतुमद्भावः कार्य्यकारणभावः। तदेव दर्शयति तदाच इत्यादि। तद्गुणयोगेन आषाढ़ाव्यवहितोत्तरत्वविशिष्टकर्कटगतचान्द्राषाढ़त्वावच्छिन्नशक्रस्य कर्कटगतचान्द्राषाढ़त्वगुणयोगेनेत्यर्थः। मुखेन द्वारेण तदुत्कर्षः सिंहाधिमासे आश्विनशक्रध्वजोत्कर्षः। सौरे तु विहितस्य सौरवादिमते सौरमासविहितस्य अनवगतचान्द्रसम्बन्धस्य अप्राप्तचान्द्रसम्बन्धस्य सोऽपि उत्कर्षोऽपि। तद्विकल्पः स्यात् वचनं विनेति शेषः। एतानि देवशयनादीनि नैमित्तिकत्वेनेति नित्यनैमित्तिकं कुर्य्यात् प्रयतः सन् मलिम्लुचे इति वचनात्। लोप एव स्यादिति काम्यकर्म्मणां मलमासे लोप एव स्यादित्यर्थः। उत्तरत्र उत्तरमासे एतत्क्रिया एतेषां काम्यकर्म्मणां करणम्। न शक्रक्रियानिवृत्तिः न शक्रोत्थानकर्म्मलोपः।

इत्यनेन समानविषयम्। अन्यथैतद्वचनबलात् कर्कटेऽप्यधिमासपाते शक्रोत्सवादीनामुत्कर्षं कुतो न भणसि ? सिंहे चाधिमासपाते दुर्गोत्सवादीनां कन्यायां वाधिमासे देवोत्थानोत्कर्षं कुतो न कुरुषे ? न ह्येतद्वचनं सिंहाधिमासे शक्रस्यैव न दुर्गायाः कन्याधिमासे दुर्गाया एव न देवोत्थानस्य कर्कटाधिमासे न कस्यचिदुत्कर्ष इत्याह। अतोऽविशेषात् सर्व्वमेवोत्कर्षेत। न वा किञ्चिदपीति "कर्किण्यर्के हरौ सुप्ते" इत्यनेन समानविषयत्वमप्यस्य भवतैव वाच्यं मूलश्रुत्यन्तरकल्पनापत्तेश्च। किञ्च सिंहाधिमासपाते शक्रोत्सवपार्श्वपरिवर्त्तनयोः कन्यायामुत्कर्षे प्रथममष्टम्यां दुर्गोत्सवः। तदनन्तरं द्वादश्यां शक्रोत्सवादिकमिति विपरीतक्रमापत्तिः। कन्यायामधिमासे दुर्गातः प्रागेव सप्तमीपर्य्यन्ते सूर्य्यान्तानामुत्थानम्। ततो दुर्गायास्तदनन्तरं द्वादश्यां तुलायां विष्णूत्थानमिति सर्व्वत्र क्रमलोपः स्यात्*। स्वयमेव

---

* नैमित्तिकत्वेनेति नित्यनैमित्तिकं कुर्य्यात् प्रयतः सन् मलिम्लुचे इति वचनादिति शेषः। उत्कर्षानुत्कर्षाभिधानादिति तथाच चान्द्रवादिग्रन्थकारमते उत्कर्षः सौरवादिग्रन्थकारमते अनुत्कर्ष इति भावः। समानविषयं समानविषयत्वं अनयोरिति शेषः तथाच क्रमादिन्द्राम्बिकाहरीन् कन्यातुलावृश्चिकेषु उत्थापयेत् कर्किण्यर्के इति वचनेनापि शक्रध्वजक्रिया आश्विने तुलायां देवीबोधनं वृश्चिके देवस्योत्थानं सुतरां समानविषयत्वमिति भावः। अन्यथा समानविषयत्वास्वीकारे। एतद्वचनबलात् अधिमासनिपाते तु क्रमादिन्द्राम्बिकाहरीनिति कन्यातुलावृश्चिकेषु नृप उत्थापयेद्ध्रुवमिति वचनबलात् नहीति एतद्वचनं नहि इत्याह इत्यन्वयः। सर्व्वं शक्रदुर्गादिकम्। न वा किञ्चिदपि न किमपीत्यर्थः। अस्य अधिमासनिपाते तु इत्यादिवचनस्य भवतैव वाच्यम् अवश्यं वाच्यम्। विपरीतक्रमापत्तिरिति तथाच दुर्गोत्सवात् पूर्व्वं शक्रोत्सवपार्श्वपरिवर्त्तौ सर्व्वतन्त्रसिद्धाविति भावः। दुर्गातः प्राक् दुर्गो-

योग्लौकिनोक्तं हरिशयनशक्रोत्सवपार्श्वपरिवर्त्तनदुर्गोत्थानविष्णू-त्थानानां पौर्व्वापर्य्यनियतत्वात् इत्यन्तस्तदपि स्मृतं वचनावगतश्च क्रमः ।

"शक्रध्वजोत्थापनञ्च विष्णोश्च परिवर्त्तनम् ।
मासद्वयेन निर्द्दिष्टं शयनाद्यकोविदैः ।
दुर्गायाश्च त्रिभिर्मासैरधिमासं विनैव तु ॥"

अनेन शक्रोत्थानात् परतो मासेन दुर्गोत्थानं दर्शितम् । तथा—

"अधिमासनिपाते तु क्रमादिन्द्राम्बिकाहरीन् ।
कन्यातुलाद्वश्चिकेषु नृप उत्थापयेद्ध्रुवम् ॥"

इत्यत्रापि कन्यातुलयोः शक्रदुर्गयोरुत्थानप्रतिपादनात् शक्रान्मासेनैव दुर्गोत्थानमवगम्यते । तस्य बाधः । तथा—

"आश्विने पौर्णमास्यान्तु चरेज्जागरणं निशि ।
कौमुदी सा समाख्याता कार्य्या लोकविभूतये ॥"

अस्यार्थः । सौराश्विने भवन्मते विहितत्वात् कन्यायामधिमासपाते कथमुत्कर्षो वचनाभावात् । न च दुर्गोत्कर्षात् परभूतायाः कौमुद्या अपि तदादिन्यायादुत्कर्षोऽग्निमारुतादूर्द्ध्वमनुयाजैश्चरन्तीतिवत् । यतो दुर्गोत्सवकौमुदीकन्यायाः पृथक्फलसम्बन्धेन भिन्नप्रयोगत्वात् क्रमापेक्षाविरहात् अन्योन्यक्रमकल्पनानुपपत्तेः । अतएव काम्यासु नानेष्टिष्वङ्गवत् क्रतू-

---

त्सवात् पूर्व्वं सूर्य्योत्थानाम् इति सप्तमी भास्करस्योक्ता इति वचनात् तदनन्तरं सूर्य्योत्थानानन्तरं दुर्गाया उत्सव इति शेषः । क्रमलोपः स्यात् पूर्व्वापर्य्यक्रमलोपः स्यादित्यर्थः ।

नामानुपूर्व्व्यं*मिति क्रमकल्पनामाशङ्क्य न वाऽसम्बन्धादिति सूत्रेण जैमिनिना निराकृतम्। तथापि यदि स्यादिति भणसि

---

* शक्रोत्थानादीनां क्रमनियतत्वं वचनेनाऽपि साधयति शक्रध्वजस्थापनञ्चेत्यादि। अत्र मासद्वयेन त्रिभिर्मासैरित्याद्युपादानात् पौर्व्वापर्य्यक्रमनियतत्वं स्पष्टमवगम्यते। विहितत्वात् कौमुद्या विहितत्वात् कथमिति तथाच वचनाभावात् विशेषवचनाभावात् कथम् उत्कर्षः शुद्धाश्विनकर्त्तव्यता इति भावः। दुर्गोत्कर्षात् आश्विनमलमासे शुद्धाश्विनकर्त्तव्यतारूपदुर्गोत्सवोत्कर्षात्। परभूताया दुर्गोत्सवात् परभूताया कौमुद्याः कोजागरपूर्णिमायाः तदादिन्यायात् स आदिर्यस्य तदादिः स एव न्यायः तदादिन्यायः तस्मात्। अग्निमारुतादूर्द्ध्वमनुयाजैश्चरन्तीतिवदिति मीमांसादर्शनस्य चतुर्थाध्यायीयतृतीयपादे। अनुयाजादीनामग्निमारुतोर्द्धकालताधिकरणं निर्णीतम्। अनुत्पत्तौ तु कालः स्यात् प्रयोजनेन सम्बन्धात् (३६)। ज्योतिष्टोमे श्रूयते अग्निमारुतादूर्द्ध्वम् अनुयाजैश्चरन्ति। प्रहृत्य परिधीन् जुहोति हारियोजनम् इति। तत्र सन्देहः किम् अङ्गं विधीयते उत काल इति। अङ्गविधाने श्रुतिः, कालविधाने लक्षणा, तस्मादङ्गविधानमिति प्राप्ते ब्रूमः अनुत्पत्तिवाक्ये कालः स्यात् अग्निमारुतं सोमाङ्गम् अनुयाजाः पश्वङ्गं, तत्र न तयोः परस्परेण सम्बन्धः। तथा परिधयः पश्वङ्गं हारियोजनम् अन्यदेवप्रधानम्। अनुयाजः आग्निमारुतञ्च प्राप्तम्, आनन्तर्य्यमेव तयोर्न प्राप्तं तत् विधीयते। तथा हारियोजनस्य परिधिप्रहरणस्य च। एवञ्च सति न हारियोजनस्य परिधिप्रहरणेन कश्चित् उपकारः क्रियते हारियोजने न वा परिधिप्रहरणस्य। ननु परिधिप्रहरणस्य उपरिष्टाद्भावेन तस्य उपक्रियेत इति। उच्यते न हि उपरिभावार्थं परिधिप्रहरणम् अनुष्ठेयं विद्यते एव एतत्पश्वर्थं तस्मिंश्च सति तस्य उपरिभावो विद्यते एव इति तस्मात् कालार्थः सम्बन्ध इति। ४।३।१५ अं। ३६ सू.। पृ. ५०६। पृथक्फलसम्बन्धेन विभिन्नफलतया तयोः विभिन्नफलकामाधिकारिणा क्रियमाणत्वेन। भिन्नप्रयोगत्वात् अपूर्व्वभेदेन पृथङ्नियोज्यानुष्ठेयत्वात्। अन्योन्यक्रमकल्पनानुपपत्तेः परस्परक्रमाभिधानानुपपत्तेः। यत एव पृथक्फलसम्बन्धेन भिन्नप्रयोगत्वेन क्रमकल्पना अतएवेत्यर्थः काम्यासु नानेष्टिषु अङ्गवदिति क्रतूनां सोमरससाध्ययज्ञविशेषाणाम् आनुपूर्व्व्यं पूर्व्वमनुक्रम्य इत्यर्थः।

तदा सिंहाधिमासे शक्रोत्कर्षाद्दुर्गोत्थानोत्कर्षं कुतो न भणसि? कन्याधिमासे दुर्गोत्कर्षाद्देवोत्थानोत्कर्षं कथं न स्वीकुरुषे? कुतः प्रतीतक्रमबाधः?* किञ्च,—

"प्रतिपद्धनदस्योक्ता पवित्रारोहणे तिथिः।
श्रिया देव्या द्वितीया तु तिथीनामुत्तमा स्मृता॥
तृतीया तु भवान्याश्च चतुर्थी तत्सुतस्य च।
पञ्चमी सोमराजस्य षष्ठी प्रोक्ता गुहस्य च॥
सप्तमी भास्करस्योक्ता दुर्गायाश्चाष्टमी मता।
मातॄणान्नवमी प्रोक्ता दशमी वासुकेः स्मृता॥
एकादशी ऋषीणान्तु द्वादशी चक्रपाणिनः।
त्रयोदशी त्वनङ्गस्य शिवस्योक्ता चतुर्दशी।
मम चैव मुनिश्रेष्ठ पौर्णमासी तिथिः स्मृता॥"

एतैर्वचनैः पवित्रारोहणे यास्तिथयस्तत्तद्देवसम्बन्ध्योऽवगतास्तासु शयनादि।

"यस्य यस्य तु देवस्य यन्नक्षत्रं तिथिश्च याः।
तस्य देवस्य तस्मिंस्तु शयनावर्त्तनादिकम्॥"

---

* क्रमकल्पनाम् आशङ्क्य निषेधयति नवेति। निषेधकल्पने हेतुं दर्शयति असम्बन्धादिति सूत्रेणेति। तथाच जैमिनिसूत्रं पञ्चमाध्यायस्य प्रथमपादीयसूत्रं यथा,— 'असम्बन्धात्तु नोत्कर्षेत'। १२। अत्र भाष्यम्। न अग्निहोत्रस्य सान्तपनीया अङ्गं न सान्तपनीयाया वा अग्निहोत्रम्। तेन नासावग्निहोत्रस्य परस्तात् कर्त्तव्या। अतो न अग्निहोत्रं उत्क्रष्टव्यम्। तथाच पृथक्फलसम्बन्धे क्रमनियमो नास्तीति सूत्रस्य तात्पर्य्यम्। प्रतीतक्रमबाध इति, तथाच शक्रान्मासेन दुर्गोत्थानमवगम्यते इत्यनेन यः प्रतीतक्रमः तस्य बाध इति भावः।

पद्मपुराणवचनेन नियमाच्चान्द्रसौरयोरन्यतरस्यापि मासविशेष-स्येतरदेवशयनाद्यर्थमनिर्द्देशान्मासविशेषापेक्षायां "स्नापयेन्मधु-सूदन"मित्यादिषु मधुसूदनादिपदमुपलक्षणीकृत्य देवमात्रस्य शयनादौ मिथुनादिमासविधिर्वाच्यः*। उत्कर्षेऽप्येवं ततश्च मेषवृषयोरधिमासे विष्णुशयनस्योत्कर्षादन्येषामपि कर्कटे शयनं वाच्यं तदा चतुर्थीपञ्चम्योरन्यतरतिथौ प्रथमं वृश्चिके द्वादश्यादि-लाभात्(१) विष्णुप्रभृतीनामुत्थानं वृश्चिकशेषपक्षे च सूर्य्यान्तानामुत्थानमिति देवशयनपक्ष उत्थानपक्ष इत्यादिषु प्रसिद्धिरपि यथोक्तयुक्त्या बाध्यते। तस्मात् सर्व्वमाकुलितं कालज्ञंमन्येन। किञ्च प्रतिवचनं मुनीनां द्विराषाढ़पदप्रयोगोऽपि शयनादौ चान्द्र-परिग्रहान्न एव प्रयोजनान्तरानुपलम्भात्† सौराषाढ़स्य चानावृत्त-

(१) तदाच चतुर्थीपञ्चम्योरन्यतरतिथौ कर्कटसंक्रान्तौ कर्कटसंक्रान्तिः षष्ठीसप्तम्यो-रन्यतरचेति पाठ आदर्शद्वये दृश्यते वस्तुतस्तु तदा च चतुर्थीपञ्चम्योरन्यतरतिथौ मिथुन-संक्रान्तौ कर्कटसंक्रान्तिः षष्ठीसप्तम्योरन्यतरचेति पाठो युक्तः निरुक्तपाठद्वयं प्रामादिकम्।

* धनदस्य कुवेरस्य। श्रिया: लक्ष्म्याः। तृतीया तु भवान्याश्चेति तृतीयायां यक्षे-श्वर्यौ शङ्करेण समन्वितामित्यादि। तासु तिथिषु। तस्मिन् नक्षत्रे तिथौ च। इतरदेव-शयनाद्यर्थं धनदादिदेवशयनाद्यर्थम्। अनिर्द्देशात् मासविशेषस्य निर्द्देशाभावात्। मास-विशेषापेक्षायां धनदादीनां शयनादिकं कदा कर्त्तव्यमिति मासविशेषाकाङ्क्षायाम्। स्नापयेन्मधुसूदनमित्यादिषु मिथुनस्थे सहस्रांशौ स्नापयेन्मधुसूदनमित्यादिषु। देवमात्रस्य धनदादिदेवमात्रस्य।

† उत्कर्षेऽप्येवमिति मधुसूदनपदमुपलक्षणीकृत्य अन्येषामपि देवानां शयनादि-कल्पनम्। उत्कर्षस्थलं दर्शयति ततश्चेति। तदा चतुर्थीपञ्चम्योरन्यतरतिथौ प्रथमं वृश्चिके द्वादश्यादिलाभात् विष्णुप्रभृतीनामुत्थानमिति एकस्मिन् आदर्शपुस्तके पाठो दृश्यते। एतत्-

त्वात् हेतुमन्निगदोऽयं(१) यस्माद्द्विराषाढस्तस्मात् पूर्व्वो मलिम्लुचः। पूर्व्वमलिम्लुचत्वमन्तरेणाभावात्। तेन कर्कटस्थ चान्द्राषाढस्य प्रशस्तत्वात्तत्रैव देवशयनमिति वाच्यम्। "विष्णुः स्वपिति कर्कटे" इति कर्कटपदेन मुनयो निर्दिशन्ति। न हि "द्विराषाढः स विज्ञेयो विष्णुः स्वपित्या"षाढ इत्युक्तेः कर्कटगत-चान्द्राषाढावगतिर्भवतीति कर्कट इत्युक्तं सुव्यक्तीकरणाय तेनाय-

(१) हेतुमन्निगद इति लिपिकरप्रमादपाठः वस्तुतो हेतुवन्निगद इत्येव पाठः साधुः।

पाठस्वीकारे अन्यतरतिथौ इत्यंशस्य कुत्रापि अन्वयो न भवितुमर्हति। अपरादर्शद्वये तु तदा च चतुर्थीपञ्चम्योरन्यतरतिथौ कर्कटसंक्रान्तौ कर्कटसंक्रान्तिः षष्ठीसप्तम्योरन्यतरस्येति प्रतिपदादितिथिषु विहितं धनदादीनां शयनं कर्कटशेषपक्षे स्यात्। तदा शुक्लाष्टमी-मतिक्रम्य वृश्चिकसंक्रान्तौ प्रथमं वृश्चिके द्वादश्यादिलाभात् विष्णुप्रभृतीनामुत्थानमिति पाठो दृश्यते। अत्रापि चतुर्थीपञ्चम्योरन्यतरतिथौ कर्कटसंक्रान्तौ कर्कटसंक्रान्तिः षष्ठीसप्तम्यो-रन्यतरस्येति इत्यन्वयो नोपपद्यते अतोऽन्यतरतिथौ मिथुनसंक्रान्तौ कर्कटसंक्रान्तिः षष्ठी-सप्तम्योरन्यतरस्येति इत्येव पाठः साधुः निरुक्तपाठस्तु प्रामादिकः। धनदादीनां कुवेरादीनां कर्कटशेषपक्षे कर्कटगतदेवशयनपक्षोत्तरपक्षे प्रतिपद धनदस्योक्ता इत्यादिवचनादिति शेषः। तदा शुक्लाष्टमीमतिक्रम्येति शुक्लनवम्यादावित्यर्थः वृश्चिकसंक्रान्तौ सत्याम्। वृश्चिके सौरमार्गे। द्वादश्यादिलाभात् रेवतीनक्षत्रयुक्तद्वादशीदिवालाभे तत्रैव देवोत्थानं तदसम्भवे दिवाशयनादरेण द्वादशीभिन्नैकादश्यादिपौर्णमास्यन्ततिथिषु रेवतीशेषपादयोगेनोत्थानम्। वृश्चिकशेषपक्षे च सूर्य्यान्तानामुत्थानमिति प्रसिद्धिरपि बाध्यते अप्रसिद्ध एवेत्यर्थः। तथाच सौरे कदाचिन्मिथेरप्राप्ता शेते विष्णुः सदाषाढे इति प्रसिद्धिबाधः सुघट एवेति भावः। कालज्ञंमन्येन कालं जानाति कालज्ञं मन्यते इति कालज्ञंमन्येन। सर्व्वमाकुलितं मावधारितम्। प्रतिवचनं वचनं वचनं प्रति प्रतिवचनम्। शयनादौ चान्द्रपरिग्रहार्थमेव चान्द्राषाढादौ शयनादिविधानार्थमेव। प्रयोजनान्तरानुपलम्भात् अन्यत् प्रयोजनं प्रयो-जनान्तरं तदनुपलम्भात् अदर्शनात्।

मस्यार्थः। कर्कटे योऽयमाषाढ़श्चान्द्रस्तत्र विष्णुः स्वपिति कन्यातुलावृश्चिकेष्वित्येवमादिष्वपीत्यमेव योजना कार्य्या। अत्र कर्कटादिभिरमलिम्लुचानामाषाढ़ादीनामुपलच्चितत्वात् मिथुनादिष्वपि तन्मासीयैकदेशतिथिषु शयनादिकमविरुद्धमेवं न कल्पनागौरवं न व्यतिक्रमो* न च देवशयनादिपच्चप्रसिद्धिबाधः।

---

* सौराषाढ़स्य चानाहतत्वादिति तथाच सौरमासस्य रव्येकराशिभोगात्मककालतया द्वित्वासम्भवात् द्विराषाढ़त्वं न सम्भवतीति भावः। हेतुवन्निगदोऽयमिति हेतुवन्निगद्यते इति हेतुवन्निगदः। तदधिकरणन्तु प्रमाणलच्चणे यथा शूर्पेण जुहोति तेन ह्यन्नं क्रियते इत्यादि। भट्टवार्त्तिकेऽपि हेतुवन्निगद्यन्ते हि शब्दादिभिर्न तु परमार्थहेतव इत्युक्तम्। अत्र यन्मतुवल्लिखितं तत्प्रमादकृतमिति मलमासतत्त्वे रघुनन्दन आह स्म। तदुपपादयति यस्मादित्यादि। तेन कर्कटस्य चान्द्राषाढ़स्य कर्कटगतस्य चान्द्राषाढ़स्य प्रशस्तत्वात् पूर्व्वो मलिम्लुचो ज्ञेयो द्वितीयश्चोत्तमः स्मृत इत्यनेनोत्तमत्वेन शुद्धत्वाभिधानात्। कर्कटपदेन मुनयो निर्द्दिशन्ति कर्कटगतचान्द्राषाढ़मिति शेषः। आषाढ़ इत्युक्तः इति द्विराषाढ़पदेन आषाढ़ इत्युक्तेऽपि। कर्कटगतचान्द्राषाढ़ावगतिर्न भवतीति नहि इत्यनेन सम्बन्धः तथाच 'द्विराषाढ़ः स विज्ञेय' इत्यनेन आषाढ़ावगतिमात्रं नहि कर्कटगताषाढ़ावगतिर्भवति इति हेतोः कर्कट इत्युक्तम्। सुव्यक्तीकरणाय कर्कटगतचान्द्राषाढ़व्यक्तीकरणाय। अयं वक्ष्यमाणो अर्थः कर्कटे योऽयमाषाढ़ः चान्द्रः कर्कटगतो योऽयं चान्द्राषाढ़स्तत्र विष्णुः स्वपिति। इत्यमेव योजना कार्य्या चान्द्रमासे योजना कार्य्या। तथाच कन्यागतचान्द्रभाद्रे शक्रोत्थानं तुलागतचान्द्राश्विने दुर्गोत्सवः वृश्चिकगतचान्द्रकार्त्तिके हरेरुत्थानञ्च। अत्र कर्कटादिभिः विष्णुः स्वपिति कर्कटे इत्यादिकर्कटादिपदैः। अमलिम्लुचानां शुद्धानाम् आषाढ़ादीनामुपलच्चितत्वात् बोधितत्वात्। मिथुनादिष्वपि तन्मासीयैकदेशतिथिषु मिथुनस्थे सहस्रांशावित्यादिवचनबोधितमिथुनादिष्वपि तच्चान्द्रमासीयद्वादश्यादिकपच्चस्थतिथिषु इत्यर्थः। न व्यतिक्रम इति तथाच शयनादेः सौरघटितत्वे कदाचित्तिथेरप्राप्तौ व्यतिक्रमो भवतीति भावः।

तत्र सङ्ग्रहश्लोकाः आषाढ़ादिपदानां यद्यपि रविमासमात्रवचनत्वं चान्द्रेषु गौणत्वं सौरे न तथापि शयनादौ गौणस्य हि सौम्यस्य ग्रहणे सति मूलकल्पना लघ्वी सौरे पुनरतिगुर्व्वी श्रेयान् गौणस्ततो मुख्यात्। सौरे शयनादिविधौ कल्प्या विधयो भवन्ति पञ्चदश। चान्द्रमतादप्यधिका इति शयनादौ न सौरः स्यात्। धनदादीनां प्रतिपत्प्रभृतिषु नियतक्रमं हि शयनादि। सौरे तद्बाधः स्यात्। प्रसिद्धिबाधश्च पक्षस्य। चान्द्रे शयनाद्यर्थं सुरपतिदुर्गोत्सवार्थमिति पञ्च श्रुतयः सौरसमाना नापरमेकं किमप्यधिकम्*। चान्द्रे न क्रमबाधः। प्रसिद्धिबाधो न

---

* न च देवशयनादिपक्षप्रसिद्धिबाध इति तथाच चान्द्राषाढ़ादौ सर्व्वदैव शयनादितिथेः प्राप्तिसम्भवात् सौर इव कदाचिदप्यप्राप्तिशङ्काविरहात् शेते विष्णुः सदाषाढ़े इत्यादेः प्रसिद्धिबाधो न घटते इति भावः। सूर्य्यान्तानामुत्थानमिति देवशयनपक्ष उत्थानपक्ष इत्यादिषु प्रसिद्धिरपि यथोक्तयुक्त्या बाध्यते इति प्रागुक्तम् इदानीन्तु चान्द्रपक्षे न च देवशयनादिप्रसिद्धिबाध इत्युक्तम्। रविमाससमात्रवचनत्वं सौरमाससमात्रवाचकत्वम्। सौरे न इति पाठेः सौरे न गौणत्वं सौरो न इति पाठे तु सौरो न गौण इत्यर्थः। गौणस्य हि सौम्यस्य ग्रहणे गौणस्य हि सौम्यस्य सोमसम्बन्धिनः चान्द्रस्य ग्रहणे सति। सौरे पुनरतिगुर्व्वीति पञ्चदशश्रुतिकल्पनापत्तेरित्युक्तं प्राक् पश्चादपि। चान्द्रमतादप्यधिका इति शयनादौ न सौरः स्यादिति चान्द्रे शयनादिविधिकल्पनादपि अधिका श्रुतिकल्पना सौरे इति शेषः। इति हेतौ अस्मात् कारणात् शयनादौ न सौरः कल्पनीयः स्यादित्यर्थः। धनदादीनां कुबेरादीनाम्। प्रतिपत्प्रभृतिषु तिथिषु नियतक्रमं हि शयनादि हि यतः शयनादि नियतक्रमं चान्द्रमासे शयनादिविधौ सर्व्वदा तिथिप्राप्त्या क्रमबाधो नास्तीति भावः। सौरे तद्बाधः स्यात् तथाच सौरे मिथुनादौ शयनादिविधौ कदाचित्तिथेरप्राप्तौ क्रमबाधः स्यात्। क्रमस्तु मैत्रनक्षत्रयुक्ताषाढ़द्वादश्यां शयनं ततः श्रवणनक्षत्रयुक्तभाद्रद्वादश्यां पार्श्वपरिवर्त्तनं ततः रेवतीनक्षत्रयुक्तकार्त्तिकद्वादश्याम् उत्थानञ्च। सौरविधौ तु

देवपक्षस्य इत्यविरोधाच्चान्द्रो गौणोऽपि हि मुख्यतो बलवान्। ये पुनरुभयं वाच्यं ब्रूते चान्द्रोऽथ केवलस्तेषाम् सुतरां सौम्य-ग्रहणं मुख्यत्वात् कल्पनाल्पत्वात्। तदयमर्थः सम्पद्यते यस्मि-न्मास्यधिमासस्तत्प्रभृत्यैवोत्तरसौरेषु पूर्व्वपूर्व्वचान्द्रप्राप्तेस्तत्रैव चान्द्रमासविहितानि कार्य्याणि,* तेन पूर्व्वत्रिकाधिमासे शयना-

---

मिथुनादित्ये मैत्रनक्षत्रयुक्तशुक्लद्वादश्यां शयनं ततः सिंहादित्ये श्रवणनक्षत्रयुक्तशुक्लद्वादश्यां पार्श्वपरिवर्त्तनम् ततः तुलादित्ये रेवतीनक्षत्रयुक्तशुक्लद्वादश्याम् उत्थानञ्च। अत्र यदि रविगतिवशात् न्यूनदिने सौरमाससमाप्तौ कदाचित् शुक्लद्वादशी न लभ्यते तदा शयना-देरभावात् क्रमबाधः स्यात्। क्रमबाधादेव कदाचिच्छयनादेरभावात् पक्षस्य देवपक्षस्य प्रसिद्धिबाधः सुतरामेव यथाक्रमेण शयनादेरभावे कुत्रापि देवपक्षस्य प्रसिद्धिर्न भवितु-मर्हति। चान्द्रे शयनाद्यर्थं शयनपार्श्वपरिवर्त्तनोत्थानार्थमिति त्रितयार्थम्। सुरपति-दुर्गोत्सवार्थं शक्रोत्थानदुर्गापूजाद्वयार्थमिति पञ्च श्रुतयः सौरसमानाः इति चान्द्रे यथा पञ्च श्रुतयः सौरेऽपि तथा इत्यर्थः। नापरमेकं किमप्यधिकमिति तथाच शयनपार्श्व-परिवर्त्तनोत्थानेषु शक्रोत्थानदुर्गोत्सवयोश्च चान्द्रत्वेन सौरत्वेन वा विधिकल्पने समानाः पञ्चैव विषयो भवन्ति नापरं किमप्यधिकं न्यूनं वेति भावः।

* चान्द्रे न क्रमबाध इत्यादि तथाच चान्द्रस्य त्रिंशत्तिथिघटितत्वेन सर्व्वदैव शयनादौ तिथिसम्भवात् क्रमबाधो न घटते क्रमबाधाभावादेव प्रसिद्धिबाधोऽपि नास्तीति भावः। ये पुनरुभयं वाच्यं ब्रुवते सौरशक्यत्वचान्द्रशक्यत्वमित्युभयं ब्रुवते मासादिपदस्येति शेषः। चान्द्रोऽथ केवल इति अथवा केवलचान्द्रशक्यत्वं ब्रुवते इति पूर्व्वेणानुषङ्गः। तेषां मते सौम्यग्रहणं चान्द्रग्रहणं मुख्यत्वात् चान्द्रशक्तिवादिनां मते इति शेषः। कल्पनाल्पत्वात् मास-पदस्य चान्द्रे शक्तिकल्पनायां लघुत्वात्। तदयमर्थः अयं वक्ष्यमाणोऽर्थः। तत्प्रभृत्येव मल-मासप्रभृत्येव उत्तरसौरेषु तन्मलमासोत्तरसौरमासेषु। पूर्व्वपूर्व्वचान्द्रप्राप्तेरिति तथाच यत्र आषाढ़े मलमासस्तदुत्तरसौरेषु मलीयाषाढ़ोत्तरकर्कटे चान्द्रशुद्धाषाढ़स्य गतत्वात्। तत्रैव श्रावणंढगतशुद्धाषाढ़ एव चान्द्रमासविहितानि हरिशयनादीनि कार्य्याणि कर्त्तव्यानीत्यर्थः।

द्युत्थानान्तं कर्कटादिवृश्चिकान्तेषु कार्य्यमुत्तरत्रिकाधिमासे तु शयनं मिथुन एव अधिमासात्प्रभृत्युत्कर्षः यत्पुनरमोघास्त्रबुद्ध्या तेन पूर्व्वत्रिकाधिमासे—

"अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति।
तस्मिन् शुक्ले सदा विष्णुस्तुलायामथ वृश्चिके॥
शुक्लपक्षे यदा भानुस्तुलां समधिरोहति।
उत्तिष्ठत्यशतो विष्णुः पश्चात् कृष्णाचतुर्द्दशी॥"

तदपि स्वविरोधिप्रथमवचनेन लक्ष्मीप्रबोधार्थममावास्यानन्तरित-शुक्लपक्षे तुलां गते रवौ वृश्चिकगते वा विष्णुर्निद्रां सदैव विमुञ्चतीति नियमात् कथं सदापदार्थस्य बाधः नियमे सति सदापदार्थोपपत्तिः न च शुक्लपक्ष इत्यस्य तर्हि का गतिरिति वाच्यं कृष्णपक्षचतुर्द्दश्युत्कर्षविधानार्थत्वाद्वचनस्य न ह्येतद्वचनं देवोत्थानपरभावितां सुखरात्रेराचष्टे। येन विरोधः स्यात्। अतो विभिन्नविषयत्वान्नोत्सर्गापवादन्यायः* प्राथमिकस्य सुखरात्रिदेवोत्थानयोः

---

* तदेव स्पष्टयति तेनेत्यादि। पूर्व्वत्रिकाधिमासे वैशाखाद्याषाढ़पर्य्यन्ताधिमासे। कर्कटादिवृश्चिकान्तेषु कर्कटे हरिशयनं कन्यायां पार्श्वपरिवर्त्तनं वृश्चिके उत्थानञ्च। उत्तरत्रिकाधिमासे तु श्रावणाद्याश्विनपर्य्यन्ताधिमासेषु हरिशयनं मिथुन एवेति श्रावणादिमलमासे मिथुन एव चान्द्राषाढ़समापनादिति भावः। अधिमासात्प्रभृत्युत्कर्षः मलमासोत्तरक्रियमाणपार्श्वपरिवर्त्तनादीनाम् उत्कर्ष एव चान्द्रभाद्रादौ विधानात्। अमोघास्त्रबुद्ध्या अव्यर्थयुक्त्या तेन यौग्लौकेन पूर्व्वत्रिकाधिमासे वैशाखादित्रिकमलमासे। तस्मिन् शुक्ले लक्ष्मीप्रबोधाधिकरणीभूतामावास्याया अव्यवहितोत्तरशुक्लपक्षे। स्वविरोधिप्रथमवचनेन शुक्लपक्षे यदा भानुरित्याद्युत्तरवचनविरोधिना प्रथमवचनेन अमावास्यां तुलादित्ये इत्यादि-

पौर्व्वापर्य्यनियमप्रतिपादकत्वात्। द्वितीयस्य च विष्णूत्थानाच्चतुर्द्दश्यां नैमित्तिकपरभावप्रतिपादकत्वाद्बाधकाभावात्। अतो विल्वफलं वर्त्तुलं वंशो दीर्घतर इत्येतत्समानो विरोधः। न च कृष्णचतुर्द्दश्युत्कर्षात् सुखरात्रेरप्युत्कर्षो नियतक्रमत्वादेतयोरिति वाच्यं; शास्त्रेण क्रमनियमाभावात्। आर्थस्त्वसौ स च 'तस्मिन् शुक्ले सदा विष्णुरिति' वचनेन सुखरात्रिपरभूतशुक्लपक्षे देवोत्थानस्य नियमाद्बाध्यः। बाधं विना तावदस्य वर्णनमशक्यम्*।

---

प्रथमवचनेन। तुलां गते रवौ सौरकार्त्तिके वृश्चिकगते रवौ सौरमार्गे। तद्वीति सदापदार्थस्य सार्थक्याय लक्ष्मीप्रबोधानन्तरितशुक्लपक्षस्य विष्णूत्थाननियमपरत्वे शुक्लपक्ष इत्यस्य शुक्लपक्षे यदा भानुरिति वचनबोधितस्य हरेरुत्थानानन्तरं लक्ष्मीप्रबोधकथनस्य का गतिः कुत्र सार्थक्यम्। वचनस्य 'शुक्लपक्षे यदा भानुरिति' वचनस्य; एतद्वचनं 'शुक्लपक्षे यदा भानुरिति' वचनम्। देवोत्थानपरभावितां हरेरुत्थानानन्तरभाविताम्। तथाच एतद्वचनं सुखरात्रेः हरेरुत्थानानन्तरभावितां नाचष्टे न कथयतीत्यर्थः। विभिन्नविषयत्वात् अमावास्या तुलादित्ये इत्यादिप्रथमवचनेन लक्ष्मीप्रबोधानन्तरशुक्लपक्षे विष्णुप्रबोधस्योक्तत्वेन 'शुक्लपक्षे यदा भानुरिति' द्वितीयवचनेन कृष्णचतुर्द्दश्या विष्णुप्रबोधानन्तरभावित्वकथनेन च विभिन्नविषयत्वात्। नोत्सर्गापवादन्यायः तथाच एकविषय एव सामान्यविशेषन्यायावसरः यथा निराहारपदमुपवासपरम्।

* प्राथमिकस्य अमावास्यां तुलादित्ये इति प्रथमवचनस्य। सुखरात्रिदेवोत्थानयोः लक्ष्मीप्रबोधस्तदुत्तरं शुक्लपक्षनियतविष्णूत्थानञ्च तयोः पौर्व्वापर्य्यनियमप्रतिपादकत्वादित्यस्य प्राथमिकस्य इत्यनेन सम्बन्धः। द्वितीयस्य शुक्लपक्षे यदा भानुरित्यादि द्वितीयवचनस्य च विष्णूत्थानात् चतुर्द्दश्यां नैमित्तिकपरभावप्रतिपादकत्वादिति उत्तिष्ठत्यग्रतो विष्णुः पश्चात् कृष्णचतुर्द्दशीत्यनेन विष्णूत्थानादूर्द्ध्वं चतुर्द्दश्यां कृष्णचतुर्द्दश्याम्। नैमित्तिकपरभावप्रतिपादकत्वात् नैमित्तिक उत्तिष्ठत्यग्रतो विष्णुः पश्चात् कृष्णचतुर्द्दशीत्यनेन प्रतिपादितः यः परभावः परत्वं कृष्णचतुर्द्दशीवृत्तिविष्णूत्थानोत्तरवर्त्तित्वं तत्प्रतिपादकत्वादित्यस्य द्वितीयस्य चेति

तत्र सदेति शब्दयन्त्रितं नियमं न बाधितुं शक्यते प्रमाणबाधापत्तेः । न चार्थोऽपि नियमः कथं बाध्यतामस्यापि प्रमाणप्रतीतत्वादिति वाच्यं शब्दमूलत्वादर्थस्य शब्देन हि कार्त्तिककृष्णचतुर्द्दश्यां तत्कार्य्यविधानात् तुलादित्यामावास्यायां सुखरात्रिविधानाच्चतुर्द्दश्यमावास्याकर्म्मणोरर्थोऽयं क्रमो न शाब्दः । यदा पुनः शुक्लपक्षे तुलासंक्रान्तिनिमित्तेन चान्द्रकार्त्तिकचतुर्द्दश्यां तद्विहितं कर्म्म तदार्थप्रमाणस्याप्रवृत्तेः कस्य बाधः । प्रायिकमेव हि पौर्व्वापर्य्यमर्थरूपप्रमाणात् सिध्यति न च तस्यास्ति बाधः ।

---

सम्बन्धः । बाधकाभावादिति पूर्व्ववचनस्य लक्ष्मीप्रबोधविष्णूत्थानयोः पौर्व्वापर्य्यनियामकत्वेन द्वितीयवचनस्य च कृष्णचतुर्द्दशीमात्रस्य विष्णूत्थानात्पश्चाद्वर्त्तित्वमात्रप्रदर्शनेन च एकविषयत्वाभावेन पूर्व्वापरयोर्बाध्यबाधकत्वाभावादित्यर्थः । विभिन्नविषयतां दृष्टान्तेन दृढ़यति अत इति । समानो विरोध इति तथाच वर्त्तुलत्वस्य दीर्घतरत्वस्य च विरोधिपदार्थत्वेऽपि वर्त्तुलत्वस्य विल्वफलगतत्वेन दीर्घतरत्वस्य च वंशगतत्वेन च विभिन्नविषयतया यथा न विरोधस्तथा प्रकृतेऽपीति भावः । कृष्णचतुर्द्दश्युत्कर्षात् विष्णूत्थानोत्तरकर्त्तव्यतारूपोत्कर्षात् । सुखरात्रेरप्युत्कर्ष इति तथाच चतुर्द्दश्युत्तरतिथौ अमावास्यायां सुखरात्रेः कर्त्तव्यतया चतुर्द्दश्या उत्कर्षे सुखरात्रेरपि विष्णूत्थानोत्तरकर्त्तव्यतारूपोत्कर्षः सुतरां सिद्ध इति भावः । एतयोः चतुर्द्दश्यमावास्ययोरिति क्रमनियमाभावादिति पश्चात् कृष्णचतुर्द्दशीत्यनेन विष्णूत्थानादुत्तरवर्त्तित्वेन प्राप्तायाः कृष्णचतुर्द्दश्याः अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चतीति वचनबोधितामावास्यायाश्च शास्त्रेण केनापि शास्त्रेण पौर्व्वापर्य्यक्रमनियमस्यादर्शनादित्यर्थः । आर्थस्त्वसाविति अग्रतः पश्चादिति शब्दद्वयस्वरसलभ्यः असौ आर्थः विष्णूत्थानात् परकर्त्तव्यः सुखरात्र्युत्कर्षरूपः स च बाध्य इत्यग्रिमेणास्य सम्बन्धः । बाधं विनेति द्वितीयवचनबोधितस्य विष्णूत्थानात् परतः लक्ष्मीप्रबोधरूपसुखरात्र्युत्कर्षरूपार्थस्य बाधं विनेत्यर्थः । अस्य वर्णनं प्रथमवचनबोधितलक्ष्मीप्रबोधानन्तरविष्णूत्थानरूपनियमितार्थस्य निर्णय इत्यर्थः ।

ततश्च यदि तुलास्थ एव चतुर्द्दशीविहितं तस्यापि नैमित्तिकोत्कर्षवचनदर्शनान्नैमित्तिकेतरविषयत्वेन सामान्यशब्दस्योपसंहारः*। "सदेति" पदस्य नियमप्रतिपादकत्वात् सर्व्वथैव बाधः स्यात्। बाधाच्चोपसंहारः श्रेयान्। किञ्च सिंहेऽधिमासे शक्रस्य दुर्गानन्तरद्वादश्यामुत्थानं भणसि? कन्याधिमासे तुलायां दुर्गाष्टमीपूर्व्वसप्तम्यामेव सूर्य्योत्थानमित्यादिव्युत्क्रमाभि-

---

* तत्र सदेति तस्मिन् शुक्ले सदा विष्णुरिति शब्दयन्त्रितं साक्षाच्छब्दसाधितं नियमं लक्ष्मीप्रबोधानन्तरमेव विष्णूत्थानं कुर्य्यादित्येवंरूपम्। प्रमाणबाधापत्तेरिति तथाच प्रमाणसिद्धस्य बाधोऽन्याय्य इति भावः। ननु यथा तस्मिन् शुक्ले सदा विष्णुरित्यत्र सदापदात् लक्ष्मीप्रबोधानन्तरं शुक्लपक्षे विष्णूत्थाननियमः तथा उत्तिष्ठत्यग्रतः पश्चात् कृष्णचतुर्द्दशीति शब्दद्वयस्वरसलब्ध आर्थो नियम एव तत्कथं बाध्यताम् इत्याशङ्कते नचेति। प्रमाणप्रतीतत्वात् प्रमाणसापेक्षत्वात्। शब्दमूलत्वात् शब्दाधीनत्वात्। शब्देन हीति पश्चात् कृष्णचतुर्द्दशीति शब्देन हीत्यर्थः। कार्त्तिककृष्णचतुर्द्दश्यां कृष्णचतुर्द्दशीयुक्तामावास्यायाम्।

"अमावास्या यदा रात्रौ दिवा कृष्णचतुर्द्दशी।
पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिका॥"

इति वचनात्। एतदेव स्पष्टयति तुलादित्ये सुखरात्रिविधानात्। चतुर्द्दश्यमावास्याकर्म्मणोरर्थोऽयं क्रमः, चतुर्द्दशीयुक्तामावास्याकर्म्मणोरर्थोऽयं पश्चात् कृष्णचतुर्द्दशीति शब्दतात्पर्य्यार्थक्रमो न शाब्दः न शाब्दक्रमोऽयम्। 'उत्तिष्ठत्यग्रतो विष्णु'रितिवत् विष्णुप्रबोधात् परतो लक्ष्मीप्रबोधस्य स्पष्टशब्दतोऽनवगतेः। चान्द्रकार्त्तिकचतुर्द्दश्यां चान्द्रकार्त्तिकसम्बन्धिचतुर्द्दशीयुक्तामावास्यायाम्। तद्विहितं कर्म्म लक्ष्मीप्रबोधरूपकर्म्म विहितम्। तदा अर्थप्रमाणस्य पश्चात् कृष्णचतुर्द्दशीयुक्तामावास्या-लक्ष्मीप्रबोधरूपार्थप्रमाणस्य। अप्रवृत्तेरिति तथाच यदा शुक्लपक्षे तुलासंक्रान्तिः तदा आदौ लक्ष्मीप्रबोधः, पश्चात् वृश्चिके हरेरुत्थानम्। पश्चात् कृष्णचतुर्द्दशीत्यर्थक्रमस्य सुतरामप्रवृत्तिरिति भावः। पौर्व्वापर्य्यं लक्ष्मीप्रबोधानन्तरं हरेः प्रबोधस्य हरेः प्रबोधानन्तरं लक्ष्मीप्रबोधस्य च पौर्व्वापर्य्यम्। तस्य पौर्व्वापर्य्यस्य।

धायिनः* कथं कृष्णचतुर्द्दशीकर्म्मलक्ष्मीप्रबोधयोः पौर्व्वापौर्य्येऽर्थ-ग्रहः ? सर्व्वेषामर्थसिद्धत्वेनाविशेषात् । किञ्च "शुक्लपक्षे यदा भानु"रित्यस्य सामान्यप्रवृत्तत्वात् मेषवृषयोरधिमासेऽपि तुला-संक्रान्तेः शुक्लपक्ष एव भावात् तद्विषयत्वमेवास्य कुतो नेष्यते ? तयोरधिमासे कर्कटे देवशयने—

"कर्किण्यर्के हरौ सुप्ते शक्रध्वजक्रियाश्विने ।
तुलायां बोधयेद्देवीं वृश्चिके तु जनार्द्दनम् ॥"

इति वचनेन वृश्चिके देवोत्थानस्य विधानात् सौरकार्त्तिकचतु-र्द्दश्यां तत्कर्म्मविधानान्नास्त्यस्य विषय इति चेत् नाविधित्वादस्य वचनस्य उत्तरत्रिकेष्वधिमासे मिथुन एव शयने सति भवन्मते कर्कटशयनस्य वृश्चिकोत्थाननिमित्तस्याभावात् तुलायामेव

---

तुलास्थ एव तुलास्थसूर्य्य एव सौरकार्त्तिक एवेत्यर्थः । तस्यापि चतुर्द्दशीयुक्तामावास्याकर-णीयलक्ष्मीप्रबोधरूपकर्म्मणोऽपि नैमित्तिकोत्कर्षवचनदर्शनात् विष्णुप्रबोधोत्तरकर्त्तव्यरूप-वाचनिकोत्कर्षदर्शनात् । नैमित्तिकेतरविषयत्वेन वाचनिकेतरविषयत्वेन । सामान्यशब्दस्य 'तस्मिन् शुक्ले सदा विष्णु'रिति सामान्यशब्दस्य । उपसंहारः पश्चात् कृष्णचतुर्द्दश्यसत्त्वपक्ष एव लक्ष्मीप्रबोधानन्तरशुक्लपक्षनियतत्वेन हरेरुत्थानस्य सङ्कोचः ।

* सदापदस्य नियमपरत्वे प्रतिबन्धिं दर्शयति सर्व्वथैव बाधः स्यात् । बाधाच्चोप-संहारः श्रेयान् इति तथाच बाधस्वीकारे "उत्तिष्ठत्यग्रतो विष्णु"रित्यादिमुनिवचनान्तर-वैयर्थं स्यात् तदपेक्षया सामान्यशब्दस्य निरुक्तविशेषपरत्वेन सङ्कोच इति भावः । शक्रस्य शक्रध्वजस्य दुर्गानन्तरद्वादश्यां दुर्गोत्सवात् परतो द्वादश्याम् । व्युत्क्रमाभिधायिनः यथार्थ-क्रममन्यथाकृत्याभिधायिनः । तथाच शक्रोत्थानात् परतो दुर्गोत्सवः दुर्गाष्टम्याः परतः सप्तम्यां सूर्य्योत्थानञ्चेति यथार्थक्रमः वृश्चिकशेषपक्षे सूर्य्यान्तानामुत्थानमिति प्रागुक्तेरिति भावः ।

देवोत्थानात्तत्परभूता चतुर्द्दशी प्राप्ता एव किमनेन विधीयते? द्वेधा हि विधित्वमस्य भवति*। द्वयिके देवोत्थानस्य प्राप्तस्य

---

* कृष्णचतुर्द्दशीकर्म्मलक्ष्मीप्रबोधयोरिति। कृष्णचतुर्द्दशीकर्म्म, शिवालये दीपदानं जाह्नवीस्नानं चतुर्द्दशशाकभोजनादि च। यथा कृत्यचिन्तामणौ—

"तथा कृष्णचतुर्द्दश्यां तुलायां संस्थिते रवौ।
दीपं दत्त्वा महेशाय महेन्द्रत्वं प्रजायते॥
कुत्र चित्रगता भूता असिता या तु कार्त्तिके।
तस्यान्तु जाह्नवीस्नानात् सर्व्वं तरति दुष्कृतम्॥
शुक्लपक्षे यदा भानुस्तुलां समधिरोहति।
उत्तिष्ठत्यग्रतो विष्णुः पश्चात् कृष्णचतुर्द्दशीत्यादि॥"

पौर्व्वापर्य्यं अनुग्रहः, कृष्णचतुर्द्दशीकर्म्मलक्ष्मीप्रबोधयोः पौर्व्वापर्य्यस्वीकारः। तथाच—

"अमावास्या यदा रात्रौ दिवाभागे चतुर्द्दशी।
पूजनीया तदा लक्ष्मीर्विज्ञेया सुखरात्रिका॥"

इति वचने दिवावृत्तिचतुर्द्दशीयुक्तामावास्यायां रात्रौ सुखरात्रिकाविधानात् चतुर्द्दशीकर्म्म-शिवालयदीपदानादिलक्ष्मीप्रबोधरूपसुखरात्रिकयोः पौर्व्वापर्य्यं सुतरां सिद्धमिति भावः। "शुक्लपक्षे यदा भानुरित्यस्य," "शुक्लपक्षे यदा भानुस्तुलां समधिरोहति। उत्तिष्ठत्यग्रतो विष्णुः पश्चात् कृष्णचतुर्द्दशीति" वचनस्य सामान्यप्रवृत्तत्वात्, शुक्लपक्षे तु रवेस्तुलारोहण-मात्रेण प्रवृत्तत्वात्। भावात् सत्त्वात्। तद्विषयत्वमेव मेषवृषयोरधिमासविषयत्वमेव। अस्य वचनस्य। तत्कर्म्मविधानात् विष्णूत्थानानन्तरितकृष्णचतुर्द्दशीकर्म्मविधानात्। नास्त्यस्य विषयत्वं "शुक्लपक्षे यदा भानु"रित्यस्य वचनस्य विषयत्वं नास्तीत्यन्वयः। अविधित्वात् विधिप्रत्ययाभावेन विधेयत्वाभावात्। तथाच 'अधिरोहति,' 'उत्तिष्ठतो'त्याद्यर्थ-वादघटितत्वेन विधिर्न सम्भवतीति भावः। उत्तरत्रिकेऽधिमासे श्रावणादित्रिकाधिमासे। मिथुन एव शयने सति मिथुने चान्द्रमाससमापनात् द्वयिकोत्थाननिमित्तस्य इति कर्कट-शयनस्य विशेषणम्। तथाच—

तुलायामपकर्षविधानात्तुलायां वा प्राप्तायाश्चतुर्द्दश्या उत्कर्ष-विधानात् । तत्र योगीश्वरमते वृश्चिके चोत्थानप्रसक्तेः नापकर्ष-विधिः नापि चतुर्द्दश्युत्कर्षविधिः । शुक्लपक्षे तुलासंक्रान्तौ तस्मिन्नेव देवोत्थानाभिधानात् । अस्मन्मते तूत्तरत्रिकाधिमासे तुलोपक्रान्तचान्द्रकार्त्तिकशुक्लपक्षे वृश्चिकसमापनीये प्रहरति तन्मत एव दुर्भिक्षकालायाचितवृत्तिब्राह्मणवदनर्थकं वचनम् । तत्पक्षाद्भावेन चतुर्द्दश्याः प्राप्तत्वात् सोऽयमात्मीय एव वाणो भवन्तं प्रहरति । अस्मन्मते उत्तरत्रिकाधिमासे तुलोपक्रान्त-चान्द्रकार्त्तिकशुक्लपक्षे वृश्चिकसमापनीये "आभाका"वचनेन देवोत्थानस्य प्राप्तौ तस्यापकर्षो विधातुं न शक्यते, "आभाका" इत्यस्य बाधात् ।

"नान्यथा स्वापयेद्देवं न चैवोत्थापयेद्धरि"मिति "तस्मिन् शुक्ले सदेति" नियमस्य बाधापत्तेः । कोजागरपर-भावेन देवोत्थानावगतस्य पूर्व्वभावः स्यात् । दुर्गातश्च परभावे-नागतस्य सूर्य्योत्थानस्य पूर्व्वभावः स्यात् इत्यादिबहुतराणां शब्दादर्थतश्च प्रतिपन्नानां बाधापत्तेः चतुर्द्दश्या एवोत्कर्षविधिः । अतो योऽस्मौकीयममोघास्त्रं तमेव विनिहन्ति। यत्तु दीक्षितस्यात्र समाधानं यद्यपि चतुर्द्दश्याः परत एव वृश्चिके देवोत्थानं तथाप्य-

---

"कर्किण्यर्के हरौ सुप्ते शक्रध्वजक्रियाश्विने ।

तुलायां बोधयेद्देवीं वृश्चिके तु जनार्द्दन"मिति वचनेन कर्कटहरि-शयनमेव वृश्चिके हरेरुत्थाने निमित्तं, मिथुने शयने सति वृश्चिके विष्णूत्थाननिमित्तत्वं न सम्भवतीति भावः ।

ग्रत इति वर्द्धित्वादेव प्रबोधः ततः पृष्ठेकानीत्यर्थः। अयं ग्रामः पश्चादग्रतोऽसावित्यादेरिव चरमार्थस्यैव प्रतीतेस्तस्यैव न्यायावगतेः तदयुक्तम्। नित्यत्वादेवंविधाग्रपश्चाद्भावस्य "शुक्लपक्षे सदेति" कादाचित्कावगतिविरोधात्* तस्माच्चतुर्द्दश्युत्कर्ष एवात्र समाधिः। तुलागतचतुर्द्दशीवचनमात्रस्य निमित्तवशादुपसंहार इति अनुवादः पुनरनर्थक एव स्यात्। ततश्चास्तामुत्तरत्रिकाधिमासे विषयत्वं किन्तु षट्स्वेवाधिमासपाते शुक्लपक्षे तुलासंक्रान्तौ वृश्चिके देवोत्थानाच्चतुर्द्दशी सौरकार्त्तिकगतत्वेन

---

* द्वेधा हि विधित्वमस्य भवतीति यदुक्तं तदेव दर्शयति, वृश्चिके देवोत्थानस्येत्यादीति। तस्मिन्नेव तुलास्थरवावेव। तुलोपक्रान्तचान्द्रकार्त्तिकशुक्लपक्षे तुलास्थरव्यारब्धचान्द्रकार्त्तिकशुक्लपक्षे। कोजागरपरभावेन कोजागरोत्तरकर्त्तव्यत्वेन पूर्व्वभावः स्यात्। कोजागरात् प्राक् देवोत्थानं स्यात् अतो बाधापत्तेः योऽग्लौकीयममोघास्त्रं तं विनिहन्ति इत्यस्य चतुर्द्दश्या एवोत्कर्षविधिरित्यनेन सम्बन्धः। अमोघास्त्रम् अव्यर्थप्रमाणं विनिहन्ति दूरीकरोति। दीक्षितमतमपाकर्त्तुमाह यत्त्वित्यादि। कृष्णचतुर्द्दश्याः परतः, कृष्णचतुर्द्दशीयुक्तामावास्याक्रियमाणलक्ष्मीप्रबोधरूपसुखरात्रिकायाः परतः। पृष्ठेकानी पश्चाद्वर्त्तिनी। अयं ग्रामः पश्चात् पश्चाद्वर्त्ती, असौ अग्रतः पूर्व्ववर्त्ती। चरमार्थस्य प्रतीतेरिति पश्चाच्छब्देन चरमार्थस्य उत्तरवर्त्तित्वार्थस्य प्रतीतेः। नित्यत्वात् विष्णुप्रबोधस्य नित्यत्वात्। एवंविधाग्रपश्चाद्भावस्य उत्तिष्ठत्यग्रतो विष्णुः पश्चात् कृष्णचतुर्द्दशीति वचनबोधितविष्णुप्रबोधलक्ष्मीप्रबोधयोरग्रपश्चाद्भावस्य। शुक्लपक्षे सदेति लक्ष्मीप्रबोधमभिधाय तस्मिन् शुक्ले सदा विष्णुरिति वचनेन विष्णुप्रबोधस्य लक्ष्मीप्रबोधानन्तरशुक्लपक्षनियतत्वेन। कादाचित्कावगतिविरोधादिति तथाच तस्मिन् शुक्ले सदा विष्णुरित्यत्र सदापदश्रुतेः लक्ष्मीप्रबोधानन्तरशुक्लपक्षनियतत्वेन कदाचित् लक्ष्मीप्रबोधात् पूर्व्वं कदाचिद्वा तत्परत इति कादाचित्कावगतिविरोध इति भावः।

पूर्व्वतया प्राप्तापि निमित्तविशेषेण चान्द्राधिकर्त्तव्यतया पश्चाद्विधीयत इतीत्थमेव सार्थकवचनं यथा भवन्मते सौराषाढ़ादिविहितानामेव शयनादीनान्नैमित्तिकचान्द्रे विधिः। एवं "शुक्लपक्षे यदा भानुरिति" सामान्येनावगतेरप्यनुग्रहो भवति। अन्यथोत्तरत्रिकाधिमासविषयत्वं सामान्यावगतिबाधेन वर्णनीयम्*। यद्वा योग्लौकमतेऽपि चेत् पूर्व्वोक्तन्यायेन विधित्वमस्य न सम्भवत्येव तदानीं दीक्षितव्याख्यानेन चानुवादतास्य भवतु। यदेति पद-

---

* तस्मात् कादाचित्कावगतिविरोधात् चतुर्द्दश्युत्कर्ष एवानेति अत्र चतुर्द्दशीपदेन प्रबोधात् परतः सम्भाव्यमानकृष्णचतुर्द्दश्युत्कर्ष एवोच्यते न तु लक्ष्मीप्रबोधाधिकरणीभूतामावास्यायाः अव्यवहितपूर्व्ववर्त्तिकृष्णचतुर्द्दश्युत्कर्षः तत्परभूतशुक्लपक्षे विष्णुप्रबोधस्य नियमितत्वेन पश्चात्पदवैयर्थ्यापत्तेरिति भावः। निमित्तवशादुपसंहार इति कालविशेषनिमित्तत्वेन सामान्यविधेः सङ्कोचः, तथाच यदा मार्गशीर्षोऽधिमासस्तदैव प्रबोधात् परतः कृष्णचतुर्द्दश्यास्तुलागतत्वेनोत्कर्षसम्भव इति भावः। पूर्व्वतया विष्णुप्रबोधस्य पूर्व्वतया, तथाच वृश्चिके विष्णुप्रबोधविधानात् चतुर्द्दश्याः सौरकार्त्तिकगतत्वेन सुतरां पूर्व्वत्वम्। निमित्तविशेषेण लक्ष्मीप्रबोधभिन्नचान्द्रकार्त्तिककृष्णपक्षकरणीयकर्म्मविशेषनिमित्तत्वेनेत्यर्थः। पश्चात् विष्णुप्रबोधादूर्द्ध्वम्। नैमित्तिकश्चान्द्रे विधिरिति चान्द्रे नैमित्तिकविधिरित्यन्वयः। तथाच शेते विष्णुः सदाषाढ़े इति वचने शयने सदापदश्रुतेः सौरपरत्वे कदाचिच्छयननिमित्ततिथेरप्राप्तौ कर्म्मलोपः स्यादतश्चान्द्रे नैमित्तिकविधिरित्युक्तम्। एवमित्यादि, तथाच यथा चान्द्रे नैमित्तिकविधिः तथा 'शुक्लपक्षे यदा भानुस्तुलां समधिरोहति। उत्तिष्ठत्यग्रतो विष्णुः पश्चात् कृष्णचतुर्द्दशी'ति वचने शुक्लपक्षे तुलासंक्रान्तिमात्रे सामान्यतोऽग्रे विष्णूत्थानविधिः पश्चात् कृष्णचतुर्द्दशीविधिरिति, नतु उत्तरत्रिकाधिमासमात्रे उक्तविधिरिति भावः। ननु उत्तरत्रिकाधिमासविषयत्वसिद्धान्तो व्याहन्येत इत्यत आह अन्यथेत्यादि, तथाच सामान्यावगतिबाधेन उत्तरत्रिकाधिमासविषयत्वम् अन्यथा वर्णनीयमिति आसत्तिक्रमेणान्वयः।

स्याप्यनुवादता। यदा शुक्लपक्षे तुलासंक्रान्तिस्तदा विष्णूत्थानस्य परभावमनुवदति। अन्यदापि परभाव एवेति चेत् विधित्वे ह्यन्यनिवृत्तावनर्थकत्व(१)मनुवादे तु नायन्दोषः। तस्माद्‌योग्लौकेनोपदर्शितो द्विराषाढ़ोऽवगाढ़न्यायापोढ़तयाऽनतिदृढ़(मूढ़)स्यैवेति प्रतिभाति।

---

सम्प्रति सम्भ्रमभट्टकल्पितो द्विराषाढ़ उपन्यस्यते।

तद्‌यथा।

"माधवाद्येषु षट्स्वेकमासि दर्शद्वयं यदा।
द्विराषाढ़ः स विज्ञेयो विष्णुः स्वपिति कर्कटे॥"

अत्र षट्स्विति वचनात् कर्कटादित्रिकेऽप्यधिमासे कर्कट एव देवशयनं कार्य्यं, न चागामिकर्कटापेक्षं वचनवर्णनम् उक्तम्, अधिमासपाततत्कार्य्ययोः समानसंवत्सरगोचरावगतेः।

"द्विराषाढ़विकल्पोऽयं वैकुण्ठशयनं प्रति।"

इत्यादिवचनैश्चागामिवत्सरकर्कटशयनस्य विहितत्वात्।

तथाच स्मृतिः;—

"सिनीवालीमतिक्रम्य यदा सञ्चरते रविः।
युक्तः शेषैस्तदा मासैः कालस्तत्रोत्तरः स्मृतः॥"

"सर्व्वमज्ञानतिमिरमञ्जनेन हत"मित्यभिधायोक्तं "युक्तः शेषैस्तदा मासैरिति।" येऽपि मासाः पूर्व्वं गतास्तेऽपि काल-

---

(१) विधित्वेऽन्यस्य निमित्तमनुवर्त्तमिति क्वचिदादर्शे पाठः।

वृद्धिमग्रे भाविनीं वीक्ष्य उत्तरा एव ग्राह्या इत्यर्थः। तेनैव-मादिवचनपर्य्यालोचनया दक्षिणायनात् पूर्व्वं परेण वा दर्शद्वये द्विराषाढ़ एव स्यात्*। तस्मादुत्तरत्रिकाधिमासेऽपि प्राक्तन-शयनमुत्क्रष्टव्यम्। कर्कटे चाधिमासे देवशयनं मलिम्लुचेऽपि, "विष्णुः स्वपिति कर्कटे" इति वचनात् नास्ति वचनस्यातिभार इति न्यायविदां व्यवहारात्, आश्विने चाधिमासे कर्कट एव हरेः सुप्तत्वात्,

"कर्किण्यर्के हरौ सुप्ते शक्रध्वजक्रियाश्विन" इति वचना-न्मलिम्लुचेऽपि शक्रोत्सवः। तुलायाञ्चाधिमासे तत्रैव दुर्गोत्सवः। तदेवमुत्तरत्रिकाधिमासे वत्सरद्वये कर्कट एव देवशयनम्।

---

* सम्भ्रमभट्टमतमपाकर्त्तुं तन्मतमुपन्यस्यति सम्मतीत्यादि। माधवाद्येषु षट्सु वैशाखाद्याश्विनान्तषण्मासमध्येषु इत्यर्थः। एकमासि एकसौरमासि। अत्र षट्स्विति वचनात् माधवादिषण्मासमध्ये अधिमासे सामान्यतः कर्कटे हरिशयनविधानादित्यर्थः, नच आगामिकर्कटापेक्षायामिति।

"कन्यासिंहकुलीरेषु यदा दर्शद्वयं भवेत्।

आगामिनि तदा वर्षे कुलीरे माधवः स्वपेत्॥"

इति वचनात् श्रावणादित्रिकमलमासे आगामिवर्षीयकर्कटमात्रापेक्षं हरिशयने सामान्य-वचनवर्णनं नच युक्तमित्यर्थः। अधिमासपाते तत्कार्य्ययोः अधिमासपातजन्यद्विराषाढ़-कुलीरविष्णुशयनयोः समानसंवत्सरगोचरत्वावगतेः यस्मिन् संवत्सरे अधिमासपातः तस्मिन्नेव संवत्सरे सामानाधिकरण्येन विषयत्वावगतेः, न त्वागामिसंवत्सरमात्रगोचरत्वेनेत्यर्थः। द्वि-राषाढ़विकल्पोऽयं वैकुण्ठशयनम्प्रति इत्यादिवचनैरिति। आदिपदेन "ध्वजस्तु शतयज्ञस्य सिंह एव विधीयते" इत्युत्तरप्रतीकपरिग्रहः।

भाविनि चोत्तरत्रिकाधिमासे यदि मिथुन एव देवशयनं तदो-त्तिष्ठते मासचतुष्टयेनेति बाध्येत, तद्वत्सरे वृश्चिकोत्थानस्य निर्वि-वादत्वात्*। तदेतदतिगहनाज्ञानतिमिराक्रान्तान्तःकरणतया प्रज्ञाप्रदीपकप्रकाशप्रत्यस्तमयेन सम्यग्भ्रान्तस्य सम्भ्रमस्याभि-धानम्। तथा "आभाकासितपक्षेष्विति" चान्द्राषाढ़परत्वस्य महता प्रबन्धेन पूर्व्वप्रतिपादितत्वात् न चोत्तरत्रिकाधिमासे कर्कटे चान्द्राषाढ़ः सम्भवति। न च तस्य बाधो न्याय्यः,

---

* उपसंहरति तस्मादिति। उत्तरत्रिकाधिमासे श्रावणादित्रिकाधिमासे, प्राक्तन-शयनं मिथुनकरणीयहरिशयनम्, उत्कृष्टव्यं कर्कटे कर्त्तव्यम्। वचनादिति, तथाच वाचनिकत्वात् मलमासोऽपि न दूषणावह इति भावः। तदेव प्रमाणयति नास्ति वचन-स्येत्यादि। कर्कटे हरेः सुप्तत्वादिति माधवाद्येषु षट्स्वेक इत्यादिप्रागुक्तवचनादिति शेषः। तत्रैव दुर्गोत्सवः मलमासेऽपि तुलाशमेव। कर्किस्थके इति प्रागुक्तवचनादिति शेषः। विशेषाभिधानाय पुनरुपसंहरति तदेव इत्यादि, वत्सरद्वये कर्कटे एव देवशयनमिति। तथाच "माधवाद्येषु षट्स्वेक इत्यादिप्रागुक्तवचनात् श्रावणादित्रिकाधिमासे कर्कटे हरिशयनं वाचनिकम्। एवम्—

"कन्यासिंहकुलीरेषु मलमासो यदा भवेत्।
आगामिनि तदा वर्षे कुलीरे माधवः स्वपेत्॥"

इति वचनात् आगामिवर्षीयकर्कटेऽपि देवशयनं वाचनिकमिति भावः। उत्तरत्रिकाधि-मासे कर्कटहरिशयनानङ्गीकारे वचनान्तरविरोधं दर्शयति, भाविनि चोत्तराधिमासे इत्यादि। उत्तिष्ठते मासचतुष्टयेनेत्युपलक्षणम्, 'पञ्चमासान् हरौ सुप्ते देशे तत्र भयं भवेत्' इत्येतद्वचनविरोधोऽपि द्रष्टव्यः। तथाच श्रावणादिमलमासे मिथुनहरिशयनस्वीकारे वृश्चिके हरेरुत्थाने च पञ्चमासहरिशयनात् मासचतुष्टयेनेति वचनविरोधः, देशे तत्र भयं भवेदित्यादिदोषश्च स्यादिति भावः।

अबाधेनाप्युपपत्तेः। न च वाच्यमधिमासस्य शयनाद्युत्कर्षहेतुत्वात्, तस्य च तद्वत्सरे पातात् कथमनुत्कर्षः? यतो नायमुत्कर्षस्य हेतुरसिद्धस्य पश्चाद्भाविनो हेतुत्वाभावात्, तस्मात् "माधवाद्येषु षट्स्विति" वचनेन यदुत्तरत्रिकाधिमासस्य कर्कटशयनहेतुत्वमुक्तं तदागामिशयनोत्कर्षाभिप्रायम्, न च निमित्तनैमित्तिकयोरेकवत्सरगोचरत्वावगमबाधः*। कर्कटाधिमासेऽपि चान्द्र-श्रावणाधिमासगणनयागामिकर्कटगतचान्द्राषाढ़पर्य्यन्तेनैव द्वा-

---

* इदानीं सम्भ्रमभट्टमतमपाकर्त्तुमुपक्रमते तदेतदित्यादि। अतिगहनाज्ञानतिमिराक्रान्तान्तःकरणतया अतिदुरवगाहाज्ञानान्धकाराच्छन्नहृदयतया। प्रज्ञा एव प्रदीपकः प्रदीपः तस्य यः प्रकाशः ज्योतिः तस्य प्रत्यस्तमयेन निर्व्वापणेन। सम्भ्रमशब्दस्य सम्यक् भ्रमो भ्रान्तिर्यस्येति व्युत्पत्तिमङ्गीकृत्याह सम्यग्भ्रान्तस्येत्यादि। महता प्रबन्धेन अतिविस्तृतसन्दर्भेन, नचेति नहीत्यर्थः। चान्द्राषाढ़ इति, तथाच शेते विष्णुः सदाषाढ़े इत्यादिवचने सदापदसमभिव्याहृताषाढ़पदाच्चान्द्राषाढ़ एव प्रतीयते। अन्यथा सौरपरत्वे कदाचिद्रवेः शीघ्रगत्या न्यूनकाले माससमाप्तौ शयनतिथेरलाभात् सदा शेते इत्यनुपपन्नं स्यादिति भावः। अबाधेनाप्युपपत्तेरिति, तथाच शयने चान्द्राषाढ़स्वीकारे सर्व्वदैवाबाधेनोपपत्तिः सम्भवतीति भावः। अधिमासस्य उत्कर्षहेतुत्वात् शयनोत्कर्षहेतुत्वात् इत्यर्थः कथमन्यथा मिथुनमलमासपाते कर्कटे हरिशयनं स्यात्। नच वाच्यमिति, कथम् अनुत्कर्ष इति वाच्यं न च इत्यर्थः। अत्र हेतुमाह यतो नायमित्यादि, यतो यस्मात् अयं मलमासो न हेतुः। अहेतुत्वे हेतुमाह असिद्धस्य पश्चाद्भाविनो हेतुत्वाभावादिति। तथाच—"अन्यथासिद्धिशून्यस्य नियता पूर्व्ववर्त्तिता। कारणत्वं भवेत्तस्य" इत्यादिस्मरणात् कार्य्याव्यवहितपूर्व्ववर्त्तिन एव कारणत्वनियमात् मलमासस्य पश्चाद्भावित्वेनासिद्धतया अकारणत्वमिति भावः। यद्यपि मलमासे आरब्धे सति तदीयद्वादश्यादौ हरिशयनविधानेन तस्य पूर्व्ववर्त्तित्वमस्ति, तथापि दर्शद्वयातिक्रमणाभावेन असम्पूर्त्या असिद्धत्वमुक्तं सङ्गच्छते। तस्मात् असिद्धस्य तस्य कारणत्वाभावात्। निमित्तनैमित्तिकयोः कार्य्यकारणयोः।

दशभिर्मासैः संवत्सरनिष्पत्तेरेकवत्सरगोचरत्वाविरोधात्। न च वत्सरगणनया मासं प्रति नियमोऽस्ति वर्षद्वयशादावनियमात्, न च समानवत्सरगोचरत्वमप्यनयोरवगम्यते तद्वाचकशब्दाभावात्, न च "द्विराषाढ़ः स विज्ञेय" इति वत्सरे द्विराषाढ़ इति वचनार्थः। द्विराषाढ़वचनत्वात् पदस्य दर्शद्वयोपलक्षिताधिमासस्यैवाषाढ़स्य 'स' इति निर्द्देशात् द्विराषाढ़स्यैव* द्विर्वेशाखद्विःश्रावणादेरपि शयनाद्युत्कर्षहेतुत्वात् गौणः। स द्विराषाढ़ो विज्ञेय इत्यभिधानान्न तु संवत्सर इति। तस्मात् पूर्व्वसिद्धस्य हेतुत्वात् परभाविनश्च हेतुमत्त्वात् "पतिते चाधिमासक" इति भूतनिर्द्देशाच्च स्वपरभूतकर्कटशयननिमित्तमेवाधिमासानाम्। अतएव—

"यदाधिमासः पतति तदा पूर्व्वौ मलिम्लुचः।
कार्थिन्नात्राभिषेकादि द्विराषाढ़ो भवेत्तदा॥"

यदा पतति तदा द्विराषाढ़ो न तु पतिष्यतीत्याह।

तथा—

"उत्तरमयनमायाते सवितरि पतनं यदाधिमासस्य।
भवति तदा द्विराषाढ़ः शेते कर्किणि सुराराातिः॥"

---

* ननु माघवाद्येषु पट्स्वेक इत्यादिवचने एकवषमध्ये हरिशयनोपपत्तिरिति चेत् तदुपपादयति कर्कटाधिमासे इत्यादि। श्रावणाधिमासगणनया इति तथाच चान्द्रमासस्य मलमासत्वात् तस्य शुद्धाशुद्धत्वभेदेन मासद्वयत्वेऽपि षष्ठ्यादिदिवसैर्मासः कथितो बादरायणैरिति वचनेन श्रावणत्वेनैक्यात् तमादाय गणनया चान्द्राषाढ़पर्य्यन्तस्य एकवर्षत्वसिद्धिरनुभवेति भावः। अनयोरधिमासद्वि ग्रयनयोः, द्विराषाढ़त्वेन मुख्यद्विराषाढ़त्वेन।

यदा पतनं सम्भवति तदा ह्याषाढ़ो नतु पूर्व्वमेव*। किञ्च शयनाद्युत्कर्षनिमित्तस्य सकृदुपनिपातान्नैमित्तिकानामपि सकृदेव युक्तं तत्र च पूर्व्वत्रिकाधिमासस्य परभूतकर्कटे शयननिमित्तत्वात् उत्तरत्रिकाधिमासस्यापि तथात्वमेव युक्तं "माधवाद्येषु षट्स्विति" षण्णामेवाधिमासानां, "विष्णुः स्वपिति कर्कट" इति तुल्यरूपनिमित्ताभिधानात्। अतएव क्वचिद्भाविनोऽधिमासस्य क्वचिद्भूतस्य निमित्तत्वं नैकं वचनमवगमयितुं प्रभवति वैरूप्यात्। अथ कथमुत्तरत्रिकाधिमासे भाविनि भूते च कर्कटे शयनं, कथञ्च देवशयनकर्म्मण्येव कदाचिद्भावितया कदाचिच्च भूततयोत्कर्षनिमित्ततावर्णनं, मेषादित्रिकाधिमासस्य भूतत्वेनैव निमित्तत्वविधानादुत्तरत्रिकाधिमासस्यापि भूतत्वेनैव युक्तम्। "उत्तिष्ठते मासचतुष्टयेनेति" तु प्रायिकानुवादमात्रम्। विधित्वे तु किमनेन विधीयते? न तावच्चतुर्थश्चान्द्रो मासः। द्वादश्यां हि शयने तत्तिथ्यारब्धानाञ्चतुर्णां मासानामेकादश्यां पूरणात् द्वादशी पञ्चमासस्येति तत्रोत्थानं न स्यात्। अथ चतुष्टयेन समाप्तेन तेन पञ्चम इत्यर्थः। तन्निष्पत्तिश्चैकादश्यन्ते तत्र

---

* उपसंहरति तस्मादिति। परभाविनश्च हेतुमत्त्वात् कार्य्यत्वात्। स्वपरभूतकर्कटशयननिमित्तमेवेति अत्र स्वपदेनाधिमास उच्यते। स्वस्य परभूतं स्वपरभूतं स्वपरभूतञ्च तत् कर्कटशयनञ्चेति स्वपरभूतकर्कटशयनं तस्य निमित्तत्वं परभूतताहृशकार्य्यं प्रत्येव स्वस्य कारणत्वमित्यर्थः। उत्तरायणम् आयाते सवितरि सवितरि सूर्य्ये उत्तरायणम् आयाते गते सति दक्षिणायने इत्यर्थः। तदा तदैव पतनसमानकालीन एव नतु पूर्व्वमेव पतनात् पूर्व्वमेव असम्पूर्णपतनसमानकालीन एवेत्यर्थः।

निष्पन्नस्य द्वादश्यां समुत्थानकारणतेति नैतदस्वार्थपरतापत्तेः। द्वादशीप्रथमक्षण एवोत्थानं स्यात्,* न नक्षत्रमपेक्षते, त्रयोदश्यादौ

---

* पूर्व्वत्रिकाधिमासस्य वैशाखादित्रिकाधिमासस्य। परभूतकर्कटे शयननिमित्तत्वात् स्वोत्तरवर्त्तिकर्कटगतचान्द्राषाढ़सम्बन्धि शयनं प्रति निमित्तत्वात् निमित्तत्वदर्शनात्। उत्तरत्रिकाधिमासस्य श्रावणादित्रिकाधिमासस्यापि तथात्वमेव स्वोत्तरवर्त्तिकर्कटगत-शुद्धाषाढ़सम्बन्धि शयनं प्रति निमित्तत्वमेव युक्तं, नतु कर्कटाधिमासे मलीयश्रावणशुक्ल-द्वादश्यामसम्पूर्णत्वेन तदाधिमासस्य निमित्तत्वासम्भवात् "शेते विष्णुः सदाषाढ़े" इति सदा-पदबोधितनियमबाधापत्तेश्च। क्वचित् भाविन इति क्वचित् कर्कटाधिमासे मलीय-श्रावणसम्बन्धिशुक्लद्वादश्यां वाचनिकशयनस्वीकारे। एकं वचनमिति अवगमयितुं बोधयितुं न प्रभवति इत्यन्वयः। वैरूप्यात् पूर्व्वत्रिकाधिमासस्यैव एकरूपत्वाभावात्। प्रायिकानुवादमात्रमिति अत्र प्रायिकत्वं मलमासयुताऽभिन्नत्वेन बोद्धव्यम्। अनुवाद-मात्रमिति तु अत्रायमाशयः मासविशेषमनुल्लेख्य सामान्यतो मासचतुष्टयेन इत्युक्तौ किम-पेक्षया मासचतुष्टयत्वमित्यनध्यवसायः स्यात् विशेषतस्तु कस्मिन् मासि कस्मिन् पक्षादौ मैत्राद्यपादयोगेन शयनं वैष्णव्यमध्येन पार्श्वपरिवर्त्तनं पौष्णशेषेण उत्थानञ्चेति पुनरनध्य-वसायः स्यात्। अतः "आभाकासितपक्षेषु मैत्रश्रवणरेवती। आदिमध्यावसानेषु प्रस्वापो-द्वर्त्तनोत्सवाः॥" इति वचनेन सामान्यतोऽभिधाय मैत्राद्यपादे स्वपितीह इत्यादिना मास-चतुष्टयत्वेनानूद्य विशिष्यते इति सुतरामनुवादमात्रं सिध्यति। विधित्वे तु नियमविधित्वे तु किमनेन मैत्राद्यपादे स्वपितीत्यादिना विधीयते नियम्यते। चतुर्थः मासचतुष्टयेन इत्यनेन प्राप्तश्चतुर्थो मासः चान्द्रः एका तिथिः क्वापि तदादिभूता इत्यादिवचनबोधिततिथिचान्द्र इत्यर्थः। एकादश्यां पूरणात् शयनाद्यारम्भकद्वादशीमादाय गणनया एकादश्या-स्त्रिंशत्तिथित्वेन तिथिचान्द्रमाससमापनात्। सुतरां द्वादशी पञ्चमासस्येति एकादश्यां तिथिचान्द्रमाससमापनात् सुतरां द्वादशी पञ्चममाससम्बन्धिनी भवति। तत्रोत्थानं न स्यादिति मासचतुष्टयनियमात्। चतुष्टयेन समाप्तेन तेन पञ्चम इत्यर्थ इति चतुष्टय-समाप्त्युत्तरत्वविशिष्टेन पञ्चमेनेत्यर्थः। अस्वार्थपरत्वापत्तिः स्वार्थहान्या अन्यार्थकल्पनापत्ते-

सर्व्वथा न स्यादेव मासचतुष्टयस्य चिरातीतत्वादेकादश्याञ्च नोत्थानं स्यात्। चतुर्थमासस्यानिष्पन्नस्य कारणत्वानुपपत्तेः एकादश्यन्ते च तत्समाप्तिः। तथाच पादयोगादन्यतिथावित्या-दिकमपहस्तितं भवेत्*। नाक्षत्रमासचतुष्टयमिति चेत् नैत-दप्यनुराधानक्षत्रमादिभूतमादाय चतुर्थमासीयरेवतीगणने नैको-नविंशत्युत्तरशतेन मासचतुष्टयस्य एकोनस्यापत्तेरभिजिद्-गणने रेवत्युत्तरस्येति कथं मासचतुष्टयेनेति विधिः विधेयस्या-परिज्ञाने विधानासम्भवात्। न च रेवत्यामपि नियतमुत्थानम्, उभयोरप्यभावे त्विति, द्वादशीमात्रस्यापि विधेः। न च सौरा-पेक्षं चतुर्थत्वमाषाढ़ात्. कार्त्तिकस्य पञ्चमात्, प्रतिपदादि-दर्शान्तत्वाच्चान्द्रोऽपि पञ्चम एवेति। यथाकथञ्चिदेवानुवादतया वर्णनं प्राप्तिपरतन्त्रत्वादनुवादानामतएव मैत्राद्यपादादिभिर्व्यभि-चरितैः सहचरितं व्यभिचार्य्येव युक्तम्। "शक्रध्वजोत्थापनञ्च विष्णोश्च परिवर्त्तन"मित्यादिना च पञ्चभिरपि मासैरुत्थानस्य

---

रित्यर्थः। द्वादशीप्रथमचरण एवोत्थानं स्यादिति एकादश्यां चान्द्रमाससमापनेऽपि द्वादशी-प्रथमचरणे उत्थानारम्भे एकादश्यन्तरूपकारणस्य प्राक् सत्त्वात्।

* ननु रेवतीनक्षत्रयुक्तद्वादश्यामुत्थानविधानात् द्वादश्याद्यचरणे तद्योगस्य कादा-चित्कत्वात् कथमुपपत्तिरित्याशङ्क्याह न नक्षत्रमपेक्षते। चिरातीतत्वादिति त्रयोदश्यादौ उत्थाने द्वादश्यादिव्यवधानेन एकादश्यन्तरूपकारणस्य प्राक् सत्त्वासम्भवात्। अपहस्तितं भवेदिति पादयोगादन्यतिथौ इति वचनं व्यर्थं स्यात् तथाच द्वादश्यां नक्षत्रयोगाभावे पादविशेषयोगेन अन्यतिथौ उत्थानव्यवस्था न स्यादिति भावः।

दर्शितत्वात्* । तस्मादुत्तरत्रिकाधिमासव्यतिरेकेण यथाकथञ्चित्-

---

* नाक्षत्रमासचतुष्टयमिति पादयोगादन्यतिथावित्यादिवचनस्य सार्थक्याय सप्तविंशतिनक्षत्रैः नक्षत्रयुक्तमासचतुष्टयमिति चेदित्यर्थः। अनुराधानक्षत्रमादिभूतमादायेति "मैत्राद्यपादे स्वपितीह विष्णुर्वैष्णव्यमध्ये परिवर्त्तते च। पौष्णावसाने च सुरारिहन्ता प्रबुध्यते मासचतुष्टयेने"ति वचनादिति शेषः। अत्र यद्यपि नाक्षत्रतिथिचान्द्रमासस्य त्रिंशत्तिथिनक्षत्रात्मकतया तच्चतुष्टयस्य विंशत्युत्तरशतेन समापनमुचितं, तथापि पौष्णावसानेन सुरारिहन्ता प्रबुध्यते मासचतुष्टयेनेत्यनेन पौष्णावसानमासचतुष्टययोः सामानाधिकरण्यदर्शनेन पौष्णावसानरूपरेवतीशेषभागस्यापि अनुराधामादाय गणने एकोनविंशत्युत्तरशतेन समापनात् तादृशमासचतुष्टयस्यापि एकोनविंशत्युत्तरशतेन समापनापत्तिः सुतरामेव सिध्यति। तथाहि, अनुराधामादाय गणने त्रिंशत्पूरणीभूतमूलनक्षत्रेण प्रथमस्तादृशतिथिचान्द्रमासः समाप्तः। ततः पूर्व्वाषाढ़ामादाय गणने त्रिंशत्पूरणीभूतश्रवणानक्षत्रेण द्वितीयस्तादृशमासः समाप्तः। ततः धनिष्ठामादाय गणने त्रिंशत्पूरणीभूतपूर्व्वभाद्रपन्नक्षत्रेण तादृशस्तृतीयो मासः समाप्तः। तथाच उत्तरभाद्रपन्नक्षत्रमादाय त्रिंशत्पूरणीभूताश्विनीनक्षत्रेण चतुर्थो मासः समाप्यते च। ततश्च रेवतीनक्षत्रे प्रबोधे एकोनत्वं सुतरामेव सिद्धम्। द्वादशीमात्रस्यापि विधेः "द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे। आभाकासितपक्षेषु शयनावर्त्तनादिक"मिति वचनात्। न च सौरापेक्षं चतुर्थत्वमिति मासचतुष्टयेनेति मासचतुष्टयस्य सौरमासचतुष्टयत्वं न च नह्मीत्यर्थः। प्रतिपदादिदर्शान्तश्चान्द्रोऽपीति मुख्यचान्द्रोऽपीत्यर्थः। पञ्चम एव उत्तरत्रिकमलमासे सति श्रावणादेर्द्विंत्वात्। अनुवादतयेति स्वयमग्रे वक्ष्यति। प्राप्तिपरतन्त्रत्वादनुवादानामिति प्राप्तेः पुनःकथनमनुवाद इति स्मरणात्। मैत्राद्यपादादिभिर्व्यभिचरितैरित्यादि तथाच "मैत्राद्यपादे स्वपितीह विष्णुः वैष्णव्यमध्ये परिवर्त्तते च, पौष्णावसाने च सुरारिहन्ता प्रबुध्यते मासचतुष्टयेने"ति, "द्वादश्यामृक्षसंयोगे पादयोगो न कारण"मिति, "द्वादश्यां सन्धिसमये नक्षत्राणामसम्भवे। आभाकासितपक्षे"ष्वित्यादि-व्यभिचरितैः प्राप्तकादाचित्कसम्बन्धैः मैत्राद्यपादादिभिः सहचरितं तद्योगेन व्यवस्थापितम्। इत्यादिना इति आदिना तु मासद्वयेन निर्द्दिष्टम्। "शयनादावक्षौविदैः। दुर्गायाश्च त्रिभिर्मासैः अधिमासं विनैव तु। अधिमासनिपाते तु क्रमा-

प्राप्तस्य चतुष्टयस्य चतुष्टयेनेत्यनुवाद इति यत्किञ्चिदेतत् । एतच्चाधिमासस्य शयनोत्कर्षनिमित्ततामभ्युपगम्योक्तम् । परमार्थतस्त्वधिमासे पतिते एकस्य द्विरावृत्तत्वात् ततः प्रभृत्युत्तरोत्तरसौरमासेषु प्राप्तिरिति(१) चान्द्रमासोत्कर्षनिमित्तमधिमास इत्यर्थः । यत्तु अज्ञानतिमिरदहनार्थमञ्जनवर्त्तिरूपवचनमुपन्यस्तम् ।

"सिनीवालीमतिक्रम्य यदा संक्रमते रविः ।
युक्तः शेषैस्तदा मासैः कालस्तत्रोत्तरः स्मृतः ॥"

इति व्याख्यातञ्च, सर्व्वमज्ञानतिमिराञ्जनेनानेनोपहतं तत्र काल उत्तरो योऽसौ परिवृद्धः स एव ग्राह्यः । अथ किं यत्र मासे वृद्धिदर्शनं तदधिक एव उत्तरः कालो ग्राह्यः पूर्व्वस्तु यथावस्थित एव गृहीतव्य इत्यत्राह "युक्तः शेषैस्तदा मासैरिति" । येऽपि पूर्व्वं गतास्तेऽपि कालवृद्धिमग्रे भाविनीं वीक्ष्योत्तरा एव ग्राह्या इत्यर्थः । तस्मादेवमादिवचनपर्य्यालोचनया दक्षिणायनात् पूर्व्वं परेण वा दर्शद्वये द्विराषाढ़ एव बुध्यत इत्यन्तम् । तत्र जनीगतान्धव्याधिप्रशमनार्थपृष्टकुवैद्यकथितविपरीतफलौषधप्रयोगात् दिवापि न पश्यतीतिवदाभाणकोऽयम् । अस्यापि विपरी-

(१) एव पूर्व्वपूर्व्वचान्द्रप्राप्तेः तत्र तत्र विहिता क्रिया उत्तरोत्तरेष्वेव क्रियते इति प्राप्तं वचनैः स्वव्यतिक्रियते । एतदुक्तं भवति यत्राधिमासः पतितः तदादिचान्द्राणामुत्तरोत्तर इति क्वचिदादर्शे पाठः ।

हिन्द्राश्विकाद्दरीन् । कन्यातुलावृश्चिकेषु नृप उत्थापयेद्ध्रुवमिति प्रतीकपरिग्रहः । पञ्चभिर्मासैरिति अस्मिन् वचने मलमासे सति वृश्चिके उत्थानविधानेन चान्द्रकार्त्तिकपक्षस्य वृश्चिकप्रवेशेऽपि आषाढ़ापेक्षया चान्द्रकार्त्तिकस्य पञ्चमत्वात् ।

तार्थप्रसाधकत्वात्। तथाहि यदाधिमासः पतति तदैक-नामानौ चान्द्रौ भवतः तत्र चान्द्राषाढ़विहितकर्म्मानुष्ठानाय को ग्राह्यः इत्यपेक्षाया"मुत्तरः स्मृत" इति विधिः। तत्पर-भाविनोऽपि चान्द्रमासाः परमासेष्वेव प्राप्यन्त इति परभूतै-र्मासैर्युक्तः स्मृतः न तु पूर्व्वैरिति, तेषां शेषपदानभिधेयत्वात्, वयःशेषे पुत्त्रपौत्त्रमायुःशेषे यच्छेषन्दशरात्रस्येत्यादिषु परभूत एव काले शेषपदप्रयोगनियमात्*। कर्कटाधिमासे च देवशयने तत्र चान्द्रे न वा सौराषाढ़े शयनं स्यात्। तदानीं द्विःश्रावणत्वाच्चान्द्रा-षाढ़स्यापि कर्कटप्रथमदिन एव समाप्तत्वात् "आभाका" इति "मिथुनस्थेऽपि सहस्रांशा"वित्यादिचान्द्रविधिपरं वा सौरपरं वा

---

* परमार्थतः यथार्थतः। एकस्य द्विरावृत्तत्वात् अधिमासरूपस्य आषाढ़ादिनामकत्वेन द्वित्वात्। ततः मलमासात्। तत्र तत्र मलमासमध्ये। अञ्जनेन ज्ञानाञ्जनेन, उपहतं नष्टम्। तत्र मलमासे सति योऽसौ उत्तरकालः परिवृद्धः शुद्धत्वेन विहितः। जनीगतान्ध-व्याधिप्रशमनार्थमिति अत्र जनीगतान्ध इत्यपपाठः, रजनीगतान्ध इत्येव पाठः साधुः। तथाच रात्र्यन्धतारोगप्रशमनार्थमित्यर्थः पृष्टः जिज्ञासितः। विपरीतफलम् उद्देश्यविरोधिफलम्, एतदौषधविशेषणम्। दिवापि न पश्यतीति, तथाच रात्र्यन्धतारोगनिवृत्तिर्दूरे आस्तां, प्रत्युत पुनर्दिवान्धोऽपि भवतीति भावः। आभासलौकोऽयमित्यपपाठः, आभाणकोऽयं विपरीतार्थप्रकाशकोऽयमित्यर्थः। तत्सङ्गमले हेतुमाह तस्यापीत्यादि। परमासेष्वेव परसौरमासेष्वेव। शेषैर्मासैरिति दर्शयति परभूतैरित्यादि। तेषां पूर्व्वेषां, शेषपदान-भिधेयत्वात् शेषपदवाच्यत्वाभावात् परभूतमास एव। शेषपदाभिधेयतां दृष्टान्तेन दर्शयति वयःशेषे इत्यादि, शेषे वयसि इत्यर्थः। पुत्त्रपौत्त्रं पुत्त्रस्य पौत्त्रस्य द्वयोः समाहारः पुत्त्रपौत्त्र समाहारे क्लीवलिङ्गत्वम्। आयुःशेषे आयुषोऽवसाने यच्छेषं दशरात्रस्येति तावदेवाशुचि-र्भवेदित्युत्तरप्रतीकम्। दशरात्रस्य यः शेषः अन्तोऽवसानो वा तं प्राप्य तावत्कालपर्य्यन्तम् अशुचिर्भवेदिति। शेषशब्दस्य पुंलिङ्गत्वेऽपि न क्षतिः।

सर्व्वथा वाधितं स्यात्*। किञ्च शेषैरित्यधिमासस्य पाते पूर्व्वकालाभिप्रायेण वर्णने पूर्व्वावधेरनिर्देशात् पूर्व्वाषाढ़ादिविहितानामपि शयनादीनामुत्कर्षः स्यात्, तेषां वत्सरान्तरगोचरत्वान्नोत्कर्ष इति चेत् न समानवत्सरग्रहणप्रमाणाभावात्। अव्यवस्थितग्रहणे सर्व्वदैव शयनादुत्कर्षापत्तेराषाढ़ादिविधेर्निर्विषयत्वं स्यादिति। समानवत्सरग्रहणमिति चेत् समानवत्सरग्रहणेऽपि वत्सरादिमासापरिज्ञानाद्दूषणस्य तदवस्थत्वात्, अधिमासावधिवत्सरगणने उत्तरत्रिकाधिमासे तत्पूर्व्वाषाढ़स्य तद्वत्सरानन्तःप्रविष्टत्वात् कथं तत्र कर्त्तव्यशयनोत्कर्षः। तदन्तवत्सरगणने मेषवृषयोरधिमासे(१) तत्पूर्व्वभूतैराषाढ़ादिभिरेकवत्सरत्वात् प्राक्तनमेव शयनादिकमुत्कृष्येत, नतु परभूतमिति विपरीतापत्तेः। पूर्व्वोक्ताभाणकसिद्धिः मासान्तरस्य चाद्यन्तग्रहणे विनि-

---

(१) तदन्तप्रवेशेन वत्सरगणने उत्तरत्रिकाधिमासे तत्पूर्व्वाषाढ़स्य तु मेषवृषवृषयोरधिमासे च इति क्वचिदादर्शे पाठः।

---

* तदानीं कर्कटमलमासे। कर्कटप्रथमदिन एव कर्कटप्रथमदिनसम्बन्धितिथावेव। चान्द्रमासस्य तिथिघटितत्वेन सौरदिने तदसम्भवात् 'अमावास्याद्वयं यत्र' इति वचनस्यामावास्याद्वयस्य यथाश्रुतसाकल्यामावास्यापरत्वमभिप्रेत्योक्तं, तथाच चतुर्द्दश्यां कर्कटसंक्रान्तौ अमावास्यायाः कर्कटप्रथमदिने विद्यमानत्वात् तत्र चान्द्राषाढ़समाप्तिः सुलभेति भावः। सर्व्वथा वाधितं स्यादिति, तथाच 'आभाकासितपक्षे तु मैत्रश्रवणरेवती। आदिमध्यावसाने तु प्रस्वापोद्वर्त्तनोत्सवा' इति वचने शयनादौ आषाढ़भाद्रकार्त्तिकनियमात् कर्कटमलमासे यदि मलीयश्रावणे हरिशयनं स्यात् तदा आभाकासितपक्षबोधिताषाढ़ादेः चान्द्रत्वे सौरत्वे वा उभयथापि बाधः स्यात्।

गमनाप्रमाणाभावात्*। तस्माच्छयनादौ चान्द्राषाढ़ादिपरिग्रहमूलानि वचनानि, अतएवोत्कर्षस्य पूर्व्वोऽवधिर्न्न केनाप्युक्तः। अधिमासात् प्रभृत्येव परस्मिन् सौरे पूर्व्वचान्द्रमासप्राप्तेस्तदाद्येवोत्कर्षस्य प्राप्तत्वात्। यदा तु चान्द्राषाढ़भाद्रकार्त्तिकादयः सौराषाढ़भाद्रकार्त्तिकादिष्वेव प्राप्यन्ते ततःप्रभृत्यनुत्कर्षोऽपि प्राप्त एव। चान्द्रसौरयोर्मेलके प्रायशः क्रियमाणस्य परस्मिन् सौरे पूर्व्वचान्द्रप्राप्तत्रादिक्रियमाणतयोत्कर्ष इत्युच्यते। उभयमेलके त्वनुत्कर्ष इति। परमार्थस्तु चान्द्रे विहितानां चान्द्र एव सदा करणान्नोत्कर्षापकर्षौ मलिम्लुचापेक्षयापि नोत्कर्षः, तत्पर्य्युदस्त एव चान्द्रे विधानात्। अतएव शयनाद्यर्थञ्चान्द्राषाढ़परिग्रहेऽधिमासे सत्यसति वा 'आभाका' इत्यादेः न कस्यचिदपि वचनस्य

---

* दोषान्तरमाह किञ्चेति। शेषैरिति, 'युक्तः शेषैस्तदा मासैरिति' वचनस्यशेषपदैः, इति इत्यस्य, मलमासपाते पूर्व्वावधेरनिर्द्देशात् अनियतत्वात्। वत्सरान्तरगोचरत्वात् अन्यो वत्सरः वत्सरान्तरं तद्गोचरत्वात्। वत्सरादिमासापरिज्ञानात् वत्सरस्य आदिभूतमासस्य अपरिज्ञानात्। अधिमासावधिवत्सरगणने अधिमासम् आदिभूतं परिकल्प्य वत्सरगणने। तद्वत्सरानन्तःप्रविष्टत्वात् तद्वत्सरमध्यप्रविष्टत्वाभावात्। तदन्तवत्सरगणने अधिमासान्तवत्सरगणने। मेषवृषयोरधिमासे तत्पूर्व्वभूतैः अधिमासाक्रान्तमेषवृषान्यतरगतवैशाखज्यैष्ठान्यतरमासपूर्व्वभूतैरित्यर्थः। एकवत्सरत्वादिति तथाच मेषाधिमासे पूर्व्वज्यैष्ठमासमादाय गणने मेषगतमलीयचान्द्रवैशाखपर्य्यन्तस्य वृषाधिमासे पूर्व्वाषाढ़मादाय गणने वृषगतमलीयचान्द्रज्यैष्ठपर्य्यन्तस्य चैकवत्सरत्वमिति भावः। प्राक्तनमेव शयनादिकं मलमासात् पूर्व्वाषाढ़ादिविहितशयनादिकमेव। न तु परभूतमिति मलमासोत्तराषाढ़ादिविहितशयनादिकं न तु इत्यन्वयः मलमासान्तस्य तन्मते एकवत्सरत्वात्। आभाणकसिद्धिः विपरीतार्थप्रकाशकतासिद्धिरित्यर्थः।

बाधः। तस्मात् सम्भ्रमवादोऽपि सम्भ्रमवाद एव निरर्थकं विन्दु-दानम्(१)।

जितेन्द्रियस्तु मन्यते।

"मिथुनस्थो यदा भानुरमावास्याद्वयं स्पृशेत्।"

तथा।

"प्राप्ते आषाढ़मासे तु सिनीवालीद्वयं यदा।
द्विराषाढ़ः स विज्ञेयः पतिते चाधिमासके॥"

तथा।

"अमावास्यामतिक्रम्य यदार्कः कर्कटं व्रजेत्।
द्विराषाढ़ं तदा प्राहुः पतिते चाधिमासके॥"

तथा।

"सम्पूर्णे मिथुनेऽधिको यदि भवेन्मासस्तदा कर्कटे शेते" इति वचनैर्मिथुनाधिमासोऽयमेव द्विराषाढ़स्तदैव कर्कटे देव-शयनं नान्यदा। तद्वत्सरे च कन्यायां शक्रोत्सवः, तुलायां दुर्गोत्सवः, वृश्चिके च देवोत्थानम्। 'सम्पूर्णे मिथुनाधिक' इति वचनात्, एवंविधस्य संसर्गश्चिरतरकालं विना न भवतीति चिरेणैव च द्विराषाढ़ोऽधिमासः। माथुरैश्चायमेव द्विराषाढ़ोऽनुष्ठीयते। यत्तु संवत्सरमध्ये षट्सु मासेषु रविचन्द्रभोगवृद्ध्या प्रतिमासं दिनद्वयाधिक्यात् सार्द्धवर्षद्वये त्रिंशद्दिनवृद्ध्याधिमासः पतति। तथा च गणितविदः 'गतेऽब्दे द्वितय' इति, स यत्रैव पतति स एव

(१) विन्दुस्नानमिति क्वचिदादर्शे पाठः।

द्विरित्युच्यते। तेन सिंहाधिमासे कन्यायां शक्रोत्थानपार्श्वपरिवर्त्तने। कन्याधिमासे तुलायां दुर्गोत्थानम्। द्विराषाढ़त्वञ्च सौरमानेन न सम्भवति*। एकस्मिन् वत्सरे मिथुनभोगावृत्तेरभावात् स्वरूपतश्च कार्य्यतश्च वाच्यम्। सृष्ट्यादौ हि मधुमासः प्रथमं प्रवृत्तः प्रतिपदादिरिति, तथैव तस्या इज्या विहिता, तत्क्रियानुरोधाच्च मासान्तराणामपि इज्या प्रतिपदुपक्रमविधिबलादेव। तत्र यदि मिथुन एव रवौ प्रतिपद्द्वयं भवति, तदा "मासि संवत्सरे चैव तिथिद्वैधं यदा भवेत्" इति वचनेनोत्तरप्रतिपदः प्राश-

---

* सम्भ्रमवादोऽपि सम्भ्रमभट्टकल्पितशास्त्रार्थोऽपि सम्भ्रमवाद एव सम्भ्रमो भ्रान्तियुक्तो वादो यत्र सः। विन्दुदानम् अञ्जनशलाकादानं निरर्थकमिति पूर्व्वेणान्वयः। तथाच सर्व्वमज्ञानतिमिरमञ्जनेनानेनोपहृतमिति सम्भ्रमभट्टेन प्रागुक्तं तस्योपरि कटाक्षोऽयमिति भावः। जितेन्द्रियमतमुपन्यस्यति जितेन्द्रियस्तु मन्यते इत्यादि। अमावास्याद्वयं अमावास्यान्यचणद्वयम्। आषाढ़मासे तु सौराषाढ़मासे तु। सिनीवालीद्वयमिह पूर्व्वापरामावास्यान्यचणद्वयोपलक्षणार्थमेव गृह्यते, न तु चतुर्द्दशीयुक्तामावास्यामात्रम्। द्विराषाढ़स्तथा प्राश इति आहेति क्रियाध्याहारेणास्यान्वयः। मिथुनाधिमासः मिथुनस्थरव्यारब्धचान्द्राषाढ़ाधिमासः। अयमेव द्विराषाढ़ः द्विराषाढ़प्रयोजक इत्यर्थः। तत्रैव आषाढ़ाधिमास एव। कर्कटे देवशयनं कर्कटगतशुद्धचान्द्राषाढ़ एव देवशयनम्, नान्यदा। कन्यायां कन्यागतचान्द्रभाद्रे। तुलायां तुलागतचान्द्राश्विने। वृश्चिके वृश्चिकगतचान्द्रकार्त्तिके। एवंविधः संसर्गः आषाढ़ाधिमासरूपः। द्विराषाढ़ोऽधिमासः द्विराषाढ़प्रयोजकोऽधिमासः। माथुरैः मथुरावासिपण्डितैः। गतेऽब्दे द्वितये इति, 'गतेऽब्दे द्वितये सार्द्धे पञ्चपक्षे दिनद्वये। दिवसस्याष्टमे भागे पतत्येकोऽधिमासकः॥' स यत्रैव पतति यस्य मलमासत्वं स द्विरित्युच्यते। तथाच यस्य चान्द्रचैत्रादेर्मलमासत्वं स द्विश्चान्द्रचैत्रादिर्भवतीति भावः। तेन मलमासस्यैकनामकमासद्वयात्मकत्वेन। द्विराषाढ़त्वञ्च सौरमानेन न सम्भवतीति सौरमासस्य द्विरावृत्त्या द्विराषाढ़त्वं न सम्भवतीत्यर्थः।

स्येनाषाढ़यागार्थं ग्रहणात्तस्य त्रिंशत्तिथिसमाप्तत्वात् आषाढ़शेषारब्धस्य कर्कटशेषेणैव समापनात् तत्कार्य्यानुवृत्तिपर्य्यन्तं कार्य्यत आषाढ़ इत्येकः, स्वरूपतोऽपरश्च कार्य्यत इति भवति द्विराषाढ़ः। अत एवंविधस्य मासस्य षष्टिदिनत्वं परिशिष्टेन निर्द्दिष्टम् 'षष्ट्या तु दिवसैर्मास' इत्यादिना। तदेवंविधशास्त्रपौर्व्वापर्य्यालोचनानवहितैरभियुक्तंमन्यैर्माधवाद्येष्वित्यादि कथमुपनिबद्धम्? अन्यान्यप्येवंविधानि सम्भ्रमभट्टकल्पितान्युपेक्षणीयानि इत्येतदन्तं, तदयमतिमन्दतमो वादः कथं सुन्दरमतिना जितेन्द्रियेणाभिनन्दितः? * तथा 'ह्यामावास्यामतिक्रम्येति' स्वोपन्यस्तवचनैरेव पूर्व्वार्द्धेन द्विराषाढ़मेकमभिधाय, पुनः 'पतिते चाधिमासके' इत्यनेनापि क्तप्रयोगेन द्विराषाढ़ान्तरस्य मेषवृषयोरप्यधिमास-

---

* तदेवोपपादयति एकस्मिन्नित्यादि। स्वरूपतश्च स्वभावसिद्धः, कार्य्यतश्च कार्य्यानुरोधात्। सृष्ट्यादाविति, मधुमासः प्रथमं प्रवृत्तः प्रतिपदादिरिति, तथाच "चैत्रसितादेरुदयाद्भानोर्दिनमासवर्षयुगकल्पाः। सृष्ट्यादौ लङ्कायां सभं प्रवृत्ता दिनेऽर्कस्य॥" तस्य प्रतिपदादेः। इज्या यागविशेषः।

'मासि संवत्सरे चैव तिथिद्वैधं यदा भवेत्।
तत्रोत्तरोत्तमो ज्ञेयो पूर्व्वा तु स्यान्मलिम्लुचः॥'

इति सत्यव्रतवचनेन, आषाढ़यागार्थम् आषाढ़त्वेन विहितयागार्थं, तस्य च आषाढ़स्य च। आषाढ़शेषारब्धस्य सौराषाढ़शेषारब्धस्य। कार्य्यानुवृत्तिपर्य्यन्तं कार्य्यसमाप्तिपर्य्यन्तम्। पौर्व्वापर्य्यालोचनानवहितैः पौर्व्वापर्य्यालोचनरहितैः। अभियुक्तंमन्यैः आत्मानं पण्डितं मन्यमानैः। इत्येतदन्तमित्यस्य जितेन्द्रियस्तु मन्यते इत्यनेन प्राक्तनेन सम्बन्धः। अतिमन्दतमो वादः अतिनिकृष्टव्याख्या, मिथुनाधिमास एव द्विराषाढ़स्तदैव कर्कटे देवशयनं नान्यदा इत्येवंरूपः। अभिनन्दितः पुरस्कृतः।

निमित्तस्याभिधानात् कथन्तस्यानादरः ? 'पतिते चाधिमासके' इत्येतावत् एवानर्थकत्वापत्तेः। कथञ्च बहूनामेव द्विराषाढ़प्रक्रमलिखितानामुत्तरचिकाधिमासेऽपि वत्सरान्तरीयशयनाद्युत्कर्षवचनानां, 'प्रथमेऽह्नि द्वितीये वेति,' 'उत्तरमयने याते सवितरि' इत्यादीनां सकलप्रामाणिकपरिगृहीतानां सम्भ्रमकल्पितत्वं युक्तमुत्सहामहे। किञ्च मिथुनाधिमासे शयनादीनामुत्कर्षो भवतामपि निर्विवाद एव। तदा च किं सौरे शयनादिविधायिकां श्रुतिं परिकल्प्याधिमासनिमित्तोत्कर्षार्था अपरापि* परिकल्प्यतामाहोस्विदाषाढ़ादिपदस्य लाक्षणिकत्वं कल्पनालाघवा-

---

* आषाढ़मात्रं यद्द्विराषाढ़त्वमुक्तं तद्दूषयितुमुपक्रमते तथाहीत्यादि। पूर्व्वार्द्धेन इति, 'प्राप्ते आषाढ़मासे तु सिनीवालीद्वयं यदा। द्विराषाढ़ः स विज्ञेयः' इति, 'अमावास्यामतिक्रम्य यदार्कः कर्कटं व्रजेत्। द्विराषाढ़स्तदा प्राज्ञ' इति पूर्व्वार्द्धेन। क्तप्रयोगेण अतीतार्थक्तप्रत्ययसाधितपतिते इति शब्देन। द्विराषाढ़ान्तरस्य अन्यो द्विराषाढ़ः द्विराषाढ़ान्तरम्। अधिमासनिमित्तस्य अधिमासः निमित्तं यस्य, एतद्द्विराषाढ़ान्तरस्य विशेषणम्। एतावत एव पतिते चाधिमासके एतद्भागस्यैव। वत्सरान्तरीयशयनाद्युत्कर्षवचनानां, 'कन्यासिंहकुलीरेषु मलमासो यदा भवेत्। आगामिनि तदा वर्षे कुलीरे माधवः स्वपेत्' इत्यादिवचनानाम्। प्रथमेऽह्नि द्वितीये चेति, 'प्रथमेऽह्नि द्वितीये वा शुक्ले मेषमियाद्रविः। द्विराषाढ़स्तते विष्णुः परं कर्कटके स्वपे'दिति। उत्तरमयने याते सवितरि इति, 'उत्तरमयने याते सवितरि पतनं यदाधिमासस्य। भवति तदा द्विराषाढ़ः शेते कर्किणि सुराराति:' इति। सम्भ्रमकल्पितत्वं युक्तमुत्सहामहे सम्भ्रमभट्टसम्मतद्विराषाढ़त्वमपि युक्तम्, उत्सहामहे स्वीकुर्म्महे। निर्विवादः अवश्यं स्वीकार्य्यः। तदा च सौरे शयनादिविधायिकां श्रुतिं परिकल्प्येति, तथाच तदैव कर्कटे देवशयनं नान्यदेति स्वयमुक्तत्वादिति भावः। अपरापीति अपरा श्रुतिरपीत्यर्थः।

दङ्गीक्रियताम् । तत्र कल्पनातो लक्षणैव श्रेयसी । तेन शक्रोत्सवादिषु चान्द्रपरिग्रहे सति न्यायमूलान्येव वचनानि कथमन्यथा क्रियन्ते ? यच्च द्विराषाढ़त्वसमाधानमुक्तं स्वरूपतः कार्य्यतश्चेति तदयुक्तम् । मिथुने अधिमासपाते उत्तरप्रतिपद्याषाढ़ेज्यायाः प्रवृत्त्यनुपपत्तेः । स्त्र्यादौ हि चैत्रेज्यायाः प्रतिपदि प्रवृत्तत्वादाषाढ़ेज्यायाः प्रतिपदि प्रवृत्तिं प्रामाणिको वदति* । तत्रासौ प्रष्टव्यः चैत्रेज्यायाः प्रतिपदि प्रवृत्तिः किं चैत्रादित्वात् प्रतिपद्रूपत्वाद्वा ? चैत्रादिप्रतिपद्रूपत्वाद्वा ? तत्र यदि प्रथमस्तदा प्रतिपदोऽविधिसंस्पर्शात्, अर्थसिद्धत्वात्तिथ्यन्तरस्यापि चैत्रादित्वे तत्र कर्म्मणः कार्य्यत्वात् कथमाषाढ़ीयद्वितीयप्रतिपद्यनादिभूतायां तदिज्यारम्भसम्भावना ? यथा त्रिः प्रथमामन्वाहेति, निरुत्तमामन्वाहेति स्थानधर्म्मत्वादृग्विशेषस्यानादरो-

---

* स्वमतमाह आहोस्वित् उत वा इत्यादि । आषाढ़ादिपदस्य द्विराषाढ़ान्तर्गताषाढ़ादिपदस्य, लाक्षणिकत्वकल्पना गौणमुख्यत्वेन श्रावणादिसाधारण्येन लाक्षणिकत्वकल्पनालाघवात् अङ्गीक्रियतामित्यन्वयः । तत्र कल्पनातः श्रुतिद्वयकल्पनातः श्रेयसी लघुतरा। दूषयति तदयुक्तमिति । उत्तरप्रतिपदि शुद्धाषाढ़प्रतिपदि, आषाढ़ेज्या आषाढ़विहितयागविशेषः । तत्र प्रवृत्त्यनुपपत्तेरिति, तथाच मिथुन एव रवौ शुक्लप्रतिपद्द्वयं भवतीत्यादिना कार्य्यानुवृत्तिपर्य्यन्तः कार्य्यत आषाढ़ इत्येकः इति जितेन्द्रियेण प्राक् उक्तं, ततश्चास्य प्रकृताषाढ़त्वास्वीकारे कार्य्यमात्रार्थं स्वीकारेऽपि प्रकृताषाढ़ एव पुरुषस्य प्रवृत्त्या कार्य्यानुपयोग्याषाढ़े स्वतः प्रवृत्तिर्न भवितुमर्हतीत्याशय इति भावः । स्त्र्यादौ हीति चैत्रसितादेरुदयाद्भानोरित्यादिवचने चैत्रसम्बन्धिशुक्लप्रतिपदि युगाद्यारम्भात् । इज्याया अपि तत्रैवाकाङ्क्षितत्वेनाह, चैत्रेज्यायाः प्रतिपदि प्रवृत्तत्वादित्यादि ।

ऽर्थसिद्धत्वात्*। प्रतिपद्रूपत्वाच्चेत् तदा चैत्रत्वस्याप्रयोजकत्वात्,

---

* तत्र चैत्रेज्यादौ प्रष्टव्यविषयं व्याकरोति चैत्रेज्यायाः प्रतिपदि प्रवृत्तिरिति। तत्र त्रिधा विकल्पयति चैत्रादित्वादित्यादि। तथाच चैत्रादित्वेन विधिः उत प्रतिपत्त्वेन किंवा चैत्रादिसम्बन्धिप्रतिपत्त्वेन। प्रथमः यदि चैत्रादित्वेन विधिः। अविधिस्पर्शात् विधिस्पर्शाभावात् अविधेयत्वादित्यर्थः। अर्थसिद्धत्वात् चैत्रादिसम्बन्धित्वेन प्रयोजन-सिद्धत्वात्। तत्र तिथ्यन्तरेऽपि कर्म्मणः इज्यादिकर्म्मणः कार्य्यत्वात् करणीयत्वात्। कथ-माषाढ़ीयेत्यादि, तथाच चैत्रादित्वादित्यनेनाषाढ़ग्रहणेऽपि तदीयप्रथमप्रतिपद्ग्रहणमेव समुचितमेव प्रथमोपस्थितपरित्यागे प्रमाणाभावादिति भावः। अत्र दृष्टान्तं दर्शयति, यथा त्रिः प्रथमामित्यादि। अन्वाह अभ्यसेत, स्थानधर्म्मत्वात् प्राथम्यधर्म्मत्वात्।

'त्रिः प्रथमामन्वाह' इत्यादिषु स्थानधर्म्मताधिकरणम्।

सू. अभ्यासः सामिधेनीनां प्राथम्यात् स्थानधर्म्मः स्यात् ॥ ३१ ॥

भा. स्तो दर्शपूर्णमासौ, तत्र सामिधेनीः प्रकृत्योच्यते, 'त्रिः प्रथमामन्वाह' त्रिरुत्तमा-मन्वाह इति। तत्रैषोऽर्थः सांशयिकः,—किम् ऋग्धर्म्म एषः,—यत्र-तत्रस्था 'प्र वो वाजा' त्रिरभ्यसितव्या, उत स्थानधर्म्मः,—या अन्याऽपि प्रथममुच्यते, सा त्रिरभ्यसितव्या ? इति। कुतः संशयः ? उभयथोपपत्तेः,—यद्येवम् अभिसम्बन्धः क्रियते,—या असौ उच्चारितानां सामिधेनीनां प्रथममुच्चारिता, सा त्रिरभ्यसितव्येति, ततः प्र वो वाजाया ऋचो धर्म्मः ? अथैवं विज्ञायते प्राथम्य संयुक्तं त्रिः ब्रूयादिति ततो वचनस्य स्थानधर्म्मता, किन्तावत् प्राप्तम् ? ऋचो धर्म्म इति। कुतः ? प्राथम्यस्य व्यक्त्या सम्बन्धात्, व्यक्तेरभ्यासेन। कथमवगम्यते ? स्त्रीलिङ्गनिर्द्देशात्, व्यक्तिविशेषो हि स्त्री नाम, यदि तद्विशेषणं प्राथम्यं स्यात्, ततो लिङ्गविशेषनिर्द्देशोऽवकल्पते, साऽपि स्त्री अभ्यासेन सम्बध्यते ; अथ प्रथममनुब्रुवता त्रिरभ्यसितव्यमिति ततो व्यक्तिविशेषो न विवक्ष्येत, तत्र स्त्रीलिङ्ग-विशेषनिर्द्देशो नोपपद्यते। अपि च वाक्यभेदः प्रसज्येत। प्रथममुक्तं त्रिरभ्यसितव्यं, प्रथममुक्ता ऋक् त्रिरभ्यसितव्येति ; सत्यचे पुनः प्राथम्यलक्षिताया ऋचो धर्म्म उच्यते, तत्रैककार्य्यविधाने न भवेद्वाक्यभेदः। अपिच श्रुत्या प्राथम्येन स्त्री सम्बध्यते, वाक्येनाभ्यासः ; तस्मात् ऋग्धर्म्मो यत्र-तत्रस्था 'प्र वो वाजा' त्रिरभ्यसितव्येति। एवं

प्राप्ते ब्रूमः,—योऽयं सामिधेनीनां प्रथमायास्त्रिरभ्यास उच्यते, स प्रथमस्थाननिमित्तः धर्म्मः, न ऋचः कस्याश्चित् जातिनिमित्तः। कुतः? न हि क्वचिदपि ऋग्वेदे प्रथमा नाम काचित् ऋक् विद्यते, या त्रिरभ्यस्येत, तत्र प्राथम्यम् ऋग्लक्षणार्थं स्यात्, इतरस्मिन् पक्षे श्रुतिर्न लक्षणा, श्रुतिश्च ज्यायसी लक्षणायाः, तस्मात् असत्पक्षः। अथ यदुक्तं—स्त्रीलिङ्गसम्बन्धादस्मत्पक्ष एव श्रुतिः, वाक्यं च न भिद्यते, स्त्रीलिङ्गोपपत्तेश्चेति। अत्रोच्यते, गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्तीति अविशिष्यमाणायामपि व्यक्तौ यदवश्यं प्राप्तं लिङ्गं, तत् आश्रयभूतं गुणस्य भवति; अविधित्सितेऽपि तस्मिन् लिङ्गविशेषनिर्द्देशोऽनुवादभूतो भवत्येव; यथा, शुक्लः पुमान्, शुक्ला स्त्री, शुक्लं नपुंसकं; शुक्ल एकः, शुक्लौ द्वौ, शुक्ला बहव इति; शुक्लां शाटीमानयेति; यद्यपि शाट्याद्यानयनं न विधीयते, शुक्लसम्बन्धमात्रविधित्सा भवति, न तत्र लिङ्गेन विशेषणं क्रियते, तथापि अनुवादभूतः स्त्रीलिङ्गनिर्द्देशो भवत्येव,—शुक्लामानयेति अनुवादभूतत्वाच्च न वाक्यभेदो भविष्यति। एवं च सति, यद्यपि प्राथम्यस्य स्त्रीलिङ्गसम्बन्धः श्रौतस्तथापि प्राथम्यस्यैवाभ्यासेन सम्बन्धो न लिङ्गस्य; यदि लिङ्गस्यैतेन सम्बन्धोऽभिधीयते, प्राथम्यस्यानुवादता कल्प्येत। प्राथम्यसम्बन्धेऽप्यभिधीयमाने वाक्यं भिद्येत। अपिच, नैवात्र विवदितव्यं, प्रातिपदिकविशेषणं हि स्त्रीशब्दः, स्त्रियां यत् प्रातिपदिकं वर्त्तते, ततः टाबादय इति, न विशेषणस्य पदान्तरेण सम्बन्धो भवति, यथा राजपुरुषो गच्छतीति। यदा तु प्राथम्यस्याभ्यासेन सम्बन्धः, तत्र प्राप्तमनूद्यते स्त्रीत्वं, यानि सामिधेनीषु वचनानि, ऋचस्ताः, स्त्रीलिङ्गश्च ऋक्शब्दः, तत्र यत् प्रथमं वचनं, तस्याश्रयऋक्, गुणवचनानाञ्च शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति, इत्यविशेषितायामप्यृचि स्त्रीलिङ्गं भविष्यतीति यत्प्रथमवचनं, तत् त्रिराहेति, स्त्री च सा ऋक् सामिधेनी; तस्मात् 'त्रिः प्रथमामन्वाह' इति प्राप्तस्य लिङ्गस्यानुवादः,—'त्रिः प्रथमामन्वाह त्रिरुत्तमान्ताः पञ्चदश सम्पद्यन्ते' इति पञ्चदशानां सामिधेनीनां सम्पत्तये त्रिर्वचनम् उच्यमानं परिपूर्णाया ऋचो भवति, न ऋगवयवस्य, परिपूर्णा च समिन्धनवती न ऋगवयवः। तस्मात् प्राप्तानुवादो लिङ्गस्येति प्राथम्यस्य धर्म्मो न ऋचः। (८।१।८ अ।)

हतिः* । चैत्रे हि क्रियमाणा चैत्रेज्या भवति । चैत्रादिप्रतिपद्रूपत्वाच्चेत् नैतदपि तिथ्यन्तरस्य चैत्रादित्वे क्रियालोपापत्तेः, यथैव हि फाल्गुनेऽधिमासस्तदैव चैत्रादिः प्रतिपद्भवति, तेन पूर्व्वमधिमासे सति परमासेज्या प्रतिपदि प्रवर्त्तेत इति । मिथुनाधिमासे श्रावणेज्यायाः प्रतिपदि प्रवृत्तिरिति । न तत्राषाढ़ेज्याप्रसक्तिस्तदादित्वाभावात् । न चैवंविधो विधिरप्यस्ति अनुपन्यासात् । अथ चैत्रे या प्रतिपत् तत्रारम्भ इति चेत् ततः चान्द्रचैत्रारब्धा तत्रैव च समापनीयेति तदिज्यैव स्यान्न सौरे, चैत्रेज्या सौर एव हि मासे प्रारम्भसमाप्तिभ्यां कर्म्मणस्तन्मासीयत्वं भवति नान्यथा† सूर्य्यग्रहादिनिमित्तस्यैव कर्म्मणः ।

---

* द्वितीयकल्पं दूषयति प्रतिपद्रूपत्वादित्यादि । चैत्रस्याप्रयोजकत्वादिति, तथाच प्रतिपद्रूपत्वेन इज्याविधौ चैत्रपदाश्रवणात् सुतरामप्रयोजकत्वमिति भावः । इष्यादौ प्रथमप्रवृत्तचैत्रस्य इज्याविधावप्रवेशे दोषं दर्शयति, मासान्तरीयेत्यादि । व्याहतिः व्याघातः ।

† तृतीयकल्पं दूषयति चैत्रादिप्रतिपद्रूपत्वाच्चेदित्यादि । तथाच यदि चैत्रस्य प्रथमदिनजातप्रतिपत्त्वेन विधिः स्यात्, तदा तिथ्यन्तरस्य चैत्रप्रथमदिनजातत्वे चैत्रेज्या न स्यादित्याह तिथ्यन्तरस्येत्यादि । चैत्रादिप्रतिपद्भवति चैत्रस्य प्रथमदिने प्रतिपत् सम्भवति । पूर्व्वाधिमासे सति अव्यवहितपूर्व्वमासस्याधिमासत्वे सतीत्यर्थः । प्रतिपदि वर्त्तेत तन्मासीयप्रथमदिनजातप्रतिपदि वर्त्तेत इत्यर्थः । अनुपन्यासात् एतद्रूपत्वेन विधिवाक्याश्रवणात् । चैत्रे या प्रतिपत् तत्रैवारम्भ इति, तथाच प्रथमप्राप्तिर्न विवक्षितेति भावः । चैत्रे या प्रतिपत् चैत्रसम्बन्धिनी या प्रतिपत् तत्र प्रतिपदि आरब्धा इज्येति चेन्न तत्रैव चान्द्रचैत्र एव समापनीय इति, समापनीया इति चेत् तदिज्यैव स्यात् । तदैव चान्द्रचैत्रेज्या न सौरचैत्रेज्या न सा सौरचैत्रेज्या । तन्मासीयत्वं सौरचैत्रमासीयत्वं नान्यथा, तथाच चान्द्रचैत्रारब्धा सौरचैत्रसमापनीया सौरचैत्रेज्या न भवतीत्यर्थः ।

यच्च, मासि संवत्सरे चैवेति वचनं तत्तिथिविशेषविहिते कर्म्मणि तिथिद्वैधे उत्तरग्रहणार्थमस्य च सौरमासयागत्वात् नान्तरीयकः प्रतिपत्सम्बन्धो न विवक्षितः। यत्र तु त्रिःपरिवृत्तत्र्यनीकाविधौ भागकर्म्मत्वपक्षे ऐन्द्रवायवाग्रं प्रथममाहुरिति श्रुतमप्यह्नो न विवक्षितं कथं तत्राश्रुतैव प्रतिपत्तिथिर्विवक्ष्यताम्*। किञ्च प्रतिपद्द्वैधे भवतूत्तरग्रहणं तिथ्यन्तराणान्तन्मासे द्वैधाभावात् मिथुनस्थानामेव ग्रहणात् कर्कटे कथं तिथिकार्य्याणि? न च प्रतिपदुत्कर्षात् तिथ्यन्तरकार्य्याणामुत्कर्ष इति वाच्यं, क्रमानुरोधेन कालबाधापत्तेः। प्रतिपन्मात्रानुरोधेन च सकलतिथि-

---

* अत्र दृष्टान्तं दर्शयति सूर्य्यग्रहादीत्यादि, आदिना चन्द्रग्रहणपरिग्रहः। तथाच ग्रहणनिमित्तकर्म्मणः ग्रहणेतरकाले समापनमनुचितमेवेति भावः। सौरमासयागत्वात् सौरमासकरणीययागत्वात्। नान्तरीयकः उद्दिश्यतासम्बन्धेन प्रवृत्त्यभावत्वे सति प्रवृत्तिजन्यफलशालित्वं, यथा ओदनं पक्तुकामस्योदनसहमाषपाकः। प्रकृते दृष्टान्तार्थमाह, त्रिःपरिवृत्तत्र्यनीकाविधौ भागकर्म्मत्वपक्षे ऐन्द्रवायवाग्रं प्रथममहरिति। त्र्यनीकाधिकरणं विस्तृतं मीमांसादर्शनस्य दशमाध्यायस्य पञ्चमपादे उक्तं संक्षिप्य प्रकृतोपयोगिमात्रमभिधीयते त्रिः परिवृत्त इति। अथैतरेषां नवानामह्नामैन्द्रवायवाग्रं प्रथममहः। अथ शुक्राग्रम् अथाग्रयणाग्रम् अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम् अथाग्रयणाग्रम् अथैन्द्रवायवाग्रम्, अथ शुक्राग्रम् अथाग्रयणाग्रम् अथैन्द्रवायवाग्रमित्यनेन त्रिः परिवृत्त इत्यर्थः। त्र्यनीकाविधौ त्रीणि अनीकानि अग्राणि ऐन्द्रवायवशुक्राग्रयणरूपाणि यस्यां सा त्र्यनीका तत्र विधौ विधित्वस्वीकारे। भागकर्म्मत्वपक्षे ऐन्द्रवायवाग्रं प्रथममहः अथ शुक्राग्रम् अथाग्रयणाग्रमित्यादिना कर्म्मणो विभागकल्पने। श्रुतमप्यह्नः प्रथममहः न विवक्षितमिति अन्यथा कर्म्मविभागानुपपत्तेरिति भावः। कथं तत्रैवेत्यादि तत्र अश्रुतैव प्रतिपत्तिथिः कथं विवक्षितेत्यन्वयः। तथाच मासि संवत्सरे चैव तिथिद्वैधमित्यादिवचने तिथित्वेन सामान्यतः श्रुतापि विशेषरूपेण प्रतिपत्तिथिरश्रुतैव इति भावः।

कार्य्याणां कालबाधः स्यात्। 'अग्निमारुतादूर्द्धमनुयाजैश्चरन्ती'ति* तत्रापि कालबाधेनैव क्रमानुरोधानुत्कर्षः। न त्वनङ्गक्रमानुरोधेनाङ्गकालबाधः। अङ्गत्वपक्षेऽपि क्रमस्य कालाज्जघन्यत्वात्। वचनस्यैकतिथिकार्य्यमात्रगोचरतयाप्युपपत्तेः।

---

* ननु तिथिद्वैधमित्यनेन सामान्यतः श्रुतापि प्रथमोपस्थितत्वात् श्रुतैव कथमश्रुतैवेत्युक्तं सङ्गच्छते इत्यत आह किञ्चेति। उत्तरग्रहणम् उत्तरप्रतिपद्ग्रहणं भवतु इत्यन्वयः। तिथ्यन्तराणां प्रतिपद्भिन्नतिथीनां तन्मासे मिथुनमलमासे मिथुनस्थानां तिथीनां तिथ्यन्तरकार्य्याणामुत्कर्ष इति भावः। सांदृष्टिकन्यायादिति शेषः। सकलतिथिकार्य्याणां कालबाधः स्यादिति तथाच केवलप्रतिपदनुरोधेन सकलतिथिकालबाधोऽन्याय्य इति भावः। अत्र दृष्टान्तं दर्शयति अग्निमारुतादूर्द्धमनुयाजैश्चरन्तीत्यादि। तथाच तदधिकरणं मीमांसादर्शनस्य चतुर्थाध्यायीयतृतीयपादे उक्तं यथा—

अनुयाजादीनामाग्निमारुतोर्द्धकालताधिकरणम्।

सू.—अनुत्पत्तौ तु कालः स्यात्प्रयोजनेन सम्बन्धात्।

भा.—ज्योतिष्टोमे श्रूयते—"आग्निमारुतात् ऊर्द्धम् अनुयाजैश्चरन्ति," "प्रहृत्य परिधीन् जुहोति हारियोजनम्" इति। तत्र सन्देहः—किम् अङ्गम् विधीयते, उत कालः? इति। अङ्गविधाने श्रुतिः कालविधानेन लक्षणा, तस्मात् अङ्गविधानम् इति प्राप्ते

भा.—ब्रूमः, अनुत्पत्तिवाक्ये "कालः स्यात्," अग्निमारुतं सोमाङ्गम् अनुयाजाः पश्वङ्गं, तत्र न तयोः परस्परेण सम्बन्धः। तथा परिधयः पश्वङ्गं हारियोजनम् अन्यदेव प्रधानम्। अनुयाजः आग्निमारुतञ्च प्राप्तम्। आनन्तर्य्यमेव तयोर्न प्राप्तं, तत् विधीयते; तथा हारियोजनस्य परिधिप्रहरणस्य च। एवञ्च सति, न हारियोजनस्य परिधिप्रहरणेन कश्चिदुपकारः क्रियते, हारियोजनेन वा परिधिप्रहरणस्य। ननु परिधिप्रहरणस्य उपरिष्टाद्भावेन तस्य उपक्रियते इति। उच्यते, न हि उपरिभावार्थं परिधिप्रहरणम् अनुष्ठेयम् विद्यते एव, एतत् पश्वर्थं, तस्मिंश्च सति तस्य उपरिभावो विद्यते एव इति। तस्मात् कालार्थः सम्बन्धः इति। (४।३।१५ अ.)

तस्मात् कथं प्रतिपद्द्वये द्वितीयप्रतिपदो ग्रहणम्? न च शयनादेरिव मासेज्यायाः पूर्व्वस्य मलमासत्वादुत्तरक्रिया तथाविधविधानाभावात् लक्ष्मीप्रबोधादीनामिव मलिम्लुचेऽपि तत्क्रिया स्यात्। अननुष्ठानमेव प्रतिष्ठादेरिव, तस्मान्न कार्य्यतो द्वितीय आषाढ़ः। न च शयनादिकार्य्यसम्बन्धादेरिव द्विराषाढ़ता। सति द्विराषाढ़े तद्विधानात् अन्योन्याश्रयापत्तेः*। किञ्च यदामावास्यामतिक्रम्य रात्रौ प्रतिपदि कर्कटसंक्रान्तिस्तदा परदिनप्रतिपदः कर्कटसम्बन्धा'न्मासि संवत्सरे चैवे'त्येतद्विषयत्वाभावान्मिथुन एवाशुचौ शुचिमासेज्येति। अमावास्यातिक्रमेऽपि द्विराषाढ़त्वाभावात्† स्वापावर्त्तप्रबोधानाञ्च सङ्कल्प-

---

* अत्र यथा कालबाधो न स्वीक्रियते, तथा प्रकृतेऽपीति इत्याह कालबाधेनेत्यादि। न चेति न हीत्यर्थः, अस्य तु उत्तरक्रियायामन्वयः; तथाच शयनादीनां मलमासे निषेधात् यथा उत्तरमासे कर्त्तव्यता नात्र मासेज्यायां तथा। अत्र हेतुमाह तथाविधविधानाभावादित्यादि। लक्ष्मीप्रबोधादीनामिव—'अमावास्यां तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति' इति वचने तुलादित्यगतामावास्यायां प्रबोधश्रुतेः यथा लक्ष्मीप्रबोधस्य मलमासे कर्त्तव्यता तद्वन्मासेज्याया अपि मलमासे कर्त्तव्यता; किंवा प्रतिष्ठादेरिव अननुष्ठानं, तथाच—'मासि मलिम्लुचेऽप्येवं यजेद्देवीं सशङ्कराम्। किन्तु नोद्यापनं कार्य्यमित्याह भगवान् शिवः॥' न चेति न हीत्यर्थः। अन्योन्याश्रयापत्तेरिति, तथाच—'द्विराषाढ़ः स विज्ञेयः विष्णुः स्वपिति कर्कटे' इत्यादिवचनेन कर्कटादौ हरेः शयनादेर्विधानादेव द्विराषाढ़ो वा स्यात्। तदा सत्येव द्विराषाढ़े तद्विधानमुपपद्यते इति शयनादिविधानज्ञानसापेक्ष्यद्विराषाढ़ज्ञानं, द्विराषाढ़ज्ञानसापेक्ष्यशयनादिविधानमित्यन्योन्याश्रयापत्तिरिति भावः।

† दोषान्तरमाह किञ्चेति। 'अमावास्यामतिक्रम्येत्यादि'; 'मासि संवत्सरे चैव'

रूपत्वेन मलिम्लुचेऽपि निषेधात्। उत्तरत्र द्विराषाढ़त्वे सति विधानाद्देवशयनं लुप्येत। यच्च सरूपकार्य्याभ्यां द्विराषाढ़मभिधाय षष्टिदिनत्वमुक्तं तदसम्बद्धम्; षष्ट्या तु दिवसैर्मास इत्यनेनाहोरात्रपरो वा दिवसशब्दस्तिथिपरो वेत्युभयथापि न षष्टिसंख्यतानियमः। चान्द्रस्य नियतत्रिंशत्तिथिसंख्यत्वेऽपि सौरस्य तदूनाधिकाहोरात्रसंख्यस्य सम्भवात्। वैशाखादिषु द्वात्रिंशत्तिथिभिरहोरात्रैर्वा प्रायशः सौरमासदर्शनात्। तस्माज्जितेन्द्रियोक्तोऽपि द्विराषाढ़ोऽसुन्दरतया मन्दैरिवाभिनन्दनीयः। विद्वद्भिस्तु यथोक्तसकलपर्य्यालोचनेनास्मदुपदर्शितद्विराषाढ़कल्पो निर्विकल्पमादरणीयः। अयमेवार्थो दीक्षितधवलैरप्युक्त इति *।

---

इत्येतद्विषयत्वादिति। तथा चायमाशयः—रात्रौ प्रतिपदि कर्कटसंक्रान्तिरित्यनेन, 'आसुरी रात्रिरन्यच्च' इत्यादिवचनेन विशेषविहितेतरकर्म्मणि रात्रेः पर्य्युदस्ततया रात्रिवृत्तिप्रतिपदः कर्म्मयोग्यता नास्तीति प्रतिपादितम्। तथाच—

'मासि संवत्सरे चैव तिथिद्वैधं यदा भवेत्।

तत्रोत्तरोत्तमा ज्ञेया' इति वचने यत्तिथिद्वैधमुक्तं तद्द्विविधं, शुद्धाशुद्धभेदेनैकविधं, खण्डद्वयेनापरविधञ्च। खण्डद्वयमभिप्रेत्य निषेधयति एतद्विषयत्वाभावादिति। रात्रिवृत्तिप्रतिपदः कर्म्मायोग्यतया द्वैधानुदयात्। मिथुन एवाशुचौ मिथुनमलमास एवेत्यर्थः, शुचिमासेज्या आषाढ़मासेज्या, 'ज्यैष्ठ शुक्रः शुचिस्त्वयमाषाढ़े' इति कोषात्। द्विराषाढ़त्वाभावादिति। तथाच कार्य्यत एव जितेन्द्रियेण द्विराषाढ़त्वाङ्गीकारात् सौरमासेज्यायाः मलमासे निषेधाभावेन उत्तरमासि कर्त्तव्यत्वाभावात् मलमासे सत्यपि तत्कर्म्मणि द्विराषाढ़त्वाभावः सुतरामेवेति भावः।

* द्विराषाढ़त्वाभावे चापरमपि दोषं दर्शयति 'स्वापावर्त्तप्रबोधादीनाञ्चेत्यादि'। सङ्कल्परूपत्वेन वैधरूपत्वेन। देवशयनं लुप्येत इति, द्विराषाढ़त्वाभावादिति, प्रागुक्त-

## अथ शयनादिनिमित्ता क्रियोच्यते ।

तत्र विष्णुधर्म्मोत्तरे मार्कण्डेयः ।

"हिंसात्मकैश्च किन्तस्य यज्ञैरन्यैर्महात्मनः ।
प्रस्वापे च प्रबोधे च पूजितो येन केशवः ॥"

अनेन विशिष्टा पूजा विहिता ।

तथोपवासविधिः काश्यपपञ्चरात्रे ।

"मदुत्थाने मच्छयने मत्पार्श्वपरिवर्त्तने ।
अत्र यो दीक्षितः कश्चिद्वैष्णवो भक्तितत्परः ॥
निर्निमित्तमदीक्षायां न च क्षुद्व्याधिपीड़ितः ।
अन्नं वा यदि भुञ्जीत फलं मूलमथापि वा ॥
अपराधमहन्तस्य न क्षमामि तु कश्यप ।
क्षिपामि नरके घोरे हृच्छल्यं जायते मम ॥"

निमित्तं प्रारब्धचान्द्रायणादिव्रतविरोधो* रविशुक्रवारदेवराजका-

---

हेतोरिति शेषः । स्वरूपकार्य्याभ्यां स्वरूपतः कार्य्यतश्चेत्यर्थः । द्विराषाढ़मभिधाय षष्टि-दिनत्वमुक्तमिति । कार्य्यानुवृत्तिपर्य्यन्तं कार्य्यत आषाढ़ इत्येकः, स्वरूपतः अपरश्च कार्य्यत इति भवति । मासस्य षष्टिदिनत्वं परिशिष्टेन निर्द्दिष्टं, 'षष्ट्या तु दिवसैर्मास' इत्यादिना इत्यनेनोक्तं षष्टिदिनत्वम् । तदूनाधिकाहोरात्रसंख्यस्येति रविगतेर्मन्दत्वामन्दत्वाभ्यां त्रिंशद्दिनन्यूनाधिककाले सौरमाससमापनात् निर्विकल्पमिति क्रियाविशेषणम् ।

* अथ शयनादिनिमित्तक्रियोच्यते । शयनादिकालं निरूप्य प्रसङ्गात् तन्निमित्त-क्रिया अभिधीयते । प्रस्वापे शयनकाले, प्रबोधे च उत्थाने च, चकारात् पार्श्वपरिवर्त्तन-कालपरिग्रहः, येन जनेन केशवः पूजितः तस्य महात्मनो जनस्य हिंसात्मकैः कर्म्मभिः

दिविरोधश्च, सूतकमृतकादिकञ्च अशुचेरनधिकारात्*। टीका-

किम्? अथवा हिंसात्मकैरिति यज्ञविशेषणम्, पशुयागादिभिरित्यर्थः। निर्निमित्तमित्यादीनां सार्थक्यं स्वयं दर्शयति, प्रारब्धचान्द्रायणादिव्रतविरोध इत्यादि। तथाच चान्द्रायणादौ भोजननियमात् तन्निमित्तकभोजने दोषाभावज्ञापनार्थं निर्निमित्तमित्युक्तम्। तथाच याज्ञवल्क्यः।

"तिथिवृद्ध्या चरेत् पिण्डान् शुक्ले शिख्यण्डसम्मितान्।
एकैकं ह्रासयेत् कृष्णे पिण्डं चान्द्रायणं चरन्॥
इन्दुक्षये न भुञ्जीत एष चान्द्रायणो विधिः॥"

पिण्डान् ग्रासान्। एतत्तु न स्मार्त्तादिमतं, तन्मते चान्द्रायणे भोजनस्य परिसंख्या न नियमः। निर्निमित्तमित्यत्र निमित्तम् अवश्यकर्त्तव्यत्वम्। तथाच। "अष्टाब्दादधिको मर्त्त्यो ह्यपूर्णाशीतिवत्सरः। यो भुंक्ते मानवो मोहात् एकादश्यां स पापकृ"दित्यादिवचनबोधितनिमित्तं ज्ञेयम्।

* रविशुक्रवारेति, यथा मत्स्यपुराणे।

"संक्रान्त्यां कृष्णपक्षे च रविशुक्रदिने तथा।
एकादश्यां न कुर्व्वीत उपवासस्य पारणम्॥"

एतत्तु काम्योपवासनिषेधकं,न तु नित्योपवासस्य।

हेमाद्रिधृतकात्यायनस्मृतौ।

"संक्रान्तौ रविवारे वा एकादश्यां यदा भवेत्।
उपोष्या सा महापुण्या सर्व्वपापहरा तिथिः॥" इत्यादि।

सूतकमृतकादिकञ्च अशुचेरनधिकारादिति यदुक्तं तत्पूजायामनधिकारज्ञापनार्थम्, न तूपवासे।

तथाच कूर्म्मपुराणम्।

"काम्योपवासे प्रक्रान्ते त्वन्तरा मृतसूतके।
तत्र काम्यव्रतं कुर्य्यात् दानार्चनविवर्ज्जितम्॥"

याञ्चरुशेषप्राशनस्य विहितत्वात् अदीक्षायामित्युक्तम्। क्षुद्व्याधि-नानारोगादिना वा पीड़ितः, सर्व्वमेतत् प्रदर्शनमात्रम्। शुचिः शक्तो निर्विरोध इत्यर्थः। तथा अन्नादिकमुपलक्षणम्, तेन तथाविधोऽयमुपवासं न कुर्य्यात्, तदा दोषं दर्शयित्वोपवासकर्त्तव्यतापरं वचनम्। पुत्रवता गृहिणा च वारादिविरोधपरिहारो यावन्मात्रेण वायुजलान्यतराशनेन कर्त्तुं शक्यते तावदेव तेन कार्य्यं, न पुनर्वारादिदूषितायामितरैकादश्यामिवेच्छातो नक्तं हविष्यान्नादिक्रियेति। एतदर्थ'मन्नं वा यदि भुञ्जीत फलं मूल'मित्याद्युक्तं, तेन च लोकसिद्धोपवासविधिरयं लोकसिद्धश्च जलवाय्वाहारोऽप्युपवासीत्युच्यते*। अतएव शास्त्रेऽप्येकादशी-

---

विष्णुरहस्यम्। "परमापदमापन्ने हर्षे वा समुपस्थिते।
सूतके मृतके चैव न त्याज्यं द्वादशीव्रतम्॥"

वराहपुराणञ्च।
"सूतके तु नरः स्नात्वा प्रणम्य मनसा हरिम्।
एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते॥"

पुत्रवता गृहिणा चेत्यादिवारादिविरोधपरिहारः।
"आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्य्ययोः।
पारणं चोपवासञ्च न कुर्य्यात् पुत्रवान् गृही"त्यादिवचनबोधितनिषेधानुपालनम्।

* वायुजलान्यतराशनेन यावन्मात्रेण कर्त्तुं शक्यते, तेन पुत्रवता गृहिणा तावदेवेति। एवकारस्यान्ययोगव्यवच्छेदं दर्शयति न पुनरित्यादि। तथाच, शयनीबोधनीभिन्नैकादश्यां रविशुक्रवारादियोगे पुत्रवता गृहस्थेन नक्तहविष्यान्नभोजनादिना यथा दोषपरिहारः क्रियते, नात्र शयनीपार्श्वपरिवर्त्तनीबोधनीष्वेकादशीषु रविशुक्रवारादियोगे-

मुपवसन्ति निरम्बुभक्षा इति। अम्बुभक्षो निरम्बुभक्षश्च उपवासो द्विविधः, अन्यथा निरम्बुभक्षा इति विशेषणानुपपत्तेः। तेन पार्थिवस्य यस्य भक्षणाद्रसस्य निष्पत्तिस्तस्याभक्षणमुपवासः; सलिलसमीरणनिगरणाद्रसनिष्पत्तिः शरीरे न कदाचिदिति, न तद्भक्षणादुपवासपदार्थबाधः*। ततश्चोपवासमात्रविधानात् रविवारादौ च पुत्रवतो गृहिणो वायुजलाहारशून्योपवासव्यक्तिविशेषविरोधात् वायुजलाहारात्मकमेवोपवासमसौ कुर्य्यादिति निर्णीयते। यदि चैकेन विधिना एतद्द्वयं न

ऽपि तथा; परन्तु तास्वेकादशीषु रव्यादियोगेऽपि विशेषवचनात् वायुजलान्यतरभोजनेन दोषपरिहारः कार्य्य इति ग्रन्थकर्त्तुराशय इति भावः। लोकसिद्धश्च जलवाय्वाहारोऽप्युपवासीत्युच्यते इति; जलवाय्वाहार इति, जलं वायुर्वा आहारो यस्य। जलस्य पाने यदुपवासीत्युच्यते इत्युक्तं तन्मरणसम्भावनायाम्। तथाच—

"अत्यये चाम्बुपाने च उपवासो न दुष्यति।"

ग्रन्थकृन्मते तु जलस्याशितानशितत्वेन पुत्रवतो गृहस्थस्य जलपाने अशिततया रव्यादिदोषपरिहारः सिद्ध्यति, अनशिततया च उपवासः सिद्ध्यति चेति समाधानम्। तथाच—आपो वै सर्व्वरसाः तासामशनेनाशितोऽनशितश्च भवतीति।

* यत एव जलवाय्वशने उपवाससिद्धिर्लोकमात्रसिद्धा, अतएव इत्यर्थः। निरम्बुभक्षा इति निर्नास्ति अम्बुभक्षः जलपर्य्यन्तभक्षणं येषां ते निरम्बुभक्षाः। उपसंहरति तेनेत्यादि। पार्थिवस्य पृथिवीसम्बन्धिनः रसस्य निष्पत्तिरिति, रसस्य देहस्थधातुविशेषस्य निष्पत्तिर्वृद्धिरित्यर्थः। अतएव—'अञ्जनं रोचनञ्चापि गन्धान् सुमनसस्तथा। पुण्यके चोपवासे च नित्यमेव विवर्ज्जयेदिति॥' 'गात्राभ्यङ्गं शिरोऽभ्यङ्गं ताम्बूलं चानुलेपनम्। व्रतस्थो वर्जयेन्नित्यं यच्चान्यद्बलरागकृ'दित्यादि वचनेन बलरागकृद्वस्तुमात्रम् उपवासे निषिद्धम्। सलिलसमीरणनिगरणात् जलवाय्वोर्भक्षणात्। न कदाचिदिति रसनिष्पत्तिरिति शेषः। तद्भक्षणात् जलवाय्वोर्भक्षणात्।

सम्भवति, तदा वैष्णवविधिद्वयम्, एकः निरम्बूपवासविधिरपरश्च रविवारादौ तदितरोपवासविधिः। यद्वायमत्र परमार्थः, रविवारादिनिषेधो नात्र प्रवर्त्तते, तस्यैकादश्युपवासविषयत्वात् अस्य चातद्रूपत्वादिति सर्व्वं सुस्थम्।

तन्निमित्तोपवासस्य* कालमाह स्मृतिसमुच्चये।

"पूर्व्वेद्युरुपवासः स्यात् पूर्व्वाह्णे स्वापबोधयोः।
अपराह्णे यदा तौ तु तदहर्नियमं विदुः॥
रात्रावुदयमापन्ने कृष्णे च गरुड़ध्वजे।
पूर्व्वेद्युरुपवासः स्यात् न परे धर्म्ममाचरेत्॥"

---

* उपसंहरति ततश्चेति। उपवासमात्रविधानात् निरम्बुत्वसाम्बुत्वौदासीन्येनोपवासविधानात्। वायुजलाहारशून्योपवासव्यक्तिविशेषविरोधादित्यादि। तथाच—'आदित्येऽहनि संक्रान्तौ असितैकादशीदिने। पारणञ्चोपवासञ्च न कुर्य्यात्पुत्त्रवान् गृही॥' इति सामान्यनिषेधस्यासङ्कोचेनोपपत्तेरावश्यकतया जलपानस्याशितानशिततया च वायुजलाहारात्मकोपवासः सिद्ध्यतीति भावः। वैष्णवमात्रगतदोषख्यापनादिति। तथाच कालमाधवीये नारदः—'नित्यं भक्तिसमायुक्तैर्नरैर्विष्णुपरायणैः। पक्षे पक्षे च कर्त्तव्यमेकादश्यामुपोषणम्॥' 'पुत्त्रवांश्च सभार्य्यश्च स्वजनैर्भक्तिसंयुतः। एकादश्यामुपवसेत् पक्षयोरुभयोरपि॥' गृहिणश्च वैष्णवातिरिक्तगृहिणश्चेत्यर्थः। विधिद्वयं विवृणोति एकश्चेत्यादि। 'शयनीबोधनीमध्ये या कृष्णैकादशी भवेत्। सैवोपास्या गृहस्थेन नान्या कृष्णा कदाचन॥' इत्यादिनानावचनैः शयनीबोधनीमध्यवर्त्तिनीषु कृष्णैकादशीषु पुत्त्रवतो गृहस्थस्य उपवासदर्शनात् 'बहूनामेकधर्म्माणामेकस्यापि यदुच्यते। सर्व्वेषामेव तत् कुर्य्यादेकरूपा हि ते स्मृताः॥' इति वचनात् शयन्यादौ रविवारादियोगेऽपि पुत्त्रवतो गृहस्थस्य उपवासो विधीयते। लाघवादिति विभाव्याह यद्वेत्यादि। तस्य शयनादिनिमित्तोपवासस्य। अतद्रूपत्वात् एकादशीनिमित्तत्वाभावात्। तन्निमित्तोपवासस्य स्वापादिनिमित्तोपवासस्य।

दिनं द्विधा विभज्याह्नः पूर्व्वभागः प्रहरद्वयं पूर्व्वाह्नस्ततस्त्वपरभूतमपरम् प्रहरद्वयमपराह्नः। तेन यदि दिनस्य पूर्व्वार्द्धे देवस्य स्वापः प्रबोधो वा, तदा पूर्व्वदिने तूपवासः कार्य्यः। दिनोत्तरभागे तु तद्भवने तस्मिन्नेव निमित्तवति दिने उपवासक्रियेति वचनार्थः। त्रिधाविभागेन तु पूर्व्वाह्नापराह्नग्रहणे मध्याह्नस्वापप्रबोधनिमित्तक्रियाकलापोपदेशो न स्यात्। पूर्व्ववचनेन च दिनस्य पूर्व्वापरार्द्धभेदेन स्वापप्रबोधनिमित्तस्योपवासस्य कालविशेषनियमात् रात्रौ तन्निमित्तस्य कः काल इत्यपेक्षायां रात्रावुदयमापन्न इत्युदयपदं स्वापप्रबोधपरम्। तेन रात्रौ शयने प्रबोधे वा तस्या एव रात्रेः पूर्व्वं यद्दिनं, तत्रैवोपवासक्रिया, न तु तस्या रात्रेः परेऽहनि। यथा रात्रौ परार्द्धे सूर्य्यसंक्रमणे परस्मिन्नहनि तन्निमित्तकर्म्माचरणम्, न तथात्र, किन्तु निमित्तवत्येव दिन इत्यर्थः। तेनोदयात् प्रभृति प्रहरद्वयपर्य्यन्तं स्वापे वा प्रबोधे वा पूर्व्वदिन उपवासक्रिया। तदूर्द्ध्वन्तु सूर्य्योदयान्तरं यावच्छयने उत्थाने वा तदहरेवेति। अतः पूर्व्वार्द्धसामीप्यात् रात्रिशेषो लक्ष्यत इत्यप्रमाणकमप्रयोजकञ्च हेयम्। न च दिवाशयनस्य रात्रौ चोत्थानस्य निषेधात्तदनुपपत्त्या लक्षणा वाच्या। "पादयोगे न कर्त्तव्ये नाहोरात्रं विचिन्तयेदिति" दर्शनात्। अतएव—

"रात्रौ प्रबोधो विनिहन्ति पौरान्<br>
स्वापो दिवा राष्ट्रकुलं नृभर्त्तुः।<br>
सन्ध्याद्वये अल्पफला धरित्री<br>
भवेन्नराणामपि रोगदुःखम्॥"

इति दोषश्रुतिः।

यच्च वचनम्।

"सञ्चिन्त्य तु ततः पश्चात् पौष्णावसानमुत्तमम्।
अध्याहार्य्य तदोत्थानमेकादश्यान्तु कारयेत्।
ततस्तोत्थापयेद्देवं चतुर्भुजमरिन्दमम्॥"

व्याख्यातञ्च तत्, उत्थानमुखेन विहितं पूजादिकं तेन यत्र क्वचिन्नक्षत्रवशेन भवतु शयनादिकम्, तथाप्येकादशीद्वादश्योरेव शयनादिनिमित्तं चोदितं कर्म्म सम्पादनीयमिति शास्त्रार्थोऽवधार्य्यते, तदेतदनुपपन्नम्*। 'पूर्व्वेद्युरुपवासः स्यात्' इत्यादि-

* 'पूर्व्वेद्युरुपवासः स्या'दित्यादि वचनं स्वयं व्याकुरुते दिनं द्विधा विभज्य इत्यादि। तद्भवने स्वापादौ जाते निमित्तवति दिने स्वापाद्यधिकरणीभूतदिने। त्रिधा विभागे तु दिनं त्रिधा विभज्य पूर्व्वाह्णादिग्रहणे तु। तस्या रात्रेः पूर्व्वं यद्दिनं सूर्य्यकिरणावच्छिन्नचतुर्यामरूपं दिनमित्यर्थः। उपवासक्रिया इति उपवासस्य अहोरात्रसाध्यत्वात् उपवासारम्भक्रियेत्यर्थः। निमित्तवति निमित्तीभूतस्वापाद्यधिकरणीभूते दिने इति, दिनपदस्याहोरात्रपरत्वात्। उपसंहरति तेनेति, उदयात् प्रभृति उदयमारभ्य पूर्व्वदिने स्वापप्रबोधाधिकरणदिनपूर्व्वदिने इत्यर्थः। 'पूर्व्वेद्युरुपवासः स्यात् पूर्व्वाह्णे स्वापबोधयो'रिति वचनात्। तदूर्द्ध्वप्रहरद्वयादूर्द्ध्वं सूर्य्योदयान्तरं यावत् अपरोदयपर्य्यन्तम्। तदहरेवेति निमित्तीभूतस्वापप्रबोधाधिकरणदिनमेवेत्यर्थः। रात्रिशेष उत्तरप्रभात इत्यर्थः। रात्रिशेषलक्षणां साधयति, न चेत्यादि। लक्षणा वाच्या रात्रिशेषलक्षणा वाच्या। यत एव पादविशेषयोगेन नाहोरात्रचिन्तनम् अतएवेत्यर्थः। दोषश्रुतिः मैत्राद्यपादादियोगादितरत्र दोषश्रुतिः। सञ्चिन्त्य संप्राप्य। पौष्णावसानं रेवतीशेषभागम्। अध्याहार्य्य आरोप्य। उत्थानमुखेन उत्थानविधानद्वारा विहितं प्राप्तम्। यत्र क्वचित् यद्यपि नक्षत्रवशेन नक्षत्रत्पादविशेषयोगबलेन। एतदनुपपन्नमिति एकादशीद्वादश्योः शयनादिनिमित्तोपवासादिकर्म्म अनुपपन्नमित्यर्थः।

वचनविरोधात् एकादश्यामुत्थानमारोप्यैकादश्यामेव तन्निमित्तं पूजोपवासं कार्य्यमित्यवगमात्। कथमेकादशीद्वादश्योरेवेति व्याख्यानम्? द्वादश्या अश्रवणात्। "न विधौ परः शब्दार्थः" इति न्यायेन च विधेयार्थस्यैकादशीपदस्य लक्षणानुपपत्तेः। कथञ्चोत्थानमात्रश्रुतौ शयनपार्श्वपरिवर्त्तनयोरेतद्वर्त्तनं तयोरश्रुतत्वात्। "पूर्व्वेद्यु"रिति वचने च शयननिमित्तकर्म्मणि कालविशेषस्य विहितत्वात् अपेक्षाविरहेण लक्षणानुपपत्तेः विकल्पभयाच्च। ततश्चोत्थानमात्रनिमित्ते कर्म्मणि कालयोर्विकल्पो न शयननिमित्तेऽपि न चोत्थाने कालयोर्विकल्पः। शयने च नित्यवदेकस्य विधेर्वैरूप्यम्। शयनोत्थाननिमित्तभेदेन तन्निमित्तकर्म्मविधिभेदात् *। किञ्चोत्थानस्याध्याहारस्तन्निमित्तकर्म्मा-

---

* अनुपपत्तौ हेतुमाह, 'पूर्व्वेद्युरुपवासः स्या'दित्यादिवचनविरोधादिति। तथाच शयनादिनिमित्तकर्म्मणः पूर्व्वेद्युविधानात् कथम् एकादशीद्वादश्योस्तत्कर्म्मकरणमिति भावः। पूर्व्वोक्तवचनं स्वयं व्याकरोति एकादश्यामित्यादि। पूजोपवासं पूजा च उपवासश्च द्वयोः समाहारः पूजोपवासं समाहारद्वन्द्वत्वादेव क्लीवलिङ्गम्। 'न विधौ परः शब्दार्थः,' न विधौ लक्षणा। एतद्वर्त्तनं एकादशीस्वीकरणम्। 'सञ्चिन्त्य तु' इति वचने शयनविधानाभावेऽपि 'पूर्व्वेद्यु'रिति वचने शयनविधानादेकवाक्यतया शयनलाभ इत्याकाङ्क्षां निराकरोति 'पूर्व्वेद्यु'रिति वचने चेत्यादि। शयननिमित्तकर्म्मणीति शयनपदं प्रबोधस्याप्युपलक्षणम्। 'पूर्व्वेद्युरुपवासः स्यात् पूर्व्वाह्णे स्वापबोधयो'रिति विधानात्। कालविशेषस्य पूर्व्वदिनरूपकालविशेषस्य। ननु 'सञ्चिन्त्य तु' इति वचने एकादशीमात्रविधावपि, 'रेवत्यन्तो यदा रात्रौ द्वादश्या च समायुत' इत्यादिप्रागुक्तवचने द्वादशीश्रुतेस्तदेकवाक्यतया 'सञ्चिन्त्य तु' इति वचनेऽपि द्वादशीलाभ इति विभाव्याह ततश्चेत्यादि। कालयोः एकादशीद्वादश्योः। वैरूप्यं क्वचित्सापेक्ष्यविधायकत्वं, क्वचिन्निरपेक्ष्यनित्यवद्विधायकत्वं विधिभेदरूपं

चरणमेव तेनैकत्वात्। कर्म्मणोऽध्याहार्य्यैकुर्य्यादित्यनुपपत्तेः। किञ्च कर्म्मणो भेदेन शयनादिनिमित्तं कर्म्म एकादश्यां कुर्य्यादित्येवं वक्तुं युक्तम्। पराङ्गराचसंक्रान्तिनिमित्तकर्म्मोपदेशवत् न पुनरध्याहार्य्येत्यनुपयोगात्। किञ्चाध्याहार्य्यतदोत्थानमित्यनेनैव उत्थानस्य कर्त्तव्यतया ज्ञापितत्वात्। "ततश्चोत्थापयेद्देव"-मित्यनर्थकं कथमयमध्याहारः? शब्दस्यान्विताभिधानार्थमशब्दोपात्तस्याधिकस्याध्याहरणमध्याहारो न चायं तथा उपदिष्टानुष्ठानकालस्यारोपणात्। तस्मान्मूर्खाधार्म्मिककल्पितं योग्लौकस्य बृहद्ग्रन्थे प्रक्षिप्तम्। अस्यैव स्वल्पग्रन्थे अन्येषु च निबन्धेषु दर्शनात् योग्लौकीयबृहद्ग्रन्थपुरातनपुस्तीष्वभावात्। तस्मात् स्वयमेवैतत् योग्लौकेनापि बृहद्ग्रन्थे लिखितम्। अगृहीतैकादशीव्रतानां शयनादिकालस्यातिप्रशस्तत्वात्तत्रैवानुष्ठानस्य युक्तत्वात्। यदि तु नानुतिष्ठन्ति किं कुर्म्मस्त एवोपालभ्याः किमिति सातिशयं पुण्यकालमुपेत्य पुण्यकालमात्रे कर्म्माचरन्तीति शयनादिविधिः *।

---

विधिवैरूप्यलक्षणमित्यस्य न चेत्यनेन सम्बन्धः। कर्म्मविधिभेदादिति। तथाच एकस्य विधेः सापेक्ष्यनिरपेक्ष्यविधायकतया विधिवैरूप्यात्, अत्र विधिभेदान्न विधिवैरूप्यसम्भव इति भावः।

* किञ्चेति उत्थानस्याध्याहारः परिकल्पनम् अध्याहार्य्यतदोत्थानं 'एकादश्यान्तु कारये'दिति वचने उत्थानपरिकल्पनं तेनोत्थानाध्याहारेण सह, कर्म्मणः तन्निमित्तकर्म्मणः एकत्वात् अध्याहार्य्य तन्निमित्तकर्म्माचरणमेव कुर्य्यादित्यन्वयः। कर्म्मणो भेदेन शयनोत्थानयोः कालभेदात्, शयनोत्थानकर्म्मणो भेदेन कर्म्मणो भेदेऽपि इति पाठे तु शयनोत्थान-

## अथोत्सर्गोपाकर्म्मणी ।

तत्राधिमासपातेऽपि कर्कटसिंहयोरेव कर्त्तव्ये श्रावण-भाद्रादिपदस्वार्थग्रहणे बाधकप्रमाणाभावात् ।

तदाह मनुः ।

"श्रावण्यां प्रौष्ठपद्यां वा उपाकृत्य यथाविधि ।
युक्तश्छन्दांस्यधीयीत मासान् विप्रोऽर्द्धपञ्चमान् ॥"

"पुष्ये तु छन्दसां कुर्य्याद्वहिरुत्सर्जनं द्विजः ।"

श्रावणप्रौष्ठपदौ सौरौ तद्वाचकत्वात् । श्रावणादिपदानां तदीया तिथिः श्रावणी प्रौष्ठपदी च । वाशब्दो व्यवस्थितविकल्पवाची, तेन वाजसनेयिप्रभृतीनां श्रावणी, छन्दोगानां प्रौष्ठपदी तिथिरनियता ।

---

कर्म्मणो भेदस्वीकारेऽपीत्यर्थः । परार्द्धरात्रसंक्रान्तिनिमित्तकर्म्मोपदेशवदिति । यथा रात्रेः परार्द्धे संक्रान्तौ तन्निमित्तकर्म्मणः परदिनकर्त्तव्यता । न पुनरध्याहार्य्येतीति । शयनादिकं परिकल्प्य तन्निमित्तं कर्म्म कुर्य्यादित्यर्थः । अत्र हेतुमाह अनुपयोगादिति । उत्थानस्य उत्थानमात्रस्य । 'ततश्चोत्थापयेद्देव'मिति, 'ततश्चोत्थापयेद्देवं चतुर्भुजमरिन्दम'मिति । वचनम् अनर्थकमिति । तथाच पूर्व्ववचनेन उत्थानस्य ज्ञापितत्वात् परवचनमनर्थकमित्यर्थः। अन्विताभिधानार्थम् आकाङ्क्षितशाब्दबोधनिर्व्वाहार्थम् अशब्दोपात्तस्य कल्पितस्य अध्याहरणं स्वीकारः। अयम् उत्थानस्याध्याहारः। अत्र हेतुमाह उपदिष्टेत्यादि। उपदिष्टस्य उत्थानस्य यः अनुष्ठानकालः तस्यैवारोपणादित्यर्थः। प्रक्षिप्तमिति। तथाच एतन्न योग्लौकसम्मतं, किन्तु केनचित् मूर्खाधार्म्मिकेण योग्लौकीयमिति कृत्वा बृहद्ग्रन्थमध्ये प्रक्षिप्तं स्वकल्पितं निवेशितमिति भावः। अत्र हेतुं दर्शयति, अस्यैव स्वल्पग्रन्थे इत्यादि योग्लौकीयग्रन्थद्वयस्यादर्शनात् । तस्मान्मूर्खाधार्म्मिककल्पितमित्यादि पुण्यकालमात्रे कर्म्मा-चरन्ति इति यल्लिखितं तस्य निगूढतत्त्वमस्फुटमेवावतिष्ठते ।

तथा याज्ञवल्क्यः ।

"अध्यायानामुपाकर्म्म श्रावण्यां श्रवणेन तु ।
हस्तेनौषधिभावे वा पञ्चम्यां श्रावणस्य तु ॥
पौषमासस्य रोहिण्यामष्टकायामथापि वा ।
जलान्ते छन्दसां कुर्य्यादुत्सर्गं विधिवद्बहिः ॥"

पौर्णमास्याञ्च श्रवणाभावे हस्तयुक्तपञ्चमीविधानम् ।

तदुक्तं स्मृतिसमुच्चये (१) ।

"उपाकर्म्म च कर्त्तव्यं कर्कटस्थे दिवाकरे ।
हस्तेन शुक्लपञ्चम्यां श्रावण्यां श्रवणेन च ॥"

श्रावणीशब्दः कर्कटीयपौर्णमासीपरः । तिथिमात्रपरत्वे न चेदित्यनुपपत्तेः । ततश्च कर्कटपौर्णमास्यां श्रवणाभावे हस्तयोगिन्यां कृष्णपञ्चम्यामित्यर्थः । ओषधिभावः शुक्लपक्षः, यदा ओषधीः शस्यं भावे हत्वौ तासाम् ओषधीनामुद्भिभवनात् । "कर्कटस्थ" इत्यविप्रतिपन्नसौरपरिग्रहो दर्शित उत्सर्गस्तेषां पौषे मासि रोहिण्यष्टकयोरेकत्र, छन्दोगानान्तु सिंह एवोत्सर्गोपाकर्म्मणी ।

तदाह गोभिलः ।

"प्रौष्ठपद्यां हस्तेनोपाकरणं तैषीमुत्सृजन्तीति ।"

प्रौष्ठपदीं तिथिं प्राप्य हस्तेनोपाकर्म्म प्रौष्ठपदीमेव च तैषीं तिष्यनक्षत्रयुक्तां प्राप्योत्सर्गः कार्य्यः । उत्सर्गपूर्व्वकश्चोपाकर्म्म ।

---

(१) स्मृतिसमुच्चये इत्यत्र निगम इति हेमाद्रौ मदनपारिजाते च पाठः ।

यथा श्लोकगोतमः ।

"अथ प्रौष्ठपदे मासि तिष्ययुक्ते च संस्थिताः ।
छन्दोगाः सहिताः कुर्य्युः प्रातरौत्सर्गिकीं क्रियाम् ॥
अतःप्रभृति सर्व्वेषां छन्दसामनुदीरणम् ।*
हस्तेन यावत् संयुक्तमुपाकरणवासरम् ।
तस्मिन्नहनि तेनैव विधिना स्नानमाचरेत् ॥"

तेनैवोत्सर्गोक्तविधिना । अनुदीरणं वेदस्यापठनम् । "हस्तेन यावदित्यत्रापि" प्रौष्ठपदे मासीत्यनुषज्यते अपेक्षासद्भावात् । तेन प्रौष्ठपद एव पुष्यनक्षत्रेणोत्सर्गं कृत्वा तदनन्तरितहस्तेनोपाकर-

---

* प्रकरणान्तरमाह अथेति । विस्तृतविवृत्या ग्रन्थकाहुल्यतया कर्त्तृपक्षासन्तोषात् अतःपरं सङ्क्षेपेण विवृतिर्विधीयते । उत्सर्गोपाकर्म्मणी वेदसमापनारम्भौ । श्रावण-भाद्रादिपदस्वार्थग्रहणे श्रावणभाद्रादिमासपदानां सौरपरत्वरूपस्वार्थग्रहणे इत्यर्थः । उपाकृत्य आरभ्य । अर्द्धपञ्चमान् अर्द्धः पञ्चमो येषां तान् । समाप्तिकालमाह पुष्ये त्वित्यादि । श्रावणी सौरश्रावणसम्बन्धिनी तिथिः । प्रौष्ठपदी सौरभाद्रसम्बन्धिनी तिथिः । अध्यायानां वेदसंहितानाम् । श्रवणनक्षत्रयुक्तसौरश्रावणसम्बन्धितिथौ । ओषधिभावे शस्यपाककाले शुक्लपक्षे । जलान्ते जलसमीपे, नदीतीरे इति यावत् । उत्सर्गं समापनम् श्रावण्यां श्रवणेन चेत्यपपाठः श्रवणेन चेदित्येव पाठः साधुः अन्यथा नचेदित्यनुपपत्तेरिति स्वयमुक्तमसङ्गतं स्यात् । एवं कृष्णपञ्चम्यामित्यपपाठः शुक्लपञ्चम्यामित्येव साधुः अन्यथा हस्तेन शुक्लपञ्चम्यामिति प्रमाणवचनविरोधापत्तिः । मदनपारिजातादिबहुग्रन्थेषु शुक्लपञ्चम्यामित्येव पाठो दृश्यते । ओषधीः शस्यम्, 'ओषध्यः फलपाकान्ता' इति कोषात् । तासाम् ओषधीनां उद्भिभवनात् वृद्धेः सद्भावात् । अप्रतिपन्नसौरपरिग्रहः सौरपरिग्रहे विरोधाभाव इत्यर्थः । उत्सर्गः समापनम् । श्लोकगोतमः पद्यात्मकगोतमसंहिता । सहिताः मिलिताः सन्तः । औत्सर्गिकीं क्रियां समापनक्रियाम् । न उदीरणम् अनुदीरणमिति व्युत्पत्तिलभ्यार्थमाह, अनुदीरणं वेदस्यापठनम् ।

णाम् । न च कदाचिदप्यस्मिंश्चान्द्रे भाद्रे पुष्यपूर्व्वो हस्तः प्राप्यते । प्रतिसंवत्सरञ्च वेदाध्ययनाङ्गतयोत्सर्गोपाकर्म्मणी विधीयेते । तस्मात् सौरभाद्रके छन्दोगानामुत्सर्गोपाकर्म्मणी ।

तदाहागस्त्यः (१) ।

"सिंहे रवौ च पुष्यर्क्षे पूर्व्वाह्णे (२) विधिवद्बहिः (३) ।
छन्दोगा मिलिताः कुर्य्युरुत्सर्गं सर्व्वछन्दसाम् (४) ।
शुक्लपक्षे च (५) हस्तायां(६)मुपाकर्म्मापराह्णिकम् ॥"

अत्रापि कृष्णपक्षे उत्सर्गं कृत्वा शुक्लपक्षे उपाकर्म्मविधानात् न चान्द्रे विधिः, शुक्लपक्षपूर्व्वत्वाच्चान्द्रस्य । "सिंहे रवाविति च" सुव्यक्तः सौरपरः ।

अतएव ।

"दशहरास्वनुत्कर्षश्चतुर्थ्वपि (७) युगादिषु ।
उपाकर्म्मणि चोत्सर्गे तत् कर्त्तव्यं वृषादितः ॥" *

---

(१) अगस्त्य इत्यत्र गार्ग्य इति हेमाद्रौ मदनपारिजाते च पाठः ।

(२) पूर्व्वाह्णे इत्यत्र मध्याह्ने इति हेमाद्रौ पाठः ।

(३) विधिवद्बहिः इत्यत्र विचरेद्बहिः इति हेमाद्रौ मदनपारिजाते च पाठः ।

(४) सर्व्वछन्दसामित्यत्र स्वस्वछन्दसामिति मदनपारिजाते पाठः ।

(५) च इत्यत्र तु इति हेमाद्रौ मदनपारिजाते च पाठः ।

(६) हस्तायामित्यत्र हस्तेन इति हेमाद्रौ मदनपारिजाते च पाठः ।

(७) दशहरास्वनुत्कर्षश्चतुर्थ्वपि इत्यत्र दशहरासु नोत्कर्षश्चतुर्थ्वपि इति मदनपारिजाते पाठः ।

---

* हस्तेन यावदित्यादि । अनुषज्यते इति तथाच प्रौष्ठपदे मासि हस्तेन संयुक्तम्

"तस्माद्वृषादिराशिस्थे सूर्य्ये तत् कर्त्तव्यं वृषादितः।" तस्मान्नोत्कर्ष इति वदतोत्कर्षः कालवृद्धौ स्यादुपाकर्म्मादि-कर्म्मणामिति कालवृद्धिपदं तिथिद्वैधवृद्ध्यपेक्षमिति व्यक्त-मुक्तम्। तिथिवृद्धौ च कर्म्मार्थं परतिथिग्रहणं वाजसनेयि-प्रभृतीनां न छन्दोगानां तेषामपराह्णविधानात्। अत्र च "दश-हरास्वनुत्कर्ष" इति वचने "चतुर्थपदं" "माघ्याञ्चैव विशेषतः" इति केचित् पठितं व्याख्यातञ्च। छन्दोगानां भाद्रपदीयो-पाकर्म्मसमारब्धस्य वेदाध्ययनस्य पौषीमुत्सृजन्तीति। पौषे मास्युत्सर्गः कार्य्यः। उदगयने वृत्ते माघ्यामुपाकर्म्म कृत्वा

---

उपाकरणवासरं वेदाध्ययनदिनं यावदित्यर्थः। अत्र यावच्छब्दस्य सीमावचनत्वं, 'दशमीञ्च याव'दितिवत्, उपाकरणदिनपूर्व्वदिनपर्य्यन्तं वेदस्यापठनमिति प्रतीयते। चान्द्रे भाद्रे मुख्यचान्द्रभाद्रे। पुष्यपूर्व्वः पुष्यनक्षत्रात् पूर्व्व इति पञ्चमीतत्पुरुषः प्राप्यते इत्यस्य न कदाचिदिति प्राक्तनेन सम्बन्धः, तथाच मुख्यचान्द्रमासस्य शुक्लप्रतिपदादि-दर्शान्ततया कृष्णपक्षे पुष्यनक्षत्रे वेदसमापनं कृत्वा शुक्लपक्षे हस्तनक्षत्रे वेदारम्भस्य विहित-तया हस्तनक्षत्रस्य परभावितया च न कदाचिच्चान्द्रे पुष्यपूर्व्वभावित्वेन हस्तनक्षत्रप्राप्तिः सम्भवति। प्रौष्ठपदपदस्य सौरभाद्रपरत्वे च कृष्णपक्षात् परतः शुक्लपक्षस्य प्राप्तिसम्भवात् कृष्णपक्षे पुष्यनक्षत्रे वेदसमापनं कृत्वा शुक्लपक्षे परभाविनो हस्तनक्षत्रस्य प्राप्तिः सम्भवतीति भावः। वेदसमापनारम्भयोः प्रतिवर्षकर्त्तव्यतां दर्शयति प्रतिसंवत्सरञ्चेत्यादि। सिंहे रवौ सौरभाद्रे सर्व्वछन्दसां वेदानाम् उत्सर्गं समापनं कुर्य्युरिति कृष्णपक्षे इति शेषः। दशहरासु सौरज्यैष्ठशुक्लदशमी हस्तनक्षत्रयुक्तसौरज्यैष्ठशुक्लदशमी कुजवाराधिकरणहस्तयुक्त-सौरज्यैष्ठशुक्लदशमीषु अनुत्कर्षः, न ज्यैष्ठपदस्य चान्द्रापरतया सौराषाढ़वर्त्तिचान्द्रज्यैष्ठशुक्ल-दशम्यादेर्ग्राह्यता। दशहरासु इति वचनस्य व्याख्याविशेषः १४५।१४६।१४७ पृष्ठ-टीकायां द्रष्टव्यः।

आरण्यकाध्ययनं भाद्रपदीयपुष्यानक्षत्रं यावत् । अतस्तस्योत्सर्गं कृत्वा तदनन्तरितहस्ते पौषमासपरित्यक्ताध्ययनारम्भ इति । हैमन्तिकोत्सर्गोपाकर्म्मणी विहिते तयोर्माघ्यामिति। तयोरनुत्कर्ष इति *। तस्यार्थः। उत्कर्षवचनन्तु कर्कटसिंहस्थसूर्य्यविहितयोरिति। तदसङ्गतम् "तत् कर्त्तव्यं वृषादित" इति पाठस्य बहुसम्मतत्वात् । भवतु "माघ्याञ्चैवे"ति पाठः । तथापि माघ्यामुत्सर्गस्य विहितत्वात् कथं तस्यां विहितयोरुत्सर्गोपाकर्म्मणोरनुत्कर्षार्थत्वेन व्याख्यायते ? किञ्चोपाकर्म्म न माघ्यां विहितम् । किन्तूदगयने वृत्ते इत्येतावन्मात्रं गोभिलेनोक्तम्—"यथोदगयने चोपाकर्म्म सावित्रमहः काङ्क्षति" । सावित्रं हस्तः । तेन "माघ एव तु माघी स्यात्" इति येन कल्पितं तेनेदं तत्समानार्थं

---

* तिथिद्वैधवृद्धापेक्षमिति । तथाच एकस्मिन् सौरमासे यदैव एकायास्तिथेर्वारद्वयप्राप्तिस्तदैव भवति, नतु खण्डद्वयप्राप्तौ परखण्डप्राप्त्यर्थं तिथिद्वैधमपेक्ष्यते । अपराह्णविधानादि—शुक्लपक्षे च हस्तायामुपाकर्म्मापराह्णिकमिति गार्ग्यवचनात् । तथाच छन्दोगा मिलिताः कुर्य्युरित्युपक्रम्य आपराह्णिकमित्यनेन विशिष्यापराह्णविधानेन उत्कर्षः । कालवृद्धाविति सामान्यवचनस्य सुतरां छन्दोगेतरविषयत्वमिति भावः । 'माघ्याञ्चैव विशेषत' इति कल्पितपाठस्यानुगुण्यं व्याख्यानं दर्शयति, छन्दोगानामित्यादि । 'पौषीं प्राप्य' इति, इति वचनेन उत्सर्गं समापनमित्यस्य प्राक्तनवेदाध्ययनस्य इत्यनेन सम्बन्धः । वृत्ते आरब्धे । उपकर्म्मकृत्वा आरभ्य । आरण्यकाध्ययनं आरण्यकभागस्याध्ययनम् । तदनन्तरितहस्ते पुष्यानन्तरितहस्तनक्षत्रे । पौषमासपरित्यक्ताध्ययनारम्भ इति । पौषमासे परित्यक्तः अध्ययनारम्भो येन सः । सहश्च सहस्यश्च हैमन्तिकऋतुरिति श्रुत्या मार्गपौषयोर्हैमन्तिकसंज्ञा । उत्सर्गोपाकर्म्मणी वेदसमापनवेदारम्भौ । अनुत्कर्ष इति 'माघ्याञ्चैव विशेषत' इत्युपादानात् ।

पठितं हेयमेव। तत्रोत्सर्गो वेदाध्ययनस्य त्यागः। उपाकरण-मुपसमीपजलाग्नयोः स्वशाखिनां वेदाध्ययनस्यासमन्तात्कारेण करणं स्वीकरणमारम्भ इति। यदा सौरभाद्रपदे पुष्यपूर्व्वो हस्तः न लभ्यते तदा कथं कर्त्तव्यमित्यपेक्षायामाह

छन्दोगपरिशिष्टम्।

"मासि प्रौष्ठपदे हस्तस्तिष्यपूर्व्वो भवेन्न चेत्।
तदा प्रौष्ठपदे कुर्य्युरुत्सर्गं विधिवद्द्विजाः॥"

श्रावण इति तु पठितं योग्लौकेन पठितं तद्बहुध्वदर्शनान्न भवतीति दीक्षितेनोक्तम्। उत्सर्गस्य प्रथमभावित्वात् तत्कालानुग्रहो युक्तो न तु जघन्यस्योपाकर्म्मणः। तस्मात् सौरे प्रौष्ठपदे उत्सर्गं समाप्य कन्यायामुपाकरणं कार्य्यम्।

तच्चैवम्।

"गौतमादीनृषीन् सप्त कृत्वा दर्भमयान् पुनः।
पूजयित्वा यथाशक्ति पूजयेदृचमुच्चरेत्॥" (१)

एतच्च रजोयुक्तायामपि नद्यां कर्त्तव्यमेव।

तदाह छन्दोगपरिशिष्टे कात्यायनः।

"उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने तथैव च।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो न विद्यते॥"
वेदाश्छन्दांसि सर्व्वाणि ब्रह्माद्याश्च दिवौकसः।
जलार्थिनो हि पितरो मरीच्याद्यास्तथर्षयः॥

(१) गौतमादीनृषीन् सप्त कृत्वा दर्भमयान् पुरः।
पूजयित्वा यथाशक्ति तर्पयेदंशमुद्धरेत्॥ इति आदर्शपुस्तके पाठः।

"उपाकर्म्मणि चोत्सर्गे स्नानार्थं ब्रह्मवादिनः।
पिपासवस्तु गच्छन्ति संहृष्टा ह्यशरीरिणः॥
समागमश्च यत्रैषां तत्रान्ये बहवो मलाः।
नूनं सर्व्वे क्षयं यान्ति किमुतैकं नदीरजः॥"

स एव कात्यायनो नदीनां रजोयोगमाह।

"पक्षद्वयं (१) श्रावणादि सर्व्वा नद्यो रजस्वलाः।
तासु स्नानं न कुर्व्वीत वर्ज्जयित्वा समुद्रगाः॥" *

पक्षद्वयात्मको मासः, स च श्रावण आदिभूतः, पूर्व्वभूतो यस्ये-

(१) अब्दद्वयमिति रघुनन्दनादिसम्मतपाठः।

* ननु उत्कर्षः कालवृद्धौ स्यादित्याद्युत्कर्षबोधकवचनस्य का गतिरित्यत आह उत्कर्षवचनन्तु इत्यादि। दूषयति नदसङ्गतमित्यादि। बहुसम्मतत्वादिति एतेन 'तत्कर्त्तव्यं वृषादित' इति पाठस्यैव समूलत्वं सूचितम्। ननु 'तत्कर्त्तव्यं वृषादित' इतिवत्, 'माघ्याश्चैव विशेषत' इति पाठस्यापि नानाग्रन्थधृतत्वेन बहुसम्मतत्वमस्ति इति विभाव्याह भवतु वेत्यादि। प्रथमभावितत्वात् प्रथमोक्तत्वात्। तत्कालानुग्रहः उत्सर्गकालस्वीकारः। जघन्यस्य पश्चाद्भाविनः। उपसंहरति तस्मादिति। उत्सर्गं समाप्य पाठसमापनं कृत्वा कन्यायां सौराश्विने उपाकरणं पुनर्वेदारम्भम्। गौतमादीन् इति गौतमादीन् सप्त ऋषीन् दर्भमयान् कृत्वा कुशपत्रेण निर्म्माय। सप्तर्षयो यथा,—मदनपारिजाते गौतमादीनिति स्वस्वशाखोक्तर्षिप्रदर्शनार्थम् ऋचमृग्वेदं पूजयेत् तथा उच्चरेत् पठेत्। एतेन गौतमगोभिलाश्वलायनशौनकपारस्करापस्तम्बबौधायनाः सप्तर्षयः प्रसिद्धाः। वंशमुद्धरेदिति पितृवंशं मातामहवंशञ्च। एतच्चेति वेदसमापनाद्युत्तरस्नानादिकम्। यियासून् इति पाठे तु स्नानार्थं यियासून् जिगमिषून्, ब्रह्मवादिनः वेदपाठिनो जनानिति शेषः। अनुगच्छन्तीत्यस्य तथर्षय इत्यन्तेन सम्बन्धः। मलाः पापानि। पक्षद्वयं श्रावणादि इति अब्दद्वयं श्रावणादि इति ग्रन्थान्तरे पठितम्। अब्दो मासः सनीकः संवत्सर इति शतपथश्रुतिः।

त्यर्थः। अत्र भाद्र इति वक्तव्ये यत् श्रावणादीत्यभिधानं तत् श्रावणस्यापि ग्रहणार्थं, न तु श्रावणस्यादिमादाय पक्षद्वयम्; श्रावण एव इत्यस्यार्थो भवत्विति वाच्यम्; पक्षद्वयपदादिपदयोरनर्थक्यापत्तेः। श्रावणपदादेव तत्सिद्धेः। उत्सर्गस्य रजोयुक्तायां प्रतिप्रसवानुपपत्तेः। न हि श्रावणे बह्वृचां वाजसनेयिनाञ्च उत्सर्गोऽस्ति, तेषां "पौषस्य रोहिण्यामष्टकायामथापि वेति" विधानात् छन्दोगानां भाद्र एवेति कथं प्रतिप्रसवः? तस्मात् श्रावणे भाद्रे च नदीनां रजोयोगः।

तथा।

"द्विमासं सरितः सर्व्वा भवन्तीह रजस्वलाः।
अप्रशस्तन्ततः स्नानं वर्षादौ नववारिणि॥"

इदम्मार्कण्डेयनाम्ना धवलेन लिखितं, नान्यत्रास्ति, एतदेव केनचिन्निबद्धम्।

"नभोनभस्ययोर्मध्ये सर्व्वा नद्यो रजस्वलाः।
तासु स्नानन्न कुर्व्वीत देवर्षिपितृतर्पणम्॥"

इदं यद्यपि मुनिवचनं न तथापि समूलं, निर्मूलं पुनरेतत् प्रसिद्धवचनविरोधात्*।

---

* भाद्र इति वक्तव्य इति। श्रावणः आदिः आदिभूतो यस्य इति बहुव्रीहिणा भाद्र एव गृह्यते। बहुव्रीहेर्जघन्यत्वात् तत्पुरुष एव वक्तव्य इत्याशङ्क्य निषेधयति नचेत्यादि। श्रावण एव श्रावणपर्य्यन्त एव, एवकारेण भाद्रव्यवच्छेदः। प्रतिप्रसवानुपपत्तिं दर्शयति, नहि श्रावणे इत्यादि। बह्वृचाम् ऋग्वेदिनां, वाजसनेयिनाञ्च यजुर्वेदिनाञ्च। भाद्र एव एवकारेण श्रावणव्यवच्छेदः। कथं प्रतिप्रसव इति। तथाच—

यथा।

"सङ्गता या भवेद्गत्वा समुद्रेण नदेन वा।
सा नदी सा च सलिला(१) या योजनशतङ्गता॥"

कात्यायनेन नदीनां रजस्वलत्वविधौ समुद्रगाणां पर्य्युदस्तत्वात् तासां रजोयोगविधायकं कल्पितमेव भवति। न च निबन्धेऽपि कुत्रचिल्लिखितम्। किञ्च लक्षणमेतदतिव्यापकं लौहित्यादि-नदेष्वपि दर्शनात्। नदत्वाभावे सतीति चेत् न विशेषणस्यानु-पात्तत्वात् यथोक्तस्य चालक्षणत्वात्। नदत्वाभावे सतीति विशेषणेऽपि नदलक्षणस्याभावात् नदीलक्षणमपि न स्यात्*।

(१) मलिना इति क्वचिदादर्शे पाठः।

---

'मासि प्रौष्ठपदे हस्तस्तिष्यपूर्व्वो भवेन्नु चेत्।
तदा प्रौष्ठपदे कुर्य्युरुत्सर्गं विधिवद्द्विजाः॥'

इति छन्दोगपरिशिष्टवचनात् भाद्रे उत्सर्गविधानेन तदङ्गस्नानस्य सौरभाद्र एव प्राप्त्या, उपाकर्म्मणि चोत्सर्गे इत्यादिना तस्यैव रजोयोगे प्रतिप्रसवसम्भवात्। पक्षद्वयं श्रावणादि इति, तदीयवचनस्थश्रावणादि इत्यत्र श्रावण आदिः आदिभूतः यस्य इति बहुव्रीहिणा भाद्रग्रहणमेव युक्तं, नतु श्रावणस्यादिपक्षद्वयमिति तत्पुरुषाश्रयणमिति भावः। प्रति-प्रसववचनविरोधादिति। वर्ज्जयित्वा समुद्रगा इति सर्व्वपदवैयर्थ्यापत्तिरेव अमूलत्वा-शङ्कावीजमिति भावः।

* समुद्रगानां पर्य्युदस्तत्वादिति। तासां समुद्रगाणां रजोयोगविधायकं रजोयोग-विधायकं वचनं कल्पितमेवेति। अन्यथा सामान्यशास्त्रप्राप्त्यभावात् पर्य्युदासासङ्गतिरिति भावः। 'पक्षद्वयं श्रावणादि सर्व्वा नद्यो रजस्वलाः। तासु स्नानं न कुर्व्वीत वर्ज्जयित्वा समुद्रगाः॥ इति वचनेनेति। लक्षणमेतत् नदीलक्षणमेतत्। दर्शनात् नदीलक्षणदर्शनात्। 'या योजनशतङ्गता' इति द्वितीयनदीलक्षणदर्शनादित्यर्थः। नदत्वाभावे सतीति, तथाच

नदलक्षणाभावेऽपि नदावगममुपगम्य एव समानप्रमाणावगतत्वान्नदीनां ग्रहणे सम्भवति, कथं जघन्यावगमनदीपरिग्रहः। न च लक्षणापेक्षा। नदीषु गङ्गा गण्डकी गोमती गोदावरी कावेरी कौशिकी सरयू सरस्वती तृतीया वितस्ता विपाशा यमुना नर्म्मदा नन्दा नन्दावरी चन्द्रभागा रेवा देविका बाहुदा प्रभृतीनां नदीनां शास्त्रतोऽवगमत्वात्। न च कथमेतास्वभिन्नरूपास्वेको नदीशब्द इति वाच्यम्? एकानेकशक्तिसाधारणनदीशब्दार्थतयाऽवगतासु रजोविधौ लक्षणापेक्षाभावात्। यद्येकं निमित्तमेतास्वस्ति, तदाल्पीयसी कल्पना भविष्यति। नास्ति चेत् तदा नदशब्दवन्मन्त्रशब्दवद्वा भविष्यति। उत्तरावद्वा न चोत्तरकाण्डपठितत्वमेकमुत्तरार्थनिमित्तमिति वाच्यं सापेक्षतापत्तेः। निरपेक्षतया च काण्डाधीतोत्तराग्रहणस्य दर्शितत्वात्। योन्यवधिकोत्तराग्रहणस्य सापेक्षत्वादुत्तराधिकरणराद्धान्तव्याकोपः

---

नदभिन्नत्वे सति योजनशतङ्गता या आपः सा नदीति, नदीलक्षणमिति चेन्न, विशेषणस्यानुपात्तत्वात् नदभिन्नत्वविशेषणस्य विधायकवचने अदर्शनादित्यर्थः। यथोक्तस्य नदभिन्नत्वे सति योजनशतङ्गतसलिलरूपस्य अलक्षणत्वात् नदीलक्षणत्वासम्भवात्। नदलक्षणस्याभावात् स्वातन्त्र्येण नदलक्षणादर्शनात्। नदीलक्षणमपि न स्यादिति। तथाच—

'सङ्गताया भवेद्गत्वा समुद्रेण नदेन वा'।

'सा नदी या योजनशतङ्गता' इति वचने शतयोजनान्यूनानामपां नदसङ्गतत्वेनैव नदीलक्षणस्य वक्तव्यत्वेन नदलक्षणाभावे तत्परिचयाभावेन तत्सङ्गमापरिज्ञानात् नदीलक्षणमपि दुर्व्वच इति भावः। यद्यपि 'समुद्रेण नदेन वा' इति वाकारात् समुद्रसङ्गतत्वेन नदीलक्षणं भवितुमर्हति, तथापि 'वर्ज्जयित्वा समुद्रगा' इति कात्यायनेन रजोयोगविधौ पर्य्युदस्तत्वात् रजोयोगोपयोगिनदीलक्षणं समुद्रसङ्गतत्वेन न सम्भवति।

स्यात्। किञ्चोत्तरासमूहसम्बन्धादेवोत्तरकाण्डत्वमान्त्यकाण्डवत्, आग्रायणीयशब्दवृत्तिवद्वा शास्त्रीयनदीशब्दप्रयोगविषयत्वमुपाधिरस्तु। यस्मादिदमदूषणम्।

यच्च छन्दोगपरिशिष्टं, कात्यायनः।

"धनुः सहस्राण्यष्टौ च गतिर्यासां न विद्यते।
न ता नदीशब्दवहा गर्त्तास्ते परिकीर्त्तिताः॥"

तद्गर्त्तलक्षणम् यासां सरितामित्यर्थः। सरित्शब्दस्य गर्त्तप्रस्रवणनदीसाधारणः, सरणयोगाविशेषात्। ननु "न ता नदीशब्दवहा" इति वदता तदन्यथाभूता नदीशब्दार्था इति ज्ञापितम्। नैतत् प्रस्रवणाभावप्रसक्तेः*। न च गर्त्तप्रस्रवणयोः पर्य्यायत्वं, स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु चेति, इत्यन्यतरपद-

* न च लक्षणापेक्षा, नदीषु नहि लक्षणापेक्षा, नदीष्वित्यर्थः। अत्र हेतुमाह गङ्गेत्यादि, शास्त्रतोऽवगमत्वादिति। तथाच 'सर्व्वा नद्यो रजस्वला' इत्यभिधाय, 'वर्ज्जयित्वा समुद्रगा' इत्यनेन समुद्रगाणां गङ्गादिबाहुदान्तप्रभृतीनां शास्त्रत एव नदीत्वेनावगम्यमानत्वात् लक्षणापेक्षा नास्तीति भावः। एतासु गङ्गादिषु भिन्नरूपासु गङ्गात्वादिना विभिन्नरूपासु इत्यर्थः। एको नदीशब्दः एकनदीशब्दवाच्यत्वम्। एकानेकशक्तिसाधारणेत्यादि नदीशब्दवाच्यतया बोधितासु इत्यर्थः। लक्षणापेक्षा नास्तीति। तथाच सर्व्वानुमतनदीलक्षणाभावेऽपि लोकप्रसिद्धासु नदीषु रजोयोगविधौ गङ्गादीनां पर्य्युदस्तत्वात् समुद्रगगङ्गादिभिन्नासु नदीत्वेन लोकप्रसिद्धासु श्रावणादिमासद्वये रजोयोगात् स्नानं न कर्त्तव्यम्। यद्येकं निमित्तं समुद्रगत्वेन निमित्तता इत्यर्थः। सरणयोगाविशेषात् सृ गतौ इति धात्वनुसारात्। तदन्यथाभूता धनुःसहस्राष्टाधिका नदीशब्दार्था नदीशब्दवाच्या। प्रस्रवणाभावप्रसक्तेरिति। तथा च तस्या नदीसंज्ञात्वे प्रस्रवणलक्षणं न स्यादिति भावः।

प्रयोगाभावप्रसक्तेः। न च गर्त्तप्रस्रवणमित्येकं नामेति वाच्यम्। "गर्त्तास्ते" इत्यप्रयोगापत्तेः।

तथा।

"सर्व्वे प्रस्रवणाः पुण्याः सर्व्वे पुण्याः शिलोच्चयाः।"

तथा स्नायान्नदीप्रस्रवणदेवखातसरोवरेषूद्धृतात् भूमिष्ठमुदकं पुण्यं सरस्तस्मान्नादेयम्। तस्माद्गाङ्गमित्यादिषु प्रस्रवणमात्र-प्रयोगात्। गर्त्तादन्यदेव प्रस्रवणमित्यवगम्यते। तेन किं रूपम्? तदित्यपेक्षायां नदीनां शास्त्रप्रसिद्धत्वात्। गर्त्तलक्षणस्यापि कृतत्वादुभयव्यतिरिक्तं प्रस्रवणमिति सिध्यति। अतएव कात्याय-नेन प्रस्रवणलक्षणं न कृतम्। गर्त्तलक्षणेनैव तदितरलक्षणस्यापि सिद्धेरित्यभिप्रायः। "न ता नदीशब्दवहा" इत्यर्थवादमात्रमेव। तस्मान्मयूरवृद्धमयूरप्रभृतयः प्रस्रवणा नद्य इति नास्ति रजः-सम्भावना। नदीनामपि समुद्रगाणां मासद्वयरजोयोगविधौ पर्य्युदस्तानान्न तावत्कालं रजोयोगः। तास्च गङ्गा दक्षिणसमुद्र-गामिनी, कैलासप्रागुदकाख्याच्छोदसरोनिर्गता। अच्छोदा नदी पूर्व्वसागरगामिणी, तस्यैव पूर्व्वस्थितमन्दसरोनिर्गतास्तिस्रो मन्दाकिन्यलकनन्दानन्दाख्याः पूर्व्वसागरगाः। कैलासपश्चिम-स्थितशिलोदसरोविनिर्गता, शैलोदा नदी पश्चिमसागरगामिणी-त्येवमाद्याः समुद्रगास्तासां पर्य्युदासः। ननु तासु किं नास्त्येव रजोयोग इत्यत्राह स्मृतिसमुच्चये।

"आदौ कर्कटके देवी त्र्यहं यावद्रजस्वला।
चतुर्थेऽहनि संप्राप्ते शुद्धा भवति जाह्नवी॥"

'देवी' भगवती गङ्गोच्यते, न तु देवीनाम्नी काचिदस्ति नदी। न च 'देविकैव' 'देवी'पदोपात्तकावर्णलोपकल्पनापत्तेरप्रसिद्धत्वात्। जाह्नवीपदस्य जाह्नवीवत् 'शुद्धा भवतीति' व्याख्याने वत्पदाध्याहारापत्तेः।

यच्च।

"तपनस्य सुता गङ्गा गोमती च सरिद्वरा।

रजसा न प्रदूष्यन्ति ये चान्ये नदसंज्ञकाः॥"

इति स्मृतिसमुच्चयस्य वचनं, तद्वैमासिकरजोयोगनिषेधार्थम्। तपनः सूर्य्यः, तस्य दुहिता यमुना। गोमती च समुद्रगा, तेन च तत्पर्य्युदासार्थमिदं(१) वचनम्। समुद्रगात्वेन गङ्गापर्य्युदासे सिद्धे गङ्गाग्रहणं यमुनादीनां गङ्गासमत्वेन चिराच्चरजोयोगव्याप्त्यर्थम्। नदग्रहणन्तु नदीत्वेनैव रजसोऽप्रसक्तौ शोणनदीत्यादिलोकप्रयोगमूलभ्रमनिरासार्थम्। यद्वा नदसंज्ञकाः पुंलिङ्गका ये मयूरनिपुण्डदेवमण्डलप्रभृतयस्तेषां पर्य्युदासार्थम् अनुवाद एव वा, ननु 'रजसा न प्रदूष्यन्ती'त्यनुपपन्नम्। न हि रजोयोगः स्त्रीधर्म्मो नदानामस्त्रीणां सम्भवति*, किन्त्वदृष्टार्थकर्म्मस्वनर्ह-

(१) गौतमी च न समुद्रगा, तेन च पर्य्युदासार्थमिदम् इति क्वचिदादर्शे पाठः।

* अन्यतरपदप्रयोगाभावप्रसक्तिः इति। एकपर्य्यायत्वे एकार्थकतया पौनरुक्त्यापत्तेरिति भावः। उभयव्यतिरिक्तं नदीगर्त्तव्यतिरिक्तं जलाधारत्वं प्रस्रवणं प्रस्रवणलक्षणम्। यत एव नदीगर्त्तव्यतिरिक्तजलाधारत्वं प्रस्रवणलक्षणम् अतएवेत्यर्थः। इतरलक्षणस्यापि सिद्धेरित्यभिप्राय इति, तथाच न ता नदीशब्दवद्या इत्यतेन तदधिकजलाधारत्वं नदीलक्षणं तन्न्यूनजलाधारत्वं प्रस्रवणलक्षणम्। मयूरवङ्गमयूरप्रभृतय; मयरभट्ट-

त्वम्। यथा—'तासु स्नानं न कुर्व्वीत देवर्षिपितृतर्पणम्'। 'तास्विति' तदन्तर्गतेन न स्नातव्यम्। तत एवोदकाञ्जलीं गृहीत्वा न तर्पणं कार्य्यम्। 'उद्धृतेन जलेन तु,' तत्कालेऽपि स्नानतर्पणादिकं क्रियमाणं न दोषाय। अतो यदि रजोयोगोऽनर्हत्वं तदा कथं न दूष्यति ? उच्यते अतएव तर्हि नायमर्थः। किन्तु मासद्वयं यावद् रजोयोगदोषो ज्ञाप्यते। असौ तासान्नास्तीत्यर्थः।

एवम्।

"प्रतिस्रोतो रजोयोगो रथ्याजलविसर्पणम्।
गङ्गायान्न प्रदूष्यन्ति सा हि धर्म्मद्रवी स्मृति"रिति

स्मृतेरपि वर्णनं कार्य्यम्। गङ्गावच्चान्यासामपि समुद्रगाणान्त्रिरात्ररजोयोगो गङ्गावद्वेदितव्यः।

यथा पद्मपुराणे।

"सर्व्वाः पुण्याः सरस्वत्यः सर्व्वा गङ्गाः समुद्रगाः।"

---

वृद्धमयूरभट्टप्रभृतय इत्यर्थः। इत्यचाहुरिति अग्रिमेणास्य सम्बन्धः। द्वैमासिकरजोयोगनिषेधार्थं पक्षद्वयं श्रावणादि सर्व्वा नदी रजस्वला इति वचनोक्तश्रावणादिमासद्वयरजोयोगनिषेधार्थमित्यर्थः। न तु आदौ कर्कटके देवी त्र्यहं यावदित्युक्तत्र्यहरजोयोगनिषेधार्थं पक्षद्वयमिति वचनोत्तरार्द्धं वर्ज्जयित्वा समुद्रगा इत्यनेन समुद्रगात्वेन गङ्गादीनां रजोयोगविधौ पर्य्युदासदर्शनात् तदेकवाक्यतया तपनस्य सुता गङ्गा इत्यादिवचनस्थयमुनादीनामपि श्रावणादिमासद्वयरजोयोगनिषेधस्य युक्तत्वात्। अन्यथा "ये चान्ये नदसंज्ञका" इत्यनर्थकत्वापत्तेः। नदीत्वेनैव इत्यपपाठः नदत्वेनैव इत्येव साधुः अन्यथा रजसोऽप्रसक्ती इत्युपपत्तेः। स्त्रीधर्म्मो रजोयोगः अस्त्रीणां नदानां नहि सम्भवति इत्यन्वयः।

सर्व्वाः समुद्रगा नद्यो गङ्गावद्वेदितव्याः। कर्कटस्यादौ त्र्यहं तासां रजोयोगः परतः शुद्धिरित्यर्थः। यास्तु कैलासप्राग्दक्षिणस्थ-लौहित्यसरोविनिर्गतदक्षिणसमुद्रगामिण्यो लौहित्यनदप्रवेशिन्यः त्रिस्रोतःसन्ध्याप्रभृतयः शास्त्रस्थाश्च शोणादिनदप्रवेशिन्यो वा शास्त्रावगतनदीभावाः। या हिमवत्पादप्रभवा गङ्गाप्रवेशिन्यो गण्डकीकौशिकीतृतीयाप्रभृतयः। या च कैलासदक्षिणमानस-सरोविनिर्गता हिमवत्पादं भित्त्वा गङ्गाप्रवेशिनी सरयूर्नदी तासां मासद्वयमेव रजोयोगस्तासामपर्य्युदस्तत्वात्। शास्त्रेण च नदीभावेन कीर्त्तितत्वात्। किन्तु रजस्वलात्वविधौ लक्षणान-पेक्षशास्त्रावगतनदीनामेव निरपेक्षतया नदीपदाच्छीघ्रमवगमात् नदीगर्त्तप्रस्रवणानाञ्च स्रोतःस्विन्यविशेषात्। तत्तल्लक्षणानु-प्रवेशे नदीत्वावधारणस्य सापेक्षत्वात्। सापेक्षनिरपेक्षयोर्निर-पेक्षं बलीयस्तथान्यां तदुत्तरयोर्गङ्गावधिकमुत्तरात्वं, किं तूत्तरा-काण्डपातिनाम्। अतएवोत्तरापदार्थतयावगतानामुत्तराणां ग्रहणमिति न्यायसिद्धत्वादत्राप्यन्यानपेक्षनदीभावानामेव ग्रहणम्। तथाभूतानामेव च गङ्गायमुनागोमतीप्रभृतीनां पर्य्युदासदर्शनात्, शास्त्रकीर्त्तितानामेव नदीनां पर्य्युदस्तेतराणां मासद्वयं यावत् रजोयोगो न पुनरगस्त्योदयं यावत् पक्षद्वयं, श्रावणादीति द्वितीयातोऽत्यन्तसंयोगावगमात्, अविप्रतिपन्नकात्यायनवचन-विरोधाच्च। यत् कैश्चित् पठितम्—

"यावन्नोदेति भगवान्दक्षिणाशाविभूषणः।
तावद्रेतोवहा नद्यो वर्जयित्वा तु जाह्नवी"मिति

तदनादेयम्। किञ्च अगस्त्योदयस्य देशभेदेनानियतकालत्वात्। तथाहि राढ़ादिषु सप्तदिनावशिष्टे भाद्रे तस्योदयः। उज्जयिन्याञ्च दिनचतुष्टयावशिष्ट इत्यनन्तरमेव वाच्यम्। तेन हिमवत्पादप्रभवाणां सरयूगण्डकीकौशिकीत्रतीयादीनामसमुद्रगाणां मूलदेशे चिरेण शुद्धिरप्रदेशे च तीरभुक्तिवरेन्द्रीप्रभृतिष्वचिरेणैव स्यात्। किञ्च सप्तदिनावशिष्टोदयदेशस्य यः पूर्व्वोऽवधिर्नासावेवानुदयदेशस्यापि परोऽवधिरिति। अङ्गुलिवितस्तिमात्रेणैव शुद्ध्यशुद्धी स्याताम्। किञ्च रजस्वलाया रजःप्रवाहो वाच्यः, कथं रेतोवहात्वमुच्यते ? रेतोरजसोर्भिन्नत्वात्। न च रजोवहात्वमप्युत्पादकत्वापत्तेः। रेतोरजस्वलात्वमदृष्टार्थकर्म्मानर्हतया गौणम्। किञ्चागस्त्योदयः परोऽवधिरनेनोक्तो न पूर्व्व इति। तदपेक्षायां पक्षद्वयं श्रावणादीत्येतदधीनत्वात् पूर्व्वावध्यवगमस्य न तदन्यथाकरणे प्रभवति। किञ्च 'वर्ज्जयित्वा समुद्रगा' इति वक्तव्ये जाह्नवीपदस्य तु शब्दस्यानर्थकस्य प्रयोगो वचनकल्पकस्याधर्म्मगलग्रहं ज्ञापयति। तस्मात् सर्व्वप्रकारकमिदं वचनमनुसन्धीयमानमसङ्गतार्थम्। अतएव भोजदेवदीक्षितप्रभृतिभिर्न लिखितः। तेनापि मूलशून्यः। 'यावन्नोदेती'त्यसन्मूलमिति योग्लोकेनोक्तम्। तस्मात् श्रावणादिभाद्रसमाप्तप्रान्तमेव नदीनां रजोयोग इति सिद्धम्।

---

अथागस्त्योदयास्तमयकालः।

यथा खण्डखाद्यम्।

"राशिचतुष्केण यदा स्वाल्यंशयुतेन भवति तुल्योऽर्कः।

उदयोऽगस्त्यस्य पुनश्चक्रार्द्धाच्छोधितेऽस्तसमयः॥"

तथा वराहः।

"संख्याविधानात् प्रतिदेशमस्य

विज्ञाय सन्दर्शनमादिदेश।

तथोज्जयिन्यामगतस्य कन्या-

म्भागैः स्वराख्यैः स्फुटभास्करस्य॥"

सन्दर्शनमुदयम्। एतद्वचनद्वयावलोचनेन ज्योतिर्विद्भिरयमर्थः स्थिरीकृतो विष्णुरहस्ये च दर्शितः।

"अप्राप्ते भास्करे कन्यां सत्रिभागैस्त्रिभिर्दिनैः।

अर्घं दद्युरगस्त्याय ये वसन्ति महोदये॥"

महोदय उज्जयिनी तस्यां त्रिभिर्दिनैः सत्रिभागैः तृतीयो भागो दिनत्रयस्य दिनमेकं तत्सहितैः। कन्यामगते सूर्य्ये सिंहस्य षड्‌विंशतिदिनेषु गतेष्वगस्त्योदयः, तदनन्तरमर्घो ऽयः। राढ़ादिषु तु सिंहस्य त्रयोविंशतिदिनेषु गतेषूदयो भवति।

तद्विषयं भविष्योत्तरवचनम्।

"कन्यायामगते सूर्य्ये पूज्यो वै सप्तमे दिने।

कन्यायां समनुप्राप्ते सूर्य्येऽर्घः सन्निवर्त्तते॥"

कन्यागतेऽर्घो निवर्त्तते, इत्यनेनावशिष्टानि सप्तदिनान्यर्घस्य काल इति विवक्षितम् ।

तथा मत्स्यपुराणम् ।

"आसप्तरात्रादुदयोऽर्घमस्य
कर्त्तव्यमेतत् सकलं नरेण ।"

सप्तरात्रादवशिष्टादस्योदयास्तत: संप्रति संक्रान्तिं यावदर्घकाल:। तेन संक्रान्तिपूर्व्वदिनेऽर्घदानम् ।

यथा ।

"यस्तु भाद्रपदस्यान्ते उदेति कलसोद्भवे ।
अर्घन्दद्यादगस्त्याय सर्व्वान् कामान् लभेत स: ॥"

अस्तमयमपि देशभेदेन भिन्नकालमेव, 'चक्राद्धाच्छोधितेऽस्तमय' इति वचनात् । तेनोज्जयिन्यां वृषादित्यस्यांशकचतुष्टये सप्तदशकलाधिकेऽस्तमय:, राढ़ादिषु वृषस्य सप्तमांशके द्वाविंशतिकलाधिके गत इति ।

"ईषत्प्रभिन्नेऽरुणरश्मिजालै-
र्निश्चान्धकारे दिशि दक्षिणस्याम् ।
सांवत्सरावेदितदिग्विभागे
भूपोऽर्घमुर्व्यां प्रयत: प्रयच्छेत् ॥"

"कालोत्तरै: सुरभिभि: कुसुमै: फलैश्च
रत्नैश्च सागरभवै: कनकाम्बरैश्च ।
धेन्वा वृषेण परमान्नयुतैश्च भक्ष्यै:
दध्यक्षतै: सुरभिधूपविलेपनैश्च ॥"

स्या-
ति ।
ीम् ।
ल-
ात्

"नरपतिरिदमर्घं श्रद्दधानो ददानः
प्रतिगतगददोषो निर्ज्जितारातिपक्षः ।
भवति यदि च दद्यात् सप्तवर्षाणि सम्यग्-
जलनिधिरसनायाः स्वामितां याति भूमेः ॥"
"द्विजो यथालाभमुपाकृतार्घः
प्राप्नोति वेदान्, प्रमदा च पुत्रान् ।
वैश्यश्च गां, भूरिधनञ्च शूद्रो,
रोगक्षयन्धर्म्मफलञ्च सर्व्वम् ॥"
इत्यगस्त्यार्घदानकालः । *

---

* अथागस्त्योदयास्तमयकालः कथ्यते इति शेषः । उज्जयिन्यां तन्नामकदेशे कन्या-मगतस्य स्फुटभास्करस्य स्वराख्यैः पञ्चमैर्भागैः सन्दर्शनमुदयमित्यनुषङ्गेणान्वयः । सत्रिभागैः त्रिभागैकभागसहितैः त्रिभिर्दिनैश्चतुर्भिर्दिनैरित्यर्थः । सप्तमे दिने सप्तमदिनपर्य्यन्त-

। 

म न्दनस्तु—"अप्राप्ते भास्करे कन्यां शेषभूतैस्त्रिभिर्दिनैः ।
अर्घ्यं दद्युरगस्त्याय गौड़देशनिवासिनः"

भ वशेषमुक्तवान् । तेन संक्रान्तिपूर्व्वदिनेऽर्घ्यदानमिति । "कन्यायां समनुप्राप्ते ी: सन्निवर्त्तते" इति प्रागुक्तवचनादिति शेषः । स सर्व्वान् कामान् लभेत थः । वृषादित्यस्य सौरज्यैष्ठस्य । वृषस्य वृषादित्यस्य । अरुणरश्मिजालैः अरुण- : निश्यन्धकारे ईषत्प्रभिन्ने सतीत्यर्थः । सांवत्सरावेदितदिग्विभागे ज्योतिर्विद्भिः ादिशि इत्यर्थः । द्विजो यथालाभमिति अत्र द्विजः ब्राह्मणः क्षत्रियश्च, वैश्यस्य पृथ- ानात् धर्म्मफलमिति ।

अथ शक्रोत्थानम् ।

चान्द्रे भाद्रपदे सुरपतिरुत्थापनीय इति सिद्धे, तिथिनक्षत्र-विशेषः सम्प्रति चिन्त्यः प्रवासे वा । तत्र—

"वैष्णवादिगते चान्द्रे शक्रमुत्थापयेद्दिवा ।
भरण्यामन्त्यपादे च निशि सुप्ते विसर्ज्जयेत् ॥
निशायामन्त्यपादे च भरण्यां समसप्तके ।
शक्रं प्रवासयेद्देवं यथा राजा न पश्यति ॥"

वैष्णवं श्रवणा ।

अथ वराहः ।

"गुडपूपपायसाद्यैर्विप्रानभ्यर्च्य दक्षिणाभिः ।
श्रवणेन द्वादश्यामुत्थाप्योऽन्यत्र वा श्रवणे ॥"

अन्यत्र तिथ्यन्तरेऽपि श्रवणाद्यपादे सति शक्रमुत्थापयेदित्यर्थः । अथान्यत्र श्रवणादिति पाठः । व्याख्यातञ्चोत्पलेन श्रवणादन्यत्र नक्षत्रान्तरे द्वादश्यामुत्थापयेदिति ।

तथाच वराहः ।

"द्वादश्यान्तु सिते पक्षे मासि प्रौष्ठपदे तथा ।
शक्रमुत्थापयेद्राजा विश्वश्रवणवासरे ॥"

विश्वमुत्तराषाढ़ा, वासरो धनिष्ठा, तदपि तिथ्यन्तरे दिवा श्रवणा-द्यपादस्याप्राप्तौ द्वादश्यां नक्षत्रान्तरेऽपीति तस्यार्थः । श्रवणा-नक्षत्रस्य बहुसम्मतत्वात् । 'वैष्णवादिगते चान्द्रे' इत्यादिभिश्च द्वादश्यनपेक्षस्य विधानात् तिथ्यनपेक्षभरण्यन्तसाहचर्य्याच्च ।

तथापरं वचनम्।

"सिंहे गते दिनकरे सितचारुपक्षे
हर्य्यांद्यपादमुपगच्छति वै शशाङ्के।
उत्तिष्ठति त्रिदिवमन्दिरवृन्दवन्द्यो
याम्यान्ततो निशि निषीदति वज्रपाणिः॥"

सिंहे गते सति यः शुक्लपक्ष आरब्ध इत्यर्थः। स च सिंह एव वा समाप्यतां, सिंहकन्ययोर्वा उभयविधो इति धोयते। कर्कटसिंहसमापनीयस्तु न तथा। सिंहमगतेऽपि पक्षैकदेशस्य सिद्धत्वात् न सिंहगतेऽसौ पक्षः। यद्वा सिंहगते सति प्रारब्धचान्द्रमासस्य शुक्लपक्ष इत्यर्थः। अत्रापि तिथ्यनपेक्षस्योपादानम्।

तथा।

"सैंहे कान्येऽथ पक्षौ चेत् स्यातां हर्य्यांद्यसंयुतौ।
सैंहे परे शक्रमहः कन्यायान्त्विन्द्रदुर्गयोः॥"

अत्र द्वादश्यनपेक्षत्वं (१) व्यक्तीकृतम्। एकस्मिन्मासि सिंहे कन्यायां हर्य्यांद्यद्वयप्राप्तौ विशेषपरत्वादस्य, नचैकस्मिन्मासे वारद्वयं द्वादशीयुक्तश्रवणाद्यप्राप्तिः सम्भाविनी नक्षत्रस्य सप्तविंशतिदिनैस्तिथेश्च त्रिंशद्भिः पुनरपरावृत्तेः, तस्माद्द्वादश्यनपेक्षश्रवणाद्यपादस्य दिवाप्राप्तिमात्रेण शक्रोत्थापनं कार्य्यम्। दिवा तु तदप्राप्तौ विश्वश्रवणवासराणामन्यतमेन तत्कार्य्यम्। तत्रापि श्रवणस्य मुख्यत्वं, तस्यैव बहुभिरुपदर्शितत्वात्। 'हरिद्वयं भाद्रपदे यदि स्यात्,' तथा 'यदि सिंहे हरिद्वयम्'।

(१) द्वादश्यनापेक्षत्वं क्वचिदादर्शे पाठः।

तथा भविष्योत्तरे व्यासः ।

“श्रवणात् भरणीं यावत् पूजां कृत्वा विधानतः ।
रात्रौ विसर्ज्जयेद्देवं मन्त्रेणानेन पाण्डव ॥
ॐ वज्रहस्त सुरारिघ्न बहुनेत्र पुरन्दर ।
क्षेमार्थं सर्व्वलोकानां पूजेयं प्रतिगृह्यताम् ॥”

अयं पूजामन्त्रः ।

“सार्द्धं सुरासुरगणैः पुरन्दर शतक्रतो ।
उपहारं गृहीत्वेमं महेन्द्रध्वज गम्यताम् ॥”

विसर्ज्जनमन्त्रः । न च विश्वश्रवणवासरवचनमनादेयमिति दीक्षितवचनमादेयम् । दीक्षितेनैव परमप्रामाणिकवराहवचनत्वयोपन्यस्तस्य निर्मूलत्वानुपपत्तेः । अल्पयोग्लौकेन तु ब्रह्मपुराणस्येदं वचनमित्युक्तम् । लग्नादिशुद्धिश्च यथोक्तकालापरीहारे ग्राह्याऽन्यकाले दोषश्रुतेः ।

तदाह ब्राह्मे ।

“वचनाप्राप्तकाले तु शक्रमुत्थापयेद्यदि ।
राज्ञो राष्ट्रं विनश्येत प्रजा चैव निपीड्यते ॥
काले तूत्थापिते शक्रे चिरं जीवति पार्थिवः ।
प्रजा निरुग्भवेदेव भवेत् शस्यवती क्षितिः ॥”

यत्तु ज्योतिःशास्त्रम् ।

“तारापतौ त्रिदशदानवमन्त्रिभागे
सौम्यग्रहे च नवपञ्चमसप्तमस्थे ।

लग्नेषु दैत्यसचिवज्ञबृहस्पतीना-

मुत्थापनं शुभकरं भुवि शक्रकेतोः ॥"

तदप्येकान्ततः शुभकरं शास्त्रोक्तकालावच्छेदेन यदि लभ्यते, न तु लग्नानुरोधेन श्रवणाद्यपरीहारार्थम् ।

विसर्ज्जनन्तु ।

"निशायामन्त्यपादे च भरण्याः समसुप्तके ।

शक्रं प्रवासयेद्देवं यथा राजा न पश्यति ॥"

समसुप्तिकायां भूतायामिति ।

अत्र विशेषमाह ।

"अन्तकस्यादिमध्यान्तं यदि स्यादष्टमे दिने ।

शक्रं प्रवासयेत्तत्र नो चेद्भीरष्टमात् परम् ॥"

अन्तकं भरणी । तथाष्टमदिवसीयरात्रावन्त्यपादस्यालाभे पादानुरोधेऽपि विसर्ज्जनं कार्य्यम् । अष्टमातिक्रमे दोषश्रुतेः । यदि पुनरष्टमे दिने भरणी न प्राप्येत नवमे तु लभ्यते, तदा तत्रैव विसर्ज्जनं कार्य्यम् । यदि स्यादष्टमे दिन इति प्राप्तौ सत्यान्तदतिक्रमदोषश्रुतेः । तेनोत्तराषाढ़धनिष्ठयोरुत्थानेऽश्विन्यां कृत्तिकायां वा विसर्ज्जनमिति कल्पनमशास्त्रं भरणीमात्रस्य विधानात् । भरण्यास्तु भौमवारादिदूषितत्वे तदपगमे दिनान्तरे विसर्ज्जनम् ।

तथा ज्योतिःशास्त्रे ।

सौरिभूमिजयोर्वारे सूतके मृतकेऽथवा ।

भूमिकम्पादिकोत्पाते शक्रं नैव प्रवासयेत् ॥

न च भाविभौमादिदिनप्रतिसन्धानेन पूर्व्वदिन एव पातः क्रियतामिति वाच्यम्।

"स्वर्गात् समेत्य भुवि सप्तदिनान्युषित्वा
स्वर्गं प्रयाति हरिरन्त्यपदे भरण्याः।" इति।

हरेरिन्द्रस्य भरणीपर्य्यन्तावस्थानश्रुतेस्तद्बाधस्यान्याय्यत्वात्। सूतके मृतके च राजसम्बन्धिन्यतिक्रान्ते विसर्ज्जनं कार्य्यम्। भूमिकम्पादौ तु सप्तरात्रातिक्रमे विसर्ज्जनम्। तेषां सप्तरात्रदूषकत्वात्।

तथाच स्मरन्ति।

"अनिष्टे त्रिविधोत्पाते सिंहिकासुतदर्शने (१)।
सप्तरात्रं न कुर्व्वीत यात्रोद्वाहादिमङ्गलम्॥"

अथोत्थानं दर्शयति वराहः।

"भाद्रपदशुक्लपक्षेऽष्टम्यां नागरजनैर्वृतो राजा।
दैवज्ञसचिवकञ्चुकिविप्रप्रमुखैः सुवेशधरैः॥
अहतांशुकसंवीतां यष्टिं पौरन्दरीं सपौरजनैः।
स्रग्गन्धमाल्ययुक्तां प्रवेशयेच्छङ्खतूर्य्यरवैः॥" इत्यादि।

उत्थापनप्रकारमाह मिहिरः।

"अच्छिन्नरज्जुं दृढ़काष्ठमातृकं
सुश्लिष्टयन्त्राकुलपादतोरणम्।
उत्थापयेल्लक्षसहस्रचक्षुषः
प्रालद्रुमालम्बकुमारिकान्वितम्॥

(१) सिंहिकासूनुदर्शने इति रघुनन्दनादिसम्मतः पाठः।

नातिद्रुतन्न च विलम्बितमप्रकम्पं
मध्यस्थमन्यपिटकादिविभूषणञ्च।
उत्थानमिष्टमशुभं यदतोऽन्यथा स्यात्
तच्छान्तिभिर्न्नरपतेः शमयेत् पुरोधाः॥"

पक्षिपतने दोषमाह।

"क्रव्यादकौशिककपोतककाककङ्काः
केतुस्थिता महदुशन्ति भयं नृपस्य।
वर्षेण वापि युवराजभयं वदन्ति
श्येनो विलोचनभयं नियतङ्करोति॥"
"केतुभङ्गपतने नृपमृत्यु-
न्तस्कराज्मधु करोति निलीनम्।
हन्ति चाप्यथ पुरोहितमुल्का
पार्थिवञ्च महिषीमशनिः॥
राज्ञीविनाशं पतिता पताका
करोत्यवृष्टिं पिटकस्य पातः।
मध्याग्रमूलेषु च केतुभङ्गो
निहन्ति मन्त्रिक्षितिपालपौरान्॥"

विस्तरभयान्न बहु लिखितम्।

इति शक्रोत्सवः। *

---

* अथ शक्रोत्थानमुच्यते। चान्द्रमासे भाद्रपदे मुख्यचान्द्रभाद्रे। वैष्णवादिगते श्रवणाद्यश्विन्यन्तसप्तनक्षत्रगते। सुप्ते सर्व्वजनसुप्ते। सम्भाविनी सम्भविष्यन्ति। पुनः-रपरावृत्तेरिति नक्षत्रस्य सप्तविंशतिसंख्यकत्वात् तिथेस्तु त्रिंशत्संख्यकत्वाच्च सप्तविंशति-

## अथापरपक्षश्राद्धम् ।

यदपरपक्षश्राद्धं कन्यागत एव भास्करे कार्य्यम् ।
दैवान्मलमासाद्या तत्राकरणे तुलायान्तत् ॥
स्थित एतस्मिन् ये तु ब्रुवते सिंहेऽपि पञ्चमे पक्षे ।
श्राद्धं कार्य्यं कृतिनस्तेषामेतन्निराकरणम् ॥

तत्र भविष्यपुराणम् ।

"कन्यां गते सवितरि पितृराज्ञोऽनुशासनात् ।
तावत् प्रेतपुरी शून्या यावद्वृश्चिकदर्शनम् ॥
ततो वृश्चिकमायाते निराशाः पितरो नृप ।
पुनः स्वभवनं यान्ति शापं दत्त्वा सुदारुणम् ॥"

तथा जातूकर्णः ।

"हस्तर्क्षस्थे दिनकरे पितृराजानुशासनात् ।
तावत् प्रेतपुरी शून्या यावद्वृश्चिकदर्शनम् ॥

---

दिनात्परं नक्षत्रस्य त्रिंशद्दिनात्परं तिथेस्तु पुनःप्राप्तिः सम्भवतीति भावः । विश्वश्रवणवासवाणामन्यतमेन उत्तराषाढ़ाश्रवणाधनिष्ठानामन्यतमनक्षत्रेण । लग्नेषु दैत्यसचिवज्ञबृहस्पतीनामिति सप्तम्यर्थे षष्ठीबहुवचनं तेन लग्नेषु शुक्रबुधबृहस्पतिषु सत्सु इत्यर्थः । अन्तकस्यादिमध्यान्तं भरण्या आदिमध्यान्तम् । प्रवासयेत् विसर्ज्जयेत् । नागरैर्वृतः नगरस्थजनसहितः । दैवज्ञसचिवकञ्चुकिविप्रप्रमुखैः ज्योतिर्ज्ञमन्त्रिनाटकप्रसिद्धकञ्चुकिनामकविप्रादिभिः । सुवेशधरैः सुन्दरस्वस्वपरिच्छदयुक्तैः । यष्टिं केतुम् । केतुभङ्गपतने भग्नकेतुपतने इत्यर्थः । उल्का पुरोहितं पार्थिवञ्च हन्ति इति पूर्व्वेणानुषङ्गः । महिषीं नृपपत्नीम् अग्रनिर्व्वम् । मध्याग्रमूलेषु च केतुभङ्गः मध्ये मध्यदेशावच्छेदे केतुभङ्गः मन्त्रिणम्, अग्रदेशावच्छेदे क्षितिपालं, मूलदेशावच्छेदे चेत् पौरान् निहन्ति ।

वृश्चिके समतिक्रान्ते पितरो दैवतैः सह ।
निःश्वस्य प्रतिगच्छन्ति शापन्दत्त्वा सुदारुणम् ॥”*

वाक्यान्तरे उत्तरादित्रयोपादानाद्धस्तशब्दः कन्यापरः । समतिक्रान्ते समाक्रान्तेऽत्र गते सूर्य्येऽपि पितॄणामागमनज्ञापनं प्रागर्च्चनार्थम् । वृश्चिकदर्शनाच्च गमनज्ञापनं, तुलासमाप्तावर्च्चनार्थमन्यथानर्थक्यात्, तेन वचनचतुष्टयं कन्यादितुलान्तक्रोड़ीकृतमासद्वयग्रहणार्थं, तत्र श्राद्धाकरणे “शापन्दत्त्वा सुदारुणमिति” । अक्रियायां दण्डात् क्रियानियमसिद्धिः । तत्रापि कन्याया मुख्यत्वम् ।

यथा भविष्यपुराणम् ।

“हंसे वर्षासु कन्यास्थे शाकेनापि गृहे वसन् ।
पञ्चम्या उत्तरे दद्यादुभयोर्वंशयोर्कृतम् ॥”

पितृमातृकुलस्येदमवश्यकृत्यं शोधनीयम् । हंसः सूर्य्यः ।

तथा ।

---

* अथ कन्यागतापरपक्षश्राद्धम् । दैवादिति कार्य्यान्तरव्यासङ्गादपाटवाद्वेत्यर्थः । तदकरणे कन्यास्थरविनिमित्तश्राद्धाकरणे । तुलायां तुलास्थरवौ तच्छ्राद्धं कर्त्तव्यमिति शेषः । ये तु कृतिनो ब्रुवते इत्यन्वयः । पञ्चमे आषाढ्याः पञ्चमपक्षे । सिंहेऽपि कन्यामलमासे तत्पञ्चमपक्षस्य सिंहे समापने सति तत्र श्राद्धं कार्य्यमित्यर्थः । पितृराज इत्यार्षं पितृराजस्य यमस्य इत्यर्थः । निराशा इति कन्यास्थरविनिमित्तश्राद्धाकरणे इति शेषः । स्वभवनं यमपुरम् । हस्तर्क्षस्थे दिनकरे इति कुञ्जरच्छाययोगज्ञापनार्थमुक्तम् । तथाच—योगो मघात्रयोदश्यां कुञ्जरच्छायसंज्ञितः । भवेन्मघायां संस्थे च शशिन्यर्के करस्थिते ॥ इति ।

"सूर्य्ये कन्यास्थिते श्राद्धं यो न कुर्य्याद्गृहाश्रमी ।
धनं पुत्त्राः कुतस्तस्य पितृनिश्वासपीड़नात् ॥"

तदेवं पौनःपुन्येन कन्यायामवश्यकर्त्तव्यताप्रतिपादनं, तदतिक्रमे दोषभूयस्त्वार्थं शाकादिनाप्यवश्यं सम्पादनार्थं, अन्यथैकवचनसाध्येऽनेकाभिधानमनर्थकं स्यात् । तेन कन्यायां यथाकथञ्चिदपि करणशक्तौ तुलायां सम्पादयिष्यामीति कृत्वा नातिक्रमणीयम् । दैवादेव मृतकादिना मलमासतया वाऽकरणे तुलायान्तत्क्रिया ।

तदाह प्रचेताः ।

"कन्याराशौ महाराज यावत्तिष्ठेद्विभावसुः ।
तस्मात् कालाद्भवेद्देयं वृश्चिके यावदागतः ॥"

कन्याराशौ यावदस्ति तावच्छ्राद्धन्देयं, परतोऽपि वृश्चिकगमनं यावत् ।

व्यक्तं भविष्यपुराणे ।

"येयं दीपान्विता राजन् ख्याता पञ्चदशी भुवि ।
तस्यान्दद्यान्न चेद्दत्तं पितृणान्तु महालये ॥"

पूर्व्वं भविष्ये कन्याया एवादरणीयत्वेनोपन्यासात् अपरैरपि मुनिभिः कन्यायामेव महाफलत्वेन श्राद्धस्य कीर्त्तितत्वात् महालयः कन्यैव, तेन कन्यायामदत्ते श्राद्धे दीपान्विता तुलायां पञ्चदश्यपि ग्राह्या, तिथ्यन्तरेभ्योऽधिकफलं नतु तत्रैव परं कार्य्यं; भविष्य एव वृश्चिकप्राप्तेरवधित्वेनाभिधानात् कार्त्तिकं सकलं वापीति विष्णुवचनाच्च ।

## अथ कन्यायां काम्यकल्पाः ।

तत्र वृहन्मनुः ।

"कन्यां गते सवितरि यान्यहानि तु षोड़श ।
क्रतुभिस्तानि तुल्यानि समाप्तवरदक्षिणैः ॥"

वायुपुराणम् ।

"कन्यां गते सवितरि तिथिषोड़शकञ्च यत् ।
क्रतुभिस्तानि तुल्यानि तत्र दत्तमथाक्षयम् ॥"

तथा शाठ्यायनः ।

"नभस्यस्यापरे पक्षे तिथिषोड़शकञ्च यत् ।
कन्यागतान्वितञ्चेत् स्यात् स कालः श्राद्धकर्म्मसु ॥"

कन्यागतान्वयः षोड़शतिथीनामेव न पुनरेकतिथ्यन्वयादेव सर्व्वस्य पुण्यता, एकस्य तिथिषोड़शकावयविनोऽभावात् । अतएव षोड़शब्राह्मणसमुदायस्य मध्ये एकस्य भगवत्पुरुषोत्तमस्य स्पर्शेन सर्व्वेषां पुण्यभागिता । एतन्न्यायमूलमेवैतद्वचनम् ।

"कृत्तिकादिभरण्यन्तं वारावारविसप्तकम् ।
नैते संयोगमात्रेण पुनन्ति सकलां तिथिम् ॥"

एकस्य तिथ्यवयविनोऽभावात् इत्यर्थः । इतरथा हि पूर्व्वदिन-रात्रौ चतुर्थी भौमवारयोगे बुधवारेऽपि भौमवारयुक्तचतुर्थी-विहितस्नानदानाद्यापद्येत, तस्मात्तिथिषोड़शकस्यैव कन्यायोगो-ऽत्राभिमतः । अनन्तरोपन्यस्तवचनद्वयविरोधाच्च ।

अथ मत्स्यपुराणम् ।

"उत्तराहस्तचित्रर्क्षे गते तीक्ष्णांशुमालिनि ।
योऽर्च्चयेत्स्वपितॄन् भक्त्या तस्य वासस्त्रिपिष्टपे ॥"

उत्तरादित्रयं कन्यानक्षत्रकम् ।

अतएव कौत्स्यवचनम् ।

"उत्तराहस्तचित्रासु कन्यायां भास्वति स्थिते ।
कृष्णपक्षो गजच्छायासमानः पितृकर्म्मसु ॥
राजसूयाश्वमेधाभ्यां य इच्छेद्दुर्लभं फलम् ।
अप्यम्बुशाकमूलाद्यैः पितॄन् कन्यागतेऽर्च्चयेत् ॥"

अथ मत्स्यपुराणम् ।

"कन्यां गते सवितरि दिनानि दश पञ्च च ।
पार्व्वणेनेह विधिना तत्र श्राद्धं विधीयते ॥
दिव्यान्तरीक्षभौमानि स्थावराणि चराणि च ।
पिण्डमिच्छन्ति पितरः कन्याराशिगते रवौ ॥"

अथ दिवस्पतिसंग्रहस्य ।

"रेवत्यादीनि ऋक्षाणि स्वात्यन्तानि यदा शशी ।
अर्के नभस्यकन्यास्थे श्राद्धकाल उदाहृतः ॥"

नभस्यः चान्द्रमासः । कन्यास्थ इत्यविरोधात् । इति षोड़शभिर्वचनैः कन्यागत एव बोधिताङ्गतया पितृयज्ञे मुख्यं संप्रति पञ्चमपक्षस्य वचनानि । यद्यपि भोजराजविश्वरूपगोविन्दराजैर्हेयतया न लिखितानि, तथाप्युपन्यस्य व्याख्यायन्ते ।

तत्र कार्ष्णाजिनिः ।

"शक्रध्वजनिपाताङ्को यः स्यात् पक्षस्तु पञ्चमः।
स विज्ञेयोऽपरः पक्षस्तत्र श्राद्धं विधीयते॥
पुत्त्राणां वर्द्धनं धान्यमारोग्यं भूतिमेव च।
प्राप्नोति पञ्चमे दत्त्वा श्राद्धं कामांस्तथापरान्॥
एतानेव हि हिंसन्ति पञ्चमं यो व्यतिक्रमेत्*।
तस्मान्नातिक्रमेद्विद्वान् पञ्चमे पैतृकं विधिम्॥"

अत्र हि पुत्त्रादीनां पञ्चमपक्षश्राद्धदानफलत्वेन कीर्त्तितत्वादेतच्छब्दस्य च प्रकृतवाचित्वात्, तेषां पञ्चमपक्षश्राद्धाकरणे तत्-साध्यानामसिद्धत्वात् "हिंसन्ती"त्यनुपपत्तेरप्राप्तिपरो हिंसाशब्दः। तस्मात् पुत्त्रादिप्राप्त्यर्थी पञ्चमे पैतृकविधिन्नातिक्रमेत्। अतिक्रमे तत्तत्फलानवाप्तेः। न त्वनर्थान्तरमत्र श्रूयते—"पितृनिश्वास-पीड़नादिति"वत् येनावश्यकर्त्तव्यता स्यात्।

तथा शाट्यायनः।

---

* अक्रियायां श्राद्धाकरणे, दद्यात् शापं दत्त्वा सुदारुणमिति दण्डविधानात्। क्रियानियमसिद्धिः कन्यास्थरविनिमित्तश्राद्धस्यावश्यकर्त्तव्यत्वरूपनियमसिद्धिः। ननु तत्रैव परं कार्य्यं दीपान्विताामावास्यामात्रे कर्त्तव्यं नत्वित्यर्थः। नभस्यस्य मुख्यचान्द्रभाद्रस्य, अपरे पक्षे कृष्णे पक्षे, षोड़शकमिति पञ्चदशमित्यर्थः। पञ्चदशतिथिमात्रस्य पक्षत्वात् षोड़शग्रहणं भौजङ्गीतिथिमासाद्य इतिवत् अव्यवहितपौर्णमास्यां संयमनविधानार्थम्। कृत्तिकादिभरण्यन्तं सप्तविंशतिर्नक्षत्राणीत्यर्थः। रविसप्तकं रविप्रभृतिसप्तकं, वाराः एते नक्षत्रवाराः। संयोगमात्रेण एकदेशसंयोगमात्रेण। इतरथा अन्यथा। शक्रध्वजनिपाताङ्कः शक्रध्वजपातचिह्नितः। पञ्चमः आषाढ्यपेक्षया पञ्चमः। यो व्यतिक्रमेत् आषाढ़ीयपञ्चमपक्षे अश्वयुक्कृष्णपक्षे यो जनः श्राद्धं न कुर्य्यात्।

"आकाङ्क्षन्ति पितरः पञ्चमं पक्षमाश्रिताः ।
तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलम् ॥"

तत्रैव दातव्यं न तु तत्र दातव्यमेवेति कथं तत्रावश्यकर्त्तव्यतागमः ? अन्यत्र निष्फलमिति । तादृक्फललाभार्थं, नत्वन्यत्र निष्फलमेव, वृश्चिकदर्शनावधि श्राद्धविधानात् । किञ्चास्माद्वचनात्, कन्याशून्य एव पञ्चमोऽवगम्यते । न च तत्र भवन्तोऽपि श्राद्धं वदन्ति, तेन कन्यागतमवश्यापेक्षणीयम् । तेन 'तस्मान्नातिक्रमेदिति,' 'तस्मात्तत्रैव दातव्यमिति' वचनद्वयं यदि नित्याधिकारार्थं, तदावश्यापेक्षणीयम्, कन्याविशिष्ट एव पञ्चमपक्षांशेऽनतिक्रमणीयमन्वितम् । "कन्यां गते सवितरीति" "पञ्चमं पक्षमाश्रिता" इति वचनयोरेकवाक्यतयाऽस्यैवाङ्गस्य सिद्धेः । अथ कन्यामन्तरेणापि श्राद्धाङ्गत्वमेव ।

तदाह जातुकर्णः ।

"आषाढ़ीमवधिं कृत्वा यः स्यात् पक्षस्तु पञ्चमः ।
तत्र श्राद्धं प्रकुर्व्वीत कन्यां गच्छतु वा न वा ॥"

नैतत् "हस्तर्क्षस्थे दिनकर" इति जातुकर्णेनैव पूर्व्वमुक्तत्वात्, "गच्छतु वा न वेति" स्तुतिरेवेयम् । शङ्खधरेणापि स्तुतित्वेनैव व्याख्यातम् । अस्मिन् पक्षे कन्याविमुक्तेऽपि यावच्छ्राद्धं स्यात्, किं पुनस्तस्मिन्नेव पक्षे संक्रान्तौ सत्यामित्यन्तेन ग्रन्थेन * ।

* हिंसन्तीत्यनुपपत्तेरिति । प्राणवियोगफलकव्यापारस्य हिंसापदार्थत्वात् धनधान्यादीनां तदसम्भवादाह अप्राप्तिपरो हिंसाशब्द इति । पैतृकविधिं पितृश्राद्धं, नाति-

युक्तञ्चैतत्, "तत्र श्राद्धं प्रकुर्व्वीतेति" तच्छब्देन प्रक्रान्तस्य पक्षस्य परामर्शात्, तत्र पक्षे, "कन्यां गच्छतु वा न वेति" प्रतीयते। न तु तत्पक्षीयतिथौ कन्या भवतु न वेति प्रतीतिः, पूर्व्वं तिथेरनुपात्तत्वात्। न च कन्यासम्बन्धशून्यस्य पञ्चमपक्षस्य श्राद्धाङ्गतेति वाच्यम्भवतामप्यनभिधानत्वात्, वयमपि दर्शयिष्यामः। तस्मात् स्तुतिरेवैषा। किञ्च यद्ययं "गच्छतु न वेति" विधिः, तदा किम् अनेन विधीयते? किं कन्यान्वितः पञ्चमः पक्षः, अनन्वितो वा? उभयविशिष्टो वा? पञ्चमपक्षमात्रं वा? यदि प्रथमः कल्पः, तदा कन्यान्वितस्याङ्गतया विधानात् कथं सिंहान्वितांशे पितृयज्ञक्रिया न वेत्यानर्थक्याच्च। अनन्वितश्चेत्

---

क्रमेत् अवश्यमेव कुर्य्यादित्यर्थः। नत्वनर्थान्तरम् अन्योऽनर्थः अनर्थान्तरम् अनर्थाभावः, न तु श्रूयते इत्यर्थः। अन्यत्र निष्फलं अल्पफलमित्यर्थः। तस्मान्नातिक्रमेदिति तस्मान्नातिक्रमेद्विद्वान् पञ्चमे पैतृकं विधिमित्येकवचनं, तस्मात्तत्रैव दातव्यमिति तस्मात्तत्रैव दातव्यं दत्तमन्यत्र निष्फलमिति द्वितीयवचनमिति वचनद्वयमित्यर्थः। कन्याविशिष्ट एव कन्यागत एव। पञ्चमपक्षस्य अश्वयुक्कृष्णपक्षस्य। अंशे अवयवे तिथिरूपे। अनतिक्रमणीयत्वम् अवश्यापेक्षणीयत्वम्। कन्यां गते सवितरीति कन्यां गते सवितरि दिनानि दश पञ्च च। पार्व्वणेनेह विधिना तत्र श्राद्धं विधीयते॥ इति वचनयोः इत्यनयोर्वचनयोरित्यर्थः। अस्यैव कन्याविशिष्टस्यैव। अङ्गस्य अङ्गत्वस्य। हस्तचंस्थे दिनकरे इति हस्तचंस्थे दिनकरे पितृराजानुशासनात्। तावत् प्रेतपुरी शून्या यावद्वृश्चिकदर्शनम्॥ वृश्चिके समतिक्रान्ते पितरो दैवतैः सह। निःश्वस्य प्रतिगच्छन्ति शापं दत्त्वा सुदारुणमिति वचनेन जातुकर्णेन पूर्व्वमुक्तत्वात्, हस्तचंस्थे इत्यनेन कन्यास्थपञ्चमपक्षस्य पूर्व्वमुक्तत्वादित्यर्थः। कन्यां गच्छतु वा न वा इति पाठस्थाने स्वपोषकतया शङ्खधरसम्मतपाठं दर्शयति गच्छतु वा न वेति। इत्यन्तेन ग्रन्थेन शङ्खधरेण व्याख्यातमित्यन्वयः।

कन्यान्वितस्यैवाग्रहणापत्तेः, कन्यागतं पञ्चमञ्चेत्यादिविरोधाच्च, कन्याङ्कत्वानर्थक्याच्च। कर्कटसिंहयोरेव चाधिमासपाते कन्याननन्वितस्य पञ्चमस्य सिंहे सम्भवात्। तदा च कन्यायामेव चान्द्रभाद्रलाभे शक्रोत्थानापरपक्षयोर्निर्विवादत्वात्, "अन्ते वा यदि वा मध्य" इति विरोधाच्च। न च "षष्ठ्या तु दिवसैर्मास" इति कन्यागत एव तदानीं पञ्चम इति वाच्यम्, औपचारिकत्वान्मासशब्दस्य।

उक्तं मनुना।

"पित्र्ये रात्र्यहनी मासः प्रविभागस्तु पक्षयोः।
कर्म्मचेष्टास्वहः कृष्णः शुक्लः स्वप्नाय शर्व्वरी॥"

मानुषो मासः पितॄणां रात्र्यहनी, तत्रापि कृष्णपक्षोऽहः, शुक्लः शर्व्वरी। अनेन प्रतिपदाद्यमावास्यान्तः कृष्णपक्षः, प्रतिपदादि-पौर्णमास्यन्तश्च शुक्ल इत्युक्तम्। तथा 'पक्षान्तौ स्रोतसी स्मृतौ,' 'पक्षस्ते दश पञ्च चे'त्यभिधानञ्चैकत्वम्। अतएव 'एकसंज्ञौ यदा मासौ,' 'अधिमासः स विज्ञेयः,' 'मलमासं विजानीयात्,' अन्यथा मासाविति न स्यात्। द्विराषाढ़त्वञ्चैकत्वान्मासस्याधिपक्षः स विज्ञेयो मलपक्षं विजानीयादित्यादि। तथा त्रयोदशमासाः संवत्सर इति श्रुतिर्नोपपद्येत। एकराशिस्थसूर्य्यावच्छिन्नत्वेन तु दर्शान्तमासयोरेकनामतया एकमासत्वमौपचारिकम्, पक्षत्व-मौपचारिकमिति न श्रूयते। न हि तद्वचनं, "त्रिंशद्भिर्दिवसैः पक्ष" इति भणति, न चार्थाल्लभ्यते। मन्वाद्यविरोधेन चतुर्भिरेव पक्षैरसौ मास इत्युपपत्तेः। सत्यपि च पक्षशब्दे गौणत्वादस्य

पञ्चमपक्षवचने सकृदुच्चरितपक्षशब्देन गौणमुख्यग्रहणानुपपत्तेः, अतएव योगलौकिन 'एक एवासौ मास' इति काशकुशावलम्बनं, तस्माच्छ्रावणभाद्राधिमासपाते कन्यासम्बन्धीयपक्षः सप्तम एव। अतस्तद्वत्सरे कन्यान्वितस्य पञ्चमस्याभावात्, कन्यामात्रे वा विधिना श्राद्धं न स्यात् *। अथ कन्यानिमित्तं "हंसे वर्षासु कन्यास्थे सूर्य्ये कन्यास्थिते" इत्यादिष्ववश्यकर्त्तव्यतावगतेः। तदा पञ्चमपक्षे सिंहांशेऽपि कृते श्राद्धे कन्यानिमित्तं केन वार्य्यते ?

---

* कन्यां गच्छतु वा न वेति पाठस्यापि समीचीनतां दर्शयति तत्र पक्षे इत्यादि। तथाच तत्र पक्षे आषाढ़ीयपञ्चमपक्षं साकल्यं व्याप्य कन्यां गच्छतु वा न वेत्यनुषङ्गेणान्वय इत्यभिप्राय इति भावः। कन्या भवतु वा न वा इति पञ्चमपक्षसम्बन्धियत्किञ्चित्तिथौ कन्यासम्बन्धी भवतु न वा इति, न तु इत्यर्थः। पूर्व्वं तिथेरनुपात्तत्वादिति तथाच पक्षत्वे-नैवोपात्तत्वं न तु पक्षसम्बन्धियत्किञ्चित्तिथित्वेनोपात्तत्वमिति भावः। कन्यान्वितः कन्या-मात्रान्वितः। अनन्वितः कन्यामात्रसम्बन्धशून्यः। उभयविशिष्टः कन्यासम्बन्धतदभावोभय-विशिष्ट इत्यर्थः। श्रुतिर्नोपपद्येत इति श्रुतौ त्रयोदशमासैर्वत्सरकीर्त्तनविरोधात् षष्टिदिनै-रेको गौणो मासः प्रतिभाति। दर्शान्तमासयोर्मुख्यचान्द्रमासद्वययोः, एकनामतया आषाढ़ाद्येकनामकत्वगुणयोगेन, लक्षणया एकमासत्वेन, औपचारिकं गौणमित्यर्थः। पक्षत्वन्तु नौपचारिकमित्यत्र प्रमाणं दर्शयति नह्वीत्यादि। तद्वचनं षष्ट्या तु दिवसैर्मास इति वचनम्। अर्थात् साक्षात्शब्दादेव, न च लभ्यते त्रिंशद्भिर्दिवसैः पक्ष इति न ज्ञायते। मन्वाद्यविरोधेन पित्र्ये रात्र्यहनी मास इति मन्वादिवचनाविरोधेन। असौ मास एको मासः, इत्युपपत्तेः पक्षचतुष्टयेनैकमासत्वोपपत्तेः। पक्षशब्दे त्रिंशत्तिथिभिरेव पक्षशब्दप्रयोगे सत्यपि चेत्यर्थः। मासद्वयेन एकगौणमासप्रयोगे दृष्टान्तमाह काशकुशावलम्बनमिति। काशकुशावलम्बनेन एकं कुशासनमुच्यते। कन्यासम्बन्धीयपक्षः सप्तम एव आषाढ़ापेक्षया कन्यागतापरपक्षः सप्तम एवेत्यर्थः। पञ्चमस्याभावात् कन्यान्विताश्वयुक्कृष्णपक्षस्य सप्तमत्वेन पञ्चमत्वाभावादित्यर्थः।

निमित्तभेदात् संक्रान्तिनिमित्तं दर्शनिमित्तकवत् युगपन्निमित्तोपनिपाते तु तन्त्रानुष्ठानं भवतु। न च पञ्चमपक्षे दैवादकरणे कन्यागते विधानमिति। तथाऽश्रवणात्, यथा कन्यायामकरणे तुलाश्रुतिः पूर्व्वमुक्ता।

यथा वा कन्यायां मलमासे।

"मासि कन्यागते भानुरसंक्रान्तो भवेद्यदि।
दैवं पित्र्यं तथा कर्म्म तुलास्थे कर्त्तुरक्षयम्॥"

पितामहस्य।

"यातुधानप्रियो मासः कन्यार्के जायते यदि।
दैवं पित्र्यं तथा कर्म्म उत्तरे मासि कारयेत्॥"

शङ्खधरसमुच्चयस्य न तथा श्रुतिरस्ति। अभावविधित्वं चाभावश्रुतिव्याप्तम्। तदत्र व्यापकभूता अभावश्रुतिर्निवर्त्तमाना व्याप्यमभावविधित्वमपि निवर्त्तयति।

यच्च षट्त्रिंशन्मतम्।

"सिनीबालीमतिक्रम्य यदा कन्यागतम्भवेत्।
तदा कालस्य वृद्धत्वादतीत्यैव पितृक्रिया॥

तदपि यदि कन्यागतम्भवेन्निष्पद्यते, शुक्लप्रतिपदि तुलासंक्रान्तौ तद्भवतीति। कन्याधिमास एव तुलाविधानार्थम् पूर्व्ववचनद्वयमूलश्रुत्यैवास्याप्युपपत्तेः, मूलान्तरकल्पनानुपपत्तेः*। भाद्राधि-

* अथ मा भूदश्वयुक्निमित्तं कन्यास्थरविनिमित्तं भवत्येव इत्याह अथ कन्यानिमित्तं प्रमाणं दर्शयति हंसे वर्षासु इत्यादि। अवश्यकर्त्तव्यतावगतेः केवलकन्यास्थरविनिमित्तश्राद्धस्यावश्यकर्त्तव्यत्वावगतेः। निमित्तभेदादिति तथाचाश्वयुक्कृष्णपक्षनिमित्तं कन्यास्थ-

मासपक्षे चैतद्दर्शने पञ्चमवादिमतेऽतीत्येत्यप्यनुपपत्तेः सिंहस्थाविधानात्। पञ्चमस्य तन्मते कन्यायामेव भावात्। अन्यथा श्रावणाधिमासपाते सिंहे श्राद्धप्रसक्तेः। न च भवत्येव तत्रेति वाच्यं, तन्मते तृतीयत्वात्तस्य। अस्मन्मते तु केवलस्य पञ्चमस्यानङ्गत्वात्। किञ्च कन्यागतपञ्चमयोर्युगपत् सम्भवात्। प्रतिपक्षतासम्भवात् सम्प्रधारणानुपपत्तेः, कथमभावविधिः? न हि शुक्लमानयेति, तदभावे पटमिति परस्परपरीहारस्थितयोरेवान्य-

---

रविनिमित्तञ्च श्राद्धद्वयमित्यभिप्रायः। तन्त्रानुष्ठानं भवत्विति तथाच यथा संक्रान्तिनिमित्तं दर्शनिमित्तकञ्च श्राद्धद्वयं यदा एकदिने भवति तदा यथा तन्त्रानुष्ठानं तथा अश्वयुक्कृष्णपक्षस्य कन्यास्थरवौ पाते तन्त्रानुष्ठानम्। न चेति नहीत्यर्थः। तथाश्रवणादिति तथाच यथा कन्यायां मलमासादिना श्राद्धाकरणे तत्श्राद्धस्य तुलास्थार्के करणश्रुतिरस्ति, न तथा पञ्चमपक्षे दैवादकरणे कन्यास्थार्कें कर्त्तव्यताश्रुतिरस्तीति भावः। व्याप्याभावसाधने व्यापकाभावस्य हेतुत्वादत्र श्रुत्यभावात् विधित्वाभावोऽप्यनुमीयते। तत्प्रकारं दर्शयति अभावविधित्वमित्यादीति। अभावविधित्वम् अभावे यो विधिस्तस्य भावः अभावविधित्वम्, अभावश्रुतिव्याप्तम् अभावे अकरणे अन्यत्र कर्त्तव्यताबोधिनी या श्रुतिः तद्व्याप्यम्। व्यापकनिवृत्तौ व्याप्यस्यापि निवृत्तिं दर्शयति व्यापकभूतेत्यादि। निवर्त्तमाना वचनाभावात् तत्राकरणे अन्यत्र करणबोधनान्निवर्त्तमाना सती अभावश्रुतिः अन्यत्र करणबोधकविधित्वमपि निवर्त्तयतीत्यर्थः। सिनीवालीम् अमावास्याम्। कालस्य मुख्यचान्द्रमासरूपकालस्य। द्वन्द्वत्वात् शुद्धाशुद्धभेदेन द्वित्वात्। शुक्लप्रतिपदि तुलासंक्रान्तौ तद्भवतीति तथाच स्वाव्यवहितपूर्व्वामावास्यायाः पूर्व्वामावास्यान्त्यक्षणप्राक् कन्यासंक्रान्तौ तदुत्तरामावास्यान्त्यक्षणमतिक्रम्य शुक्लप्रतिपदि च तुलासंक्रान्तौ आश्विनमलमासो भवति। तुलाविधानार्थं तुलास्थरवौ आश्विनकर्म्मविधानार्थमित्यर्थः। पूर्व्ववचनद्वयमूलश्रुत्या अमावास्यामतिक्रम्य इति यातुधानप्रियो मास इति च वचनद्वयरूपमूलश्रुत्यैकवाक्यत्वात्। अस्यापि सिनीवालीमिति वचनस्यापि।

तराभावेऽन्यतरविधिदर्शनात्। सोमाभावे पूतिके विधिरिव पूर्व्वपक्षे न च वैजात्यात्। सिंहगत एव पञ्चमो विहितः, तद-भावे च कन्येति वाच्यम्, कन्यागतसम्बन्धेन पुण्यतमश्रुत्यनुप-पत्तेः। न हि यो यदभावे स एव ततः श्रेयानिति युक्तम्। नाप्युभयं वाक्यभेदापत्तेः, विकल्पपाताच्च। न चोभयविशिष्टस्य युगपदभावात्। अथैकदेशद्वारेणानयोः संभवाद्विधानमिति तन्न, एकदेशद्वयस्यैव तदा विधानापत्तेः। तत्र चोक्तदोषः। पक्ष-पदस्य चैकदेशद्वयलक्षणापत्तेः। अथ पञ्चमपक्षमात्रविधानं तन्न, "कन्याङ्गच्छतु वा न वे"त्यानर्थक्यात्। अनादरार्थमिति चेन्न, अनादरार्थमिति कोऽर्थः? यदि कन्या नादत्तव्येति विधि-स्तदा पञ्चमविधिरनादरविधिश्चेति वाच्यं भिद्येत, कन्यान्वित-स्यैव प्रतिनियमेनार्थग्रहणापत्तेः, कन्यापञ्चममेलकस्य च पुण्य-तमश्रुतिविरोधात्। कन्यानादरविशिष्टपञ्चमविधानेन वाक्य-भेदादितरं दूषणं, तदवस्थमेवासिद्धवदनादरप्रतिपादनञ्च न सम्भ-वति, कार्य्यैकनियतत्वात्। शब्दप्रमाणभावस्य न चानुवादः, पूर्व्वसिद्धस्य वचनादरस्याभावात्। तस्मात् फलार्थिनां श्राद्धा-भ्यासार्थं पञ्चमवचनं "गच्छतु वा न वेति"। न च विधेयविशे-षणं, किन्तु स्तुत्यर्थम्। तत्र च कन्यानिमित्ताधिकारे सति तत्तत्फलार्थिनाञ्च तत्तत्तिथिषु श्राद्धाभ्यासे विहिते एकस्य पक्षस्य सिंहकन्याभ्यामपरस्य च कन्यातुलाभ्यां समापनीयत्वात्, कुत्र क्रियतामित्यपेक्षायां कन्यापञ्चमयोगप्रशस्ततमत्वेन कन्याधि-कारस्य तत्र प्रवृत्तौ फलार्थमप्यभ्यासः। तस्मिन्नपि सिंहांशे कार्य्य

एवेति विधिः । द्विखण्डतिथौ युग्मतिथिविधिवत्, अतएव "गच्छतु वा न वेत्युक्तम्" ।

तदेवोक्तं जाबालिना ।

"अगतेऽपि रवौ कन्यां श्राद्धं कुर्व्वीत यत्नतः ।
आषाढ्याः पञ्चमः पक्षः प्रशस्तः पितृकर्म्मसु ॥"

कन्यागते तावत् काम्यो नित्याधिकारश्च कार्य्यः । तदधिकार-प्रवृत्तौ च प्रमाणसिद्धायान्तस्मिन् पक्षे कन्यागतेऽपि फलार्थं श्राद्धमभ्यर्थित । धवलेन, "चान्ते वा यदि वा मध्य" इति वचनस्य चतुर्थं पदं, श्राद्धषोड़शकं प्रतीति पठितम् । तेनैकस्मिन् श्राद्धे कन्यैवादरणीयेति योग्लौकिनाप्युक्तम् । यः शरीरधनादे-रस्थिरतां कन्याप्रत्यविच्छया शङ्कते, पञ्चमं पक्षमादद्यात् सः । यत्तु नैवं, स कन्यागतमेव प्राधान्यादवतिष्ठतीत्यन्तेन ग्रन्थेन कन्यागत-सम्भवात् । पञ्चमे विधिरिति विपरीतोऽभावविधिरुक्तः । किञ्चेद-मत्र विचार्य्यताम् । अकरणे दोषश्रुतेरवश्यकर्त्तव्यत्वात्, जीवनं तावदधिकारिविशेषणं, तदपि नावशिष्टं नित्यमधिकारापत्तेः । अर्थात् कस्यचित् कालस्य तद्विशेषणमुररीकरणीयम् । तेन किं निरपेक्षमुभयं, कन्या च पञ्चमश्च विशेषणम् ? तेन नित्याधि-कारद्वयमेतत् । किंवा केवल एव पञ्चमः, कन्योपलक्षितः पञ्चमो वा ? न तावन्निरपेक्षमुभयमधिकारद्वयस्यानिष्टत्वादेव पञ्चम-पक्षे कृतेऽपि श्राद्धे कन्यायां पुनः अकरणप्रसङ्गात् । एतान्येव हि हिंसन्तीत्यस्यार्थो वर्णितः । अथैतद्वचनं पञ्चमेऽवश्यकर्त्तव्य-तार्थम् । तेन पञ्चम एव केवलो निमित्तमिति तन्न, मिथुने

भगवति सुप्ते कर्कटसिंहयोरन्यतराधिमासे सिंहे पञ्चमे श्राद्धक्रियाप्रसक्तिः, कन्याया अवश्यापेक्षणीयत्वात्। कन्यागतस्य तु शक्रपाताङ्कितस्य सप्तमत्वेन पञ्चमस्य व्यभिचारात् कन्यावचनानर्थक्याच्च, कन्यायामकरणे च दोषश्रुत्यनुपपत्तेः। अथ कन्यायाः पञ्चमस्य च दर्शनादुभयत्रोपसंहारान्मिलितमुभयं निमित्तं तत्र, तथापि सिंहे श्राद्धप्रसक्त्या युष्मदभिमतस्यासिद्धेः, विशिष्टस्य तदानीमभावात् कन्योपलक्षितपञ्चम इति चेन्न। सति विशेषणत्वे उपलक्षणत्वायोगात्। श्रावणभाद्राधिमासपाते चोपलक्षणाभावेऽपि शङ्खवेलान्यायेनोपलक्ष्यस्य प्रत्यभिज्ञायमानतया श्राद्धाधिकारस्य दुर्व्वारत्वापत्तेः। प्रतिसंवत्सरं चैकत्वात्। पञ्चमस्य व्यावृत्त्यभावादुपलक्षणवैफल्यात् कर्कटसिंहाधिमासवत्सरीयपञ्चमव्यावृत्त्यर्थमिति न वाच्यं, तद्वत्सरे कन्योपलक्षितपञ्चमस्यानिमित्तत्वस्यानुपजातत्वेन तन्निमित्तस्य श्राद्धस्याभावप्रसक्तेः उपलक्षणभावेऽपि चोपलक्ष्यस्य तथात्वानिवृत्त्यनुपपत्तेः। तस्मात् कन्याया विशेषणस्यावश्यम्भावान्मृष्यामहे। हविषा विशेषण इति न्यायात् निरपेक्षतया कन्यामात्रमेव जीवनस्य विशेषणम्। तावतैवाधिकाङ्क्षोपरमात्, न चैवं कृष्णपक्षोऽपि न विशेषणं स्यादिति वाच्यम्। पितृर्च्चनरूपत्वात् श्राद्धस्य जाग्रतस्यार्च्चनसम्भवात्। "कर्म्मचेष्टामहः कृष्णः शुक्लः स्वप्नाय शर्व्वरी"ति मनुना शुक्लपक्षे पितृनिद्राभिधानाद्विधेयभूतश्राद्धसामर्थ्यात् कृष्णपक्षस्यापि विशेषणत्वात् तदेवं कन्याया एव निमित्तत्वात्तस्याश्चैकत्वात्। नैमित्तिकमपि सकृदेव सिध्यति, प्रमाणसिद्धमेव

च कन्याधिकारप्रवृत्तिमुपजीव्य तत्तत्फलार्थिना तत्तत्तिथिषु श्राद्धस्याभ्यासो गुणफलाधिकारवद्विधीयते, तेन यस्मिन् कृष्णपक्षे काम्यनित्याधिकारस्तत्पक्षीयतिथिष्वभ्यासः फलार्थः। स च कन्यायामेव वा कन्याधिकारप्रवृत्तस्य वा सिंहांशेऽपि सिध्यति। तदर्थमुक्तं कन्यागतान्वितश्चेत् स्यादिति नायं कन्यान्वयोऽदृष्टार्थः येन रजनीमात्रयोगेऽपि ग्रहणं, किन्तु काम्यनित्याधिकार-प्रवृत्त्यर्थम्। "अतएवान्ते वा यदि वा मध्य" इत्येतदपि कन्या-श्राद्धार्हकालप्राप्त्यर्थं वचनम्। न पुनरन्तमध्यावेव विवक्षितौ, तद्विवक्षायामन्तमध्यशब्दौ अमावास्यान्ताष्टमीमध्यलक्षणपरौ। किंवा अमावास्याष्टमीपरौ एकादश्यादिषष्ठ्यादितिथिपञ्चकद्वय-परौ वा। तत्र प्रथमद्वितीयपक्षद्वयेऽष्टम्यमावास्ययोरेव संक्रान्तौ पक्षस्य पूज्यता स्यात्,तिथ्यन्तरे तदा भवतामपि नाभिमतलाभः, महाजनविरोधश्च। अथ तृतीयः तदा प्रतिपदादितिथिपञ्चके संक्रान्तौ श्राद्धं न स्यात्। अथ तत्पक्षकन्यासंक्रान्तिमात्रपरौ, न स्वार्थमात्रपरौ। नैतत् कन्यासम्बन्धस्यादृष्टार्थत्वे मध्यान्तशब्द-योरर्थाविवक्षायां हेत्वभावात्। शब्दमूलत्वाददृष्टसिद्धेः। तस्मा-द्वचनान्तरविहितश्राद्धार्हकन्याकालसम्बन्धात् काम्यनित्याधिकार-प्राप्त्यर्थं वचनं दृष्टार्थम्। तेन यत्र कन्यासम्बन्धिकाम्यनित्याधि-कारप्राप्तिः स पक्षः सकल एव गुणफलाधिकारवदनेन विधीयते। यत्र पुनरमावास्यायां रजन्यां कन्यागमनं भानोस्तत्र कन्यानित्या-धिकारस्याप्रवृत्तेः। तत्प्रत्युपजीवी गुणफलाधिकारः अनुवर्त्तते।

अतएवाह।

"पुण्यं कन्यागतन्तावत् पुण्यः पक्षस्तु पञ्चमः ।
कन्यागतं पञ्चमन्तु पुण्यात् पुण्यतमं स्मृतम् ॥"

अत्र कन्यागते तावत्पदं प्रयुञ्जानः, कन्यागतं निमित्तमिति, तावत् प्रसिद्धोऽर्थं इति दर्शयति। पञ्चमे तुशब्दप्रयोगात् पञ्चमः पुनर्यथोक्तगुणफलाधिकारन्यायेनाकन्यांशेऽपि पुण्यः। उभयमेलकस्तु पुण्यतमो गुणफलाधिकारवत् फलभूयस्त्वात् कन्यामात्र एव वा, उत्तराहस्तचित्रर्क्षे राजसूयाश्वमेधाभ्यामित्यादिवाक्यविहितस्य काम्यकर्म्मणः फलातिरेकात् नित्याधिकारेऽपि वा, पञ्चमयोगे पितृधर्म्माधिक्यात्ते तृप्तास्तर्पयन्त्येवमिति। तृप्तिगरीयस्त्वात्तल्लभ्यं फलमपि गरीयो भवति। अतस्तत्प्राप्तौ तन्नातिक्रमणीयं, तदलाभे कन्याक्रान्तपक्षो नातिक्रमणीयः। "धनं पुत्राः कुतस्तस्य पितृनिश्वासपीड़ना"दिति श्रुतेः। तुलापर्य्यन्ते त्वधिकरणे, विश्वेदेवाः पितरश्च पितृमातृकुलस्य निश्वस्य नैराश्यमानस्यातिदारुणं शापं दत्त्वा व्रजन्ति। अकरणे दोषश्रुतेः, तत्परीहारक्रियास्वरूपादेव सिध्यतीति। न नियोज्यविशेषणम्, किन्तु कन्यावच्छिन्नजीवनमेव। कन्यायामकृतश्राद्धस्य तु तुलावच्छिन्नम्। किञ्चासतां दूषणान्तराणि कन्यायामधिमासे तुलायां श्राद्धोत्कर्षकारकमेव वचनत्रयं पञ्चमपक्षानादरे प्रमाणं, चतुर्द्दश्यमावास्ययोरन्यतरतिथौ कन्यासंक्रान्तौ हि सम्भवति, तदा च पञ्चमपक्षस्य कन्यान्वितस्य शक्रपाताङ्कितस्य सिंहे प्राप्तत्वात् तस्यैव च श्राद्धकालत्वात् कन्यायामेव प्रथमं कन्यापञ्चमपक्षीयामावास्यायोगस्य पुण्यतमस्य लब्धत्वा-

दुत्कर्षवचनं न स्यात् । न च पञ्चमे दैवादकृतश्राद्धस्य कन्यायां प्रसक्तावुत्कर्षवचनमिति वाच्यम् । तथाऽश्रवणात् श्रुतैनैव चोत्पत्तौ पञ्चमेऽकृतश्राद्धस्येत्यध्याहार्य्यानुपपत्तेः । पञ्चमपक्षे चाकरणे कन्याविधिरिति प्रागेव निरस्तम् । यत एव पञ्चमस्य न मुख्यकालता, अतएव तदभावे न किञ्चिदपि श्रूयते । तथा कन्याभावे तुला, तस्मात् कन्यायामेव काम्यस्य नित्याधिकारस्य वा प्रवृत्तिमुपजीव्य पञ्चमपक्षे गुणफलाधिकारन्यायेन विधानम् । यदा च कृष्णचतुर्द्दश्यां कन्यासंक्रान्तिस्तदा तदनन्तरितामावास्यातिथिद्वैधात्मलिम्लुचतया न कन्यागतश्राद्धार्हा अमावस्यायाञ्च कन्यासंक्रान्तौ यद्यमावास्यायाः श्राद्धयोग्यकालः कन्यायान्तदासौ मलिम्लुचः । अथ सिंहे तदा न कन्यागतश्राद्धार्हः । अतस्तदुपजीविनो गुणफलाधिकारस्य सुतरामप्रवृत्तिः । अथ नित्यनैमित्तिके कुर्य्यादिति, मलिम्लुचे नित्यस्य कन्याधिकारस्य प्रवृत्तिः सम्भवतीति नैतत् । "गर्हितः पितृदेवाभ्यां सर्व्वकर्म्मसु तं त्यजेदिति" सर्व्वकर्म्मसु तस्य निषेधात् तदुपजीविनो नित्यनैमित्तिक इति प्रतिप्रसववचनस्य केवलनित्यनैमित्तिकगोचरतया व्यवस्थितः। काम्यव्यावृत्त्या विशेषणत्वेनासाधारणरूपतया केवलनित्यनैमित्तिकरूपस्यैव प्रथममवगतेः, न पुनरपरपक्षश्राद्धस्य नित्यकाम्योभयरूपत्वात् । अतएवासाधारणरूपस्यैव तत्र कीर्त्तनम् । गजच्छायां प्रेतश्राद्धमिति, गजच्छायामावास्यापराह्णकालः । अत्र यच्छ्राद्धं प्रेतश्राद्धमिति केवलनित्यनैमित्तिकदर्शनार्थमेवोक्तम् । अन्यथा नित्यनैमित्तिकपदाभ्यामेवानयोरुपात्तत्वाद्गजच्छायादिपदमनर्थ-

कम्भवेत्। किञ्च कन्यागतापरपक्षश्राद्धस्य राजसूयाश्वमेधा-भ्यामिति। "तस्य वासस्त्रिपिष्टप" इति, "क्रतुभिस्तुल्यानी"-त्यादिवचनैः काम्यत्वन्तावन्निर्विवादम्। तस्यैव तु कन्या-न्वित इत्यादिवचनैरकरणेऽनर्थप्राप्तिदर्शनात्तदनुष्ठानादनर्थपरीहारः क्रियत एवेति अकरणनिमित्तानर्थपरीहारसाधनस्य श्राद्धकर्म्मणः काम्यफलार्थं विधानमेकमेवास्तु, किं नित्याधिकारार्थं श्रुत्यन्तर-कल्पनेन काम्यनित्याधिकारद्वयवादिनापि श्राद्धं सकृदेव अतो-ऽकरणनिमित्तप्रत्यवायपरीहारं कुरुते? अपूर्व्वद्वारेण तु काम्यं साधयतीति स्वीकर्त्तव्यम्। अकरणस्यानर्थहेतुत्वेन श्रुतिः। "धनं पुत्त्राः कुतस्तस्य पितृनिश्वासपीड़ना'दिति दोषश्रुतिमूलत्वाद-वश्यकर्त्तव्यतायास्तेनाकरणस्यानर्थपरीहारार्थं फलार्थकामनामन्त-रेणापि श्राद्धस्यानुष्ठाननियमश्रुतिरिति। व्यर्था श्रुत्यन्तरकल्पना, प्रत्यक्षश्रुत्याधिकारश्रुतिद्वये तु नायं प्रकारः सम्भवी, स्वतन्त्रप्रवृत्त-त्वादुभयोरेतस्मिंश्च पक्षे पृथग्जीवनाधिकाराभावात् कन्यादीनां जीवनविशेषणत्वेऽपि विकल्पाः, प्राचीनास्तेऽकरणं प्रति विशेष-णत्वे योजनीयाः। अतः काम्यतया यथाप्रचारं वा काम्यनित्यो-भयरूपतया केवलनित्यनैमित्तिकगोचरप्रतिप्रसववचनाविषय-त्वात्। कन्यायां मलमासे सति श्राद्धस्याप्रसक्तत्वाद्विहितकाल-लाभेन च प्रसक्ताधिकारस्य "न चेद्दत्तं पितॄणान्तु महालय" इति वचनेन कादाचित्कत्ववाचि-चेच्छब्दप्रयोगेण कथञ्चिदकरणे तुला-विधानान्मलिम्लुचेऽपि नित्यमेवाकरणार्थास्य तुलायामपि कर्त्तव्य-तेति। तदवसरे कर्म्मलोपप्राप्तौ "यातुधानादि"वचनैस्तुलादि-

त्यस्य विधानं योग्लोकिनाप्युक्तम्। तेनातीत्य कन्यागतं तुलागते पितृक्रियेति वचनार्थः। तेन कन्यायामपरपक्षश्राद्धमिति मुख्यः कल्पः। तत्रासम्भवे तुलायामिति स्थितम्। कन्यापञ्चममेलकश्च पुण्यतमः उभयमेलक एव च, कन्यानिमित्तकाम्यनित्याधिकारि सति फलभूयार्थिनो गुणफलाधिकारवत् कृष्णपक्षे श्राद्धविधानात् सिंहांशेऽपि श्राद्धक्रिया। नित्यन्तु कन्यायामेवेति सिद्धम्।

तथा यमः।

"प्रौष्ठपद्यामतीतायां मघायुक्तां त्रयोदशीम्।
प्राप्य श्राद्धं हि कर्त्तव्यं मधुना पायसेन च॥

तथा।

"यजेद्यः पितृदैवत्ये हंसश्चैव करे स्थितः।
तिथिर्वैवस्वती नाम पितॄणान्दत्तमक्षयम्॥"

पितृदैवत्यं मघा, हंसः सूर्य्यः, करो हस्तः, वैवस्वती त्रयोदशी। नित्ये काम्ये चापरपक्षे धुरिलोचनसंज्ञका एव विश्वेदेवाः।

तथाच भागुरिणा पुराणवचनं लिखितम्।

"पार्व्वणेन विधानेन कुर्य्यादापरपक्षिकम्।
विश्वेदेवाः परश्चात्र कीर्त्तितौ धुरिलोचनौ॥
निर्णीतेऽपरपक्षे कृतिना जीमूतवाहनेनास्मिन्।
श्राद्धे श्रद्धावद्भिर्विद्वद्भिः कार्य्यमवधानम्॥"

इति पारिभद्रोपाध्याय-श्रीजीमूतवाहनकृतौ
धर्म्मरत्नेऽपरपक्षः समाप्तः।

शस्त्रहतानाञ्चतुर्द्दश्यां श्राद्धं कर्त्तव्यम् ।

वृद्धमनो: ।

“सर्पैर्हता अरण्यैर्वा कुम्भीरैश्च गजैर्वृषैः ।
उत्पातेन च वज्रैश्च श्राद्धे तेषां चतुर्द्दशी ॥”

भगवतीपुराणस्य ।

“पश्चिमत्स्यमृगैर्ये तु शृङ्गिदंष्ट्रिनरैर्हताः ।
पतनानशनप्रायैर्वज्राग्निविषबन्धनैः ॥
मृता जलप्रवेशेन ते वै शस्त्रहताः स्मृताः ॥”

एते पारिभाषिकाः शस्त्रहताः ।

“एकादशाहे प्रेतस्य यस्य चोत्सृज्यते वृषः ।
प्रेतलोकं परित्यज्य स्वर्गलोकं स गच्छति ॥
आद्यश्राद्धे त्रिपक्षे वा षष्ठे मासि च वत्सरे ।
वृषोत्सर्गं प्रकुर्व्वीत परस्तादुक्तकालिकम् ॥
आद्यश्राद्धे त्रिपक्षे वा षण्मासे चाब्दिके तथा ।
वृषोत्सर्गस्तु कर्त्तव्यो यावन्न स्यात्सपिण्डता ॥
सपिण्डीकरणादूर्द्ध्वं कालोऽन्यः शास्त्रचोदितः ।
कार्त्तिक्यामथ फाल्गुन्यामाह कात्यायनो मुनिः ॥
आषाढ्यामथ कार्त्तिक्यां जातुकर्ण उवाच ह ।
रेवत्यामाश्विने मासि ग्रहणे चन्द्रसूर्य्ययोः ॥
द्वयोरयनयोश्चैव मुनिः शाट्यायनोऽब्रवीत् ।
पूर्व्वोक्तेष्वथ कालेषु विषुवत्यपि शौनकः ॥

वैशाखे कार्त्तिके चापि वृषभं यः समुत्सृजेत् ।
प्रेतत्वान्मोचितस्तेन पिता पुत्त्रेण धीमता ॥
चतुर्णामपि वर्णानां वृषलक्षणमुच्यते ।
विप्रस्य नीलकपिलौ क्षत्त्रस्य नीलपुण्ड्रकौ ॥
वैश्यस्य चामरश्वेतौ शूद्रस्य श्वेतपुण्ड्रकौ ।
कृष्णो वा लोहितो वापि श्वेतो वा कपिलोऽथ वा ॥"

आह याज्ञवल्क्यः ।

"देशकालउपायेन द्रव्यं श्रद्धासमन्वितम् ।
पात्रे प्रदीयते यत्तत् सकलं धर्म्मलक्षणम् ॥"

अथ मत्स्यपुराणे दानकालाः ।

"अयने विषुवे पुण्ये व्यतीपातदिनक्षये ।
युगादिषूपरागेषु तथा मन्वन्तरादिषु ॥
संक्रान्तिवैधृतिदिने चतुर्द्दश्यष्टमीषु च ।
सितपक्षदशी सर्व्वा द्वादशीष्वष्टकासु च ॥
यज्ञोत्सवविवाहेषु दुःस्वप्नाद्भुतदर्शने ।
द्रव्यब्राह्मणलाभे वा श्रद्धा वा यत्र जायते ॥"

अथोच्चावचेन पुण्यकालः कथ्यते ।

तत्र पुराणम् ।

"शनैश्चरस्य वारेण वारेणाङ्गारकस्य च ।
कृष्णाष्टमीचतुर्द्दश्यौ पुण्यात्पुण्यतमे स्मृते ॥

सोमवारे त्वमावास्या आदित्ये या च सप्तमी ।
चतुर्थ्यङ्गारवारेण अष्टमी च वृहस्पती ॥
आसु यत्क्रियते पापमथवा पुण्यसञ्चयः ।
षष्टिवर्षसहस्राणि प्रतिजन्म तदक्षयम् ॥
पुष्ये च जन्मनक्षत्रे व्यतीपातेऽथ वैधृती ।
अमावास्यां नदीस्नानं हरते जन्मदुष्कृतम् ॥"

अथ भगवतीपुराणम् ।

"शुक्लपक्षे द्वितीयायां चतुर्थ्याञ्चैव भारत ।
पञ्चम्यां कृष्णपक्षस्य स्नातः किमनुशोचति ॥
त्र्यहस्पृग्दिवसश्चैव महापुण्यतमः स्मृतः ।
तिथित्रयस्य संस्पर्शात् तत्र दत्तमनन्तकम् ॥
यस्मिन्निरंशकः सूर्य्यस्तदहःस्नानमाचरेत् ।
स्नानञ्चैवाक्षयं प्रोक्तमंशकं प्राप्य मध्यमम् ॥"

तथोमासंवादे ।

"पौर्णमास्याममावास्यामष्टमीष्वष्टकासु च ।
चतुर्द्दश्यां कृतं कृत्स्नमनन्तं शिवसन्निधौ ॥
द्वे चाष्टम्यौ तु मासस्य चतुर्द्दश्यौ तथैव च ।
अमावासीपौर्णमास्यौ सप्तमीद्वादशीद्वयम् ॥
संवत्सरमभुञ्जानः सततं विजितेन्द्रियः ।
मुच्यते सर्व्वपापेभ्यः स्वर्गलोके महीयते ॥
ब्रह्मचर्य्यफलं यच्च यत्फलं पर्व्वयाजिनाम् ।
ऋतुगामिफलं यच्च तदवाप्नोत्यसंशयः ॥"

अथ यमः ।

"कार्त्तिकीं पुष्करे स्नातः सर्व्वपापैः प्रमुच्यते ।
माघीं स्नातः प्रयागे तु मुच्यते सर्व्वकिल्बिषैः ॥"

पौर्णमासीमित्यर्थः ।

तथा । "गयाशीर्षवटे स्नातः माघकृष्णाष्टमीन्तथा ।
नर्म्मदाम्भसि च स्नातः पौषकृष्णाष्टमीं शुभाम् ॥
शालग्रामे तथा चैत्रीं शरभे च चतुर्द्दशीम् ।
शुक्लदशम्यां स्नात्वा तु पुण्डरीके तथैव च ॥
सन्निहित्याममावास्यां प्रभासे वा तथा पुनः ।
तैजसे तु नरः स्नात्वा मुच्यते सर्व्वकिल्बिषैः ।
यमुनायां तथा स्नात्वा माघे कृष्णचतुर्द्दशीम् ॥"

"मुच्यते सर्व्वकिल्बिषै"रित्यनुयुज्यते ।

"पौषमासस्य या शुक्ला विशेषेण त्रयोदशी ।
तस्यां स्नात्वा वितस्तायां मुच्यते सर्व्वकिल्बिषैः ॥
चन्द्रभागाम्भसि स्नातो माघपौषत्रयोदशीम् ।
अष्टमीं रेवतीयोगे तथा वैगवताम्भसि ॥"

वेगवती नद्यादिरम्भो वैगवतं तस्मिन्नम्भसीत्यर्थः ।

भारतस्य ।

"आषाढ्यां सरयूतोये श्रावण्यां सततन्तथा ।
श्रवणर्क्षमनुप्राप्य यत्र क्वचन सङ्गमे ॥
सर्व्वाञ्चतुर्द्दशीं पुण्ये देविकायान्तथाम्भसि ।
महागङ्गामुपस्पृश्य कृत्तिकाङ्गारके तथा ॥

त्रयोदश्यामश्वयुजि विपाशायान्तथैव च ।
अभ्यर्च्च धर्म्मराजानं भरणीषु तथा सदा ॥
चतुर्द्दशीभरणीयोगे शनैश्वरदिने यदा ।
तदाभ्यर्च्च यमं देवं मुच्यते सर्व्वकिल्विषैः ॥
शुक्ले वा यदि वा कृष्णे चतुर्थी च चतुर्द्दशी ।
भौमवारेण पुण्यासौ सोमवारे कुहुर्यदा ॥"

अथ विष्णुः ।

"मासः कार्त्तिकोऽस्त्यग्निदैवत्योऽग्निश्च सर्व्वदेवानां मुखं, तस्मात् कार्त्तिकं मासं वहिःस्नायी गायत्रीजपे निरतः सकृदेव हविष्याशी संवत्सरकृतात्पापात् पूतो भवति ।"

भारतस्य ।

"कार्त्तिकं सकलं मासं नित्यस्नायी जितेन्द्रियः ।
जपन् हविष्यभुग्दान्तः सर्व्वपापैः प्रमुच्यते ॥"

तथा लिखन्ति ।

"यथाश्वमेधो यज्ञानां मासानां कार्त्तिकस्तथा ।
तस्मात्तत्र प्रयत्नेन नियतो धर्म्ममाचरेत् ॥
आमिषं मैथुनञ्चैव कार्त्तिके मासि यस्त्यजेत् ।
सर्व्वकालकृतं पापं दुष्कृतञ्चापकर्षति ।
वर्षासु कार्त्तिकः पुण्यः कार्त्तिके भीष्मपञ्चकम् ॥"

अथ भविष्ये ।

"यद्भीष्मपञ्चकमिति प्रथितं पृथिव्या-
मेकादशीप्रभृति पञ्चदशीनिबद्धम् ।

मुन्यन्नभोजनपरस्य* नरस्य तस्मिन्
दृष्टं फलं दिशति पाण्डव शार्ङ्गधन्वा ॥"

अथ गद्यव्यासः।

"कार्त्तिके पुष्येण† मासपुण्यानि‡ घृतेनाश्नीयात्।"

अथ भविष्यपुराणे।

"यः कुर्य्यात्कार्त्तिके मासि शोभनां दीपमालिकाम्।
सप्तम्यामथ षष्ठ्यां वा अमावास्यामथापि वा ॥
भास्करातपसङ्काशस्तेजसा भासयन्दिशः।
दिव्याभरणसम्पन्नं कुलं प्राप्नोति सर्व्वतः ॥
यावत्प्रदीपसंख्यानं घृतेनापूर्य्य वेदितम्।
तावद्वर्षसहस्राणि सूर्य्यलोके महीयते ॥
ऊर्ज्जे मासि प्रदीपञ्च ये नरा विष्णुसन्निधौ।
आकाशे दापयन्त्येव तेऽपि चाक्षयमाप्नुयुः ॥
उच्चैः प्रदीपमाकाशे यो दद्यात् कार्त्तिके नरः।
सर्व्वं लोकं§ समुद्धृत्य विष्णुलोकमवाप्नुयात् ॥
यस्तु केशवमुद्दिश्य दीपन्दद्याच्च कार्त्तिके।
आकाशस्थं जलस्थञ्च शृणु तस्यापि यत्फलम् ॥

---

* अन्योन्यभोजनपरस्य इति क्वचिदादर्शे पाठः।

† पुष्पेण इति क्वचिदादर्शे पाठः।

‡ मासपूर्णानीति क्वचिदादर्शे पाठः।

§ सर्व्वकुलमिति ग्रन्थान्तरे पठितम्।

धनधान्यसमृद्धिस्तु पुत्त्रवानीश्वरो गृही ।
लोचने च शुभे तस्य विद्वानपि हि जायते ॥"

अथ दानमन्त्रः ।

दामोदराय नभसि तुलायां लोलया सह ।
प्रदीपन्ते प्रयच्छामि नमोऽनन्ताय वेधसे ॥

अथापरम् ।

"विप्रवेश्मनि या नारी कार्त्तिके मासि दीपकम् ।
अग्निष्टोमफलन्तस्याः प्रवदन्ति मनीषिणः ॥"

दद्यादित्यर्थः ।

"चतुष्पथेषु रथ्यासु ब्राह्मणावसथेषु च ।
वृक्षमूलेषु गोष्ठेषु कान्तारगहनेषु च ।
दीपदानाद्धि सर्व्वत्र महाफलमुपाश्नुते ॥"

अथ लिखन्ति ।

"कार्त्तिके मासि यो दीपं दद्यादुद्दिश्य देवताम् ।
पितरं वा दिने तस्य सदा भासत् फलं लभेत् ॥
घृतेन दीपं प्रज्वाल्य तिलतैलेन वा पुनः ।
दीर्घायुर्व्वपुषा युक्तः चक्षुषा च न हीयते ॥
दीपदानपरो नित्यं ज्ञानदीपेन दीप्यते ।
स्पष्टबुद्धीन्द्रियश्चापि न कदाचित् प्रमुच्यते ॥
दीपन्ददाति यो नित्यं देवतायतनेषु च ।
चतुष्पथेषु रथ्यासु रूपवान् सुभगो भवेत् ॥"

तथा श्रीविष्णुः ।

"आश्विनं सकलं मासं ब्राह्मणेभ्यः प्रत्यहं घृतं प्रदायाश्विनौ प्रीणयित्वा रूपवान् भवति। तस्मिन्नेव प्रत्यहं गोरसैर्ब्राह्मणान् भोजयित्वा आरोग्यभाग्भवति। प्रतिमासे रेवतीयुते चन्द्रमसि मधु घृतं परमान्नं ब्राह्मणान् भोजयित्वा रेवतीं प्रीणयित्वा रूपभाग्भवति। मासि मास्यग्निं हुत्वा प्रत्यहं तैलस्थं वा सघृतं कुल्माषं ब्राह्मणान् भोजयित्वा दीप्ताग्निर्भवति।"

कुल्माषो माषपिष्टकप्रकारः।

"यदीच्छेद्विपुलान् भोगांश्चन्द्रसूर्य्यग्रहोपमान्।
प्रातःस्नायी भवेन्नित्यं द्वौ मासौ माघफाल्गुनौ॥"

"कार्त्तिकं सकलं मासं प्रातःस्नायी सदा भवे"दिति वा पाठः।

"प्रातःस्नायी च सततं मासौ द्वौ माघफाल्गुनौ।
देवान् पितॄन् समभ्यर्च्य सर्व्वपापैः प्रमुच्यते॥"

अथ पुराणे।

"तुलामकरमेषेषु प्रातःस्नायी सदा भवेत्।
हविष्यं ब्रह्मचर्य्यञ्च महापातकनाशनम्॥"

सर्व्वत्र प्रातःस्नानं प्राचीसन्ध्योपक्रमसमये किञ्चिदरुणप्रकाशे कार्य्यम्।

तदाह विष्णुः।

"न राहुदर्शनवर्ज्जं न वा रात्रौ न सन्ध्यायां प्रातःस्नाय्यरुणकिरणग्रस्तां प्राचीमवलोक्य स्नायात्।"

न रात्रौ न सन्ध्यायामिति निषिध्यारुणकरग्रस्तामिति विदधान

उभयोः सन्धिं सन्ध्याप्रवेशकालमेव विदधाति। यमुषःकाल-मिति ब्रुवते। अतएव,—"उषस्युषसि यत्स्नानं प्राजापत्येन तत्सम"मित्याहुः।

यथा।

"माघे मासि रटन्त्यापः किञ्चिदभ्युदिते रवौ।
ब्रह्मघ्नमपि चाण्डालं कं पतन्तं पुनीमहे॥"

इदमेव तूदये। कं जनम्।

"माघस्नानं सदा पुण्यं सर्व्वपापप्रणाशनम्।
ऋषयस्तेन धर्म्मेण प्राप्ता ब्रह्मसमाश्रयम्॥"

स्नानञ्च परकीयनिपानेषु न कार्य्यम्।

यथा मनुः।

"परकीयनिपानेषु स्नायान्नैव कदाचन।
निपानकर्त्तुः स्नात्वा हि दुष्कृतांशेन लिप्यते॥"

अत्र परकीयत्वमप्रतिष्ठितत्वं न बोद्धव्यम्, किन्तु परकृतत्वन्तच्च प्रतिष्ठितेऽपि साधारणम्। न हि परकीयत्वं सम्बन्धादेव परं मदीयास्ते पितृव्याः, अस्मदीयो नृपतिरित्यादिष्वपि छप्रत्ययस्य दर्शनात्। तथा विनिगमनाकारणं किमत्रेति चेत्, निपान-कर्त्तुरिति शेषश्रुतेः।

अतएव पैठीनसिः।

"परकृतनिपानकूपांश्च वर्ज्जयेदंशभाक् तत्र सेतोः त्रीन् पिण्डानुद्धृत्य स्नायात्।"

सेतोः कर्त्तुरित्यर्थः।

तथा बौधायनः ।

"स्रवन्तीष्वनिरुद्धासु त्रयो वर्णा द्विजातयः ।
प्रातरुत्थाय कुर्व्वीरन् देवर्षिपितृतर्पणम् ॥
निरुद्धासु न कुर्व्वीरन्नंशभाक् तत्र सेतुकृत् ।
तस्मात् परकृतान् सेतून् कूपांश्च परिवर्ज्जयेत् ॥"

इत्यन्यथाप्युदाहरन्ति ।

"उद्धृत्य चापि त्रीन् पिण्डान् कुर्य्यादापत्सु नो सदा ।
निरुद्धासु च मृत्पिण्डान् कूपादम्बुघटांस्तथा ॥"

तथा विष्णुः ।

"परनिपानेषु न स्नानमाचरेदाचरेद्वा पञ्च पिण्डानुद्धृत्या-
पदि ।"

न केवलं स्नानार्थं पिण्डोद्धरणं किन्त्वष्टकर्म्ममात्रार्थम् ।

आहतुः शङ्खलिखितौ ।

नेष्टकचिते* पितॄंस्तर्पयेद्वापीतड़ागोदपानेषु सप्त पञ्च
त्रीन् वा पिण्डानुद्धृत्य देवपितॄंस्तर्पयेत् ।

यथासंख्यं सप्ताद्युद्धरणम् ।

यतएव परकर्त्तृकनिपानमात्रस्य निषेधः अतएव याज्ञवल्क्यः ।

"पञ्च पिण्डाननुद्धृत्य न स्नायात्परवारिषु ।
स्नायान्नदीदेवखातगर्त्तप्रस्रवणेषु च ॥"

मनुरपि परखातनिपानं निषिध्याह ।

---

* इष्टकारचिते इति आर्षसम्मतः पाठः ।

"नदीषु देवखातेषु तड़ागेषु सरःसु च ।
स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च ॥"

द्वावपि प्रतिष्ठितनिपानं स्नानार्थं नोक्तवन्तौ ।

तथा ।

"अभावे देवखातानां सरसां सरितान्तथा ।
उद्धृत्य चतुरः पिण्डान् पारक्ये स्नानमाचरेत् ॥"

अप्रतिष्ठितार्थत्वे पारक्यपदस्य प्रतिष्ठितस्याभाव इत्यपि वक्तव्यं स्यात्। तस्मात् पारक्यमप्रतिष्ठितमिति व्याख्यानमप्रतिष्ठितस्यैव ।

अथ श्रीविष्णुः ।

"स्नायात् प्रस्रवणदेवखातसरोवरेषु उद्धृताद्भूमिष्ठमुदकं पुण्यं प्रस्रवणं तस्मान्नादेयम्। तस्मादपि साधु परिगृहीतं सर्व्वत एव गाङ्गमिति ।"

देवखातमाह विष्णुपुराणे ।

"ऋषिभिर्देवताभिश्च पुराणैर्नृपसत्तमैः ।
कृतेषु कूपखातेषु स्नायात्तेषु विशङ्कितः ॥"

अथ मार्कण्डेयः ।

"अवमानेषु तोयेषु सरसीषु नदीषु च ।
पुण्यार्थमाचरेत् स्नानं तेन काम्यफलं लभेत् ॥"

आहात्रिः ।

"अहोरात्रस्य यः सन्धिः सूर्य्यनक्षत्रवर्ज्जितः ।
सा हि सन्ध्या समाख्याता तस्यां स्नानं समाचरेत् ॥"

अथ मरीचिः ।

"उपासीत प्रत्यहं सन्ध्यां यथाकालं यथाविधि ।
सप्ताहमनुपासंस्तां स्वस्थः सन् पतितो भवेत् ॥"

आह दक्षः ।

"स्नानं मध्यन्दिने कुर्य्यात् मृदोऽन्ते त्वनिरामयः ।
न तङ्कालङ्कृतो रोगी नाम्नातिऽम्भसि नाकुले ॥"

तथा योगियाज्ञवल्क्यः ।

"त्रिरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगाश्च पक्षस्य मासस्य सरितांपतिः ॥"

तथा ।

"उभे सन्ध्ये तु स्नातव्यं ब्राह्मणैश्च गृहाश्रितैः ।
तिसृष्वपि च सन्ध्यासु स्नातव्यं तु तपस्विना ॥"

"उभे सन्ध्ये तु कर्त्तव्ये" इति पाठोऽनाकरः ।

स्नानाशक्तावाह जाबालिः ।

"अशिरस्कं भवेत् स्नानं स्नानाशक्तौ तु कर्म्मिणाम् ।
आर्द्रेण वाससा वापि मार्ज्जनं दैहिकं विदुः ॥"

आह योगियाज्ञवल्क्यः ।

"मान्त्रं भौमं तथाग्नेयं वायव्यं दिव्यमेव च ।
वारुणं मानसञ्चैव सप्तस्नायी प्रकीर्त्तितः ॥
आपो हि ष्ठेति वै मान्त्रं मृदालम्भस्तु पार्थिवम् ।
आग्नेयं भस्मना स्नानं वायव्यङ्गोरजः स्मृतम् ॥
यत्तु सातपवर्षेण स्नानं तद्दिव्यमुच्यते ।

वारुणञ्चावगाह्यन्तु मानसं विष्णुचिन्तनम् ॥
शस्तं स्नानं यथोद्दिष्टं मन्त्रस्नानक्रमेण तु ।
कालदोषादसामर्थ्यात् सर्व्वं तुल्यफलं स्मृतम् ॥"

केचित्तु मानसं भौमं हित्वा पञ्चविधमुक्तम् ।

यथा पराशरः ।

"आग्नेयं वारुणञ्चैव तृतीयं ब्राह्ममेव च ।
चतुर्थञ्चैव वायव्यं पञ्चमं दिव्यमुच्यते ॥"

अप्रायत्ये तु वारुणमेव कार्य्यम् ।

तदाह योगियाज्ञवल्क्यः ।

"अप्रायत्ये समुत्पन्ने स्नानमेव समाचरेत् ।
पूर्व्वोद्दिष्टैस्तथा मन्त्रैरन्यथा मार्ज्जनं स्मृतम् ॥"

स्नानं यथा लोकसिद्धं वारुणमित्यर्थः ।

तथा श्रीविष्णुरहस्ये ।

"आषाढ्यादिचतुर्मासं प्रातःस्नायी भवेन्नरः ।
विप्राय भोजनं दत्त्वा कार्त्तिक्यां गोप्रदो भवेत् ।
स वैष्णवपदं याति विष्णुव्रतमिदं स्मृतम् ॥
आषाढ़स्य सिते पक्षे एकादश्यामुपोषितः ।
चातुर्मास्यव्रतानान्तु कुर्व्वीत परिकल्पनम् ॥
एकादश्यान्तु गृह्णीयात् संक्रान्त्यां कर्कटस्य च ।
आषाढ्यामानतो भक्त्या चातुर्मास्यां व्रतक्रियाम् ॥"

चातुर्मासिकव्रतग्रहणे कालचतुष्टयम् ।

आषाढ़ी पौर्णमासी शुक्ला एकादशी द्वादशी कर्कटसंक्रान्तिश्चेति ।

अथ व्रतग्रहणमन्त्रः ।

"इदं व्रतं मया देव गृहीतं पुरतस्तव ।
निर्विघ्नां सिद्धिमाप्नोति प्रसन्ने त्वयि केशवे ॥
गृहीतेऽस्मिन् व्रते देव यद्यपूर्णे म्रियाम्यहम्* ।
तन्मे भवतु सम्पूर्णं तत्प्रसादाज्जनार्द्दन ॥"

वासुदेवमभ्यर्च्य तदग्रे चातुर्मासिकं व्रतं मधुमैथुनतैलमांसादि-वर्ज्जनरूपं ग्राह्यम् ।

अथ निषिद्धान्युच्यन्ते ।

तत्र मनुः ।

"मांसाशने पञ्चदशी तैलाभ्यङ्गे चतुर्द्दशी ।
अष्टमी ग्राम्यधर्म्मे च कुलन्तमपि पातयेत् ॥"

आह बौधायनः ।

"पर्व्वसु नाधीयीत न मांसमश्नीयान्न स्त्रियमुपेयात् ।
पर्व्वसु हि रक्षःपिशाचा अभिचारवन्तो भवन्तीति ॥"

आह वसिष्ठः ।

"न पर्व्वसु तैलं क्षुरं मांसं स्त्रियमुपेयान्नामावास्यायां हरितानि छिन्द्यात् ।"

अथ स्मृतिसमुच्चये ।

---

* अहं म्रिये इति स्मार्त्तादिसम्मतः पाठः ।

"अमावास्यां न तु छिन्द्यात् कुशांश्च समिधस्तथा ।
सवित्रेऽवस्थिते सोमे हिंसायां ब्रह्महा भवेत् ॥
कुशाः शाकाश्च पुष्पञ्च काष्ठानि च तृणानि च ।
अमावास्याञ्च चिनुयान्न दुष्यति कदाचन ॥"

आह हारीतः ।

"तैलं मांसं भगं चौरं पर्व्वकाले प्रवर्ज्जयेत् ।
एतेष्वलक्ष्मीर्वसति तैले मांसे भगे क्षुरे ॥"

अत्र यमः ।

"श्लेष्मातके तथालक्ष्मीर्नित्यमेव कृतालया ।
भगे मांसे क्षुरे तैले नित्यं पर्व्वसु तिष्ठति ॥
आसप्तमकुलं हन्ति शिरोऽभ्यङ्गे चतुर्द्दशी ।
मांसाशने पञ्चदशी ग्राम्यधर्म्मे तथाष्टमी ॥
षष्ठ्यष्टमी अमावास्या उभौ पक्षौ* चतुर्द्दशी ।
अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे ॥"

अत्र शातातपः ।

"न तु काष्ठममावास्यां मैथुनञ्च चतुर्द्दशीम् ।
हन्ति सप्तकुलन्तस्य तैलग्रहणमष्टमीम् ॥
षष्ठ्यष्टमी पञ्चदशी उभौ पक्षौ चतुर्द्दशी ।
अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे ॥
षष्ठ्यान्तैलमनायुष्यमष्टम्यां पिशितन्तथा ।

* उभे पक्षे इति स्मार्त्तादिसम्मतः पाठः ।

क्षुरकर्म्म चतुर्द्दश्यान्तथा पर्व्वणि मैथुनम् ॥"

आह व्यासः ।

"क्षौरे शनैश्वरादित्यभौमाह्नो रात्रिमेव च ।
तिथिं प्रतिपदं रिक्तां विष्टिञ्च परिवर्ज्जयेत् ॥

अमावास्यापरभूता प्रतिपत् प्रत्येतव्या ।

तथा ज्योतिःशास्त्रे ।

"नाभ्यङ्गं भुक्तरणकामसमुद्यतानां
न स्नानमत्र गमनोत्सुकभूषितानाम् ।
सन्ध्यानिशार्ककुजसौरिदिने नराणां
क्षौरं हितन्न नवकेऽह्नि न चापि विद्याम् ॥"

नवकमहः शुक्लप्रतिपत् ।

आह व्यासः ।

"षष्ठ्यष्टमी अमावास्या उभे पक्षे चतुर्द्दशी ।
अत्र सन्निहितं पापं तैले मांसे भगे क्षुरे ॥
षष्ठ्यान्तैलमनायुष्यमष्टम्यां पिशितन्तथा ।
कामभोगश्चतुर्द्दश्याममावास्यां क्षुरक्रिया ॥"

अथ स्मृतिसमुच्चये ।

"सायंसन्ध्यां परान्नञ्च पुनर्भोजनमैथुनम् ।
तैलं मांसं शिलापिष्टममावास्यां विवर्ज्जयेत् ॥

तथा ।

"सायंसन्ध्यां परान्नञ्च शिलापिष्टन्तथैव च ।
अमावास्यां न सेवेत रात्रौ भोजनमैथुने ॥

सूर्य्यर्क्षगते सोमे परान्नं यो हि भक्षयेत्।
तस्य मासकृतं पुण्यं यस्यान्नं तस्य तद्भवेत् ॥
दन्तकाष्ठे त्वमावास्या मैथुने च चतुर्द्दशी।
हन्ति सप्तकुलं पुंसां तैलस्य ग्रहणेऽष्टमी ॥
अमावास्यां न गच्छेत्तु प्राप्तकालामपि स्त्रियम्।
तैलञ्च न स्पृशेदामं वृक्षादींश्छेदयेन्न तु ॥
प्रतिपत्सु नवम्याञ्च तथा पञ्चसु पर्व्वसु।
अभ्यङ्गस्पर्शपानाद्यैस्तैलन्तु न स्पृशेन्नरः ॥
पक्षादौ च रवौ षष्ठ्यां रिक्तायाञ्च तथा तिथौ।
तैलेनात्यज्यमानस्तु चतुर्भिरपि हीयते ॥
उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः।
तावच्छ्रीस्तिष्ठति प्रीता यावत्तैलं न संस्पृशेत् ॥
नखे कृत्ते कृते श्मश्रुशिरोरुहप्रकल्पने।
न च स्नायान्नरः शेषे तैलस्नानं समाचरेत् ॥
कषायेण शिरः स्नात्वा अभ्यक्तेन च केनचित्।
तावत्स्यादशुचिर्विप्रो यावन्निर्णीयते न तत् ॥
न चाभीक्ष्णं शिरःस्नानं कार्य्यं निष्कारणं बुधैः।
शिरःस्नातस्य तैलेन नाङ्गं किञ्चिदपि स्पृशेत् ॥"

अथ वृद्धवसिष्ठः।

"दिवा कपित्थच्छायाने रात्रौ च दधिशक्तुषु।
धात्रीफले च सप्तम्यामलक्ष्मीर्वसते सदा ॥"

अत्र देवलः।

"अष्टम्याञ्च चतुर्द्दश्यां पञ्चदश्यां विशारदः ।
तैलं मांसं व्यवायञ्च क्षुरञ्च परिवर्ज्जयेत् ॥"

देवलेन कालत्रयमुपादाय निषेध्यचतुष्टयोपादानान्न यथासंख्यमन्वयः ।

तथा भविष्ये ।

"अमावास्याष्टमी चैव पूर्णमासी चतुर्द्दशी ।
पर्व्वाख्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥
तैलस्त्रीमांससेवी च पर्व्वस्वेतेषु मानवः ।
विण्मूत्रप्राशनं नाम नरकं प्रतिपद्यते ॥"

अत्रापि पञ्चपर्व्वाणि निषिध्यानि तैलादीनि च त्रीणि न यथासङ्ख्यसम्भवः । यत्रापि समसङ्ख्ययोरुपादानम्, तत्रापि मुनिभिरेव नियतक्रमेणोपन्यासाद्दूरनिरस्तः ।

अथ भविष्ये ।

"सप्तम्यान्न स्पृशेत्तैलं नीलं वस्त्रं न धारयेत् ।
न चामलकैः स्नायान्न कुर्य्यात् कलहं नरैः ॥"

अत्र सप्तम्यामिति केचिच्चाष्टम्यामिति पठन्ति । नील्या रक्तं नीलं वस्त्रम् ।

"निम्बस्य भक्षणन्तैलं तिलैस्तर्पणमञ्जनम् ।
सप्तम्यान्नैव कुर्व्वीत ताम्रपात्रेषु भोजनम् ॥
शिरः कपालमन्त्राणि नखचर्म्मतिलांस्तथा ।
एतानि क्रमशो नित्यमष्टम्यादिषु वर्ज्जयेत् ॥"

क्रमशो यथासङ्ख्यम् । अत्र शिरो नारिकेलमष्टम्यां, कपाल-

मलाबुं नवम्याम्, अन्त्रं कलम्बिकां दशम्यां, नखं शिम्बिका-मेकादश्यां, चर्म्मेति पूतिकां द्वादश्यां, तिलं वार्त्ताकुं त्रयोदश्यां न भक्षयेत् ।

अथ वकपञ्चकम् ।

"एकादश्यां समारभ्य राकां केशवबोधने ।
वकोऽपि तत्र नाश्नीयान्मत्स्यं मांसञ्च किं नरः ॥"

आह बौधायनः ।

"अमावास्यान्नवम्यान्तु सप्तम्याञ्च विशेषतः ।
धात्रीफलानि यत्नेन दूरतः परिवर्ज्जयेत् ॥
वीर्य्यहानिः प्रजाहानिर्यशोहानिस्तथैव च ।
हन्त्येतत्त्रितयं यस्मात्तस्माद्धात्रीं विवर्ज्जयेत् ॥"

धात्रीफलमामलकीम् ।

अथ षट्त्रिंशन्मतम् ।

"नवम्यां दर्शसप्तम्यां संक्रान्तौ रविवासरे ।
चन्द्रसूर्य्योपरागे च स्नानमामलकैस्त्यजेत् ॥
सप्तम्यामप्यमावास्यां संक्रान्तिग्रहतिस्तृषु ।
धनपुत्त्रकलत्रार्थी शिलापिष्टञ्च न स्पृशेत् ॥"

अथ गार्ग्यः ।

"मोहात्प्रतिपदं षष्ठीं दग्धं रिक्तां तिथिं तथा ।
तैलेनाभ्यञ्जयेत् यस्तु चतुर्भिः स हि हीयते ॥"

गार्ग्येणैव पूर्व्वं पञ्चम्यादिषु धनापत्यबलायुषां वृद्धेरुक्तत्वाद्धानि-रपि तेषामेव प्रतीयते ।

आह गार्ग्यः।

"सन्तापं कीर्त्तिमरणं धनं सौभाग्यमेव च।
दारिद्र्यं सर्व्वकामाप्तिरभ्यङ्गाङ्गास्करादिषु॥"

भास्करादिवारेषु सन्तापादयो यथाक्रममभ्यङ्गाद्भवन्तीत्यर्थः।

अथ षट्त्रिंशन्मतम्।

"संक्रान्त्यां पञ्चदश्याञ्च द्वादश्यां श्राद्धवासरे।
वस्त्रं न पीड़येन्नैव क्षारेणापि च योजयेत्॥
दर्शस्नानं गयाश्राद्धं तिलैश्च पितृतर्पणम्।
न जीवत्पितृकः कुर्य्यात् कुर्व्वंश्च पितृहा भवेत्॥
दर्शे स्नानं न कुर्व्वीत मातापित्रोस्तु जीवतोः।
नवम्याञ्च न चेत्तत्र निमित्तान्तरसम्भवः॥"

याद‍ृच्छिकस्नाननिषेधोऽयम्।

"भोगार्थं क्रियते यत्तु स्नानं याद‍ृच्छिकं नरैः।
तन्निषिद्धं दशम्यादौ नित्यनैमित्तिकं न तु॥"

तथा जावालिः।

"क्रियते स्वेदबाहुल्यात् हस्तयन्त्रजलादिना।
मलव्यापोहनफलं स्नानं याद‍ृच्छिकन्तु तत्॥
न तत् कुर्य्यात्तृतीयायां त्रयोदश्यान्तिथौ तथा।
शाश्वतीं भूमिमन्विच्छन् दशम्यामपि पण्डितः॥"

आह कण्वः।

"दशमी नवमी चैव प्रतिपच्च त्रयोदशी।
तृतीया च विशेषेण स्नाने चैतानि वर्ज्जयेत्॥"

स्नानदोषमाह वशिष्ठः ।

"प्रतिपद्यनपत्यं स्यात्तृतीयायामपत्नीकः ।
दशम्याममनः स्नाने सर्व्वं हन्ति त्रयोदशी ॥"

आह गार्ग्यः ।

"नवमी पुत्त्रनाशाय वै नाशाय त्रयोदशी ।
तृतीया भर्त्तृनाशाय स्नाने ता वर्ज्जयेदतः ॥"

तथा ।

"द्वादश्यां कृष्णपक्षे तु न स्नातव्यं कदाचन ।
शतसन्तानमिच्छद्भिरपवर्गपरैरपि ॥"

अथ जाबालिः ।

"त्रयोदश्यां तृतीयायां दशम्याञ्च विशेषतः ।
शूद्रविट्क्षत्त्रियाः स्नानं नाचरेयुः कथञ्चन ॥"

अनेन ब्राह्मणस्यानुज्ञातम् ।

आह मनुः ।

"न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि ।
न वासोभिर्नवाजस्रं नाविज्ञाते जलाशये ॥"

आह गार्ग्यः ।

"नानुलिप्तो न चाजस्रं सम्बन्धिव्यागतेऽपि च ।
गृहमागत्य न स्नायान्न महानिशि नातुरः ॥"

आह व्यासः ।

"न स्नायादुत्सवेऽतीते निर्वर्त्त्यापि च मङ्गलम् ।
अनुव्रज्य सुहृद्बन्धून् पूजयित्वेष्टदेवताम् ॥"

आह भृगुः।

"धर्मवित्राचरेत्स्नानमाह्निकन्तु पुनः पुनः।
तर्पणं ब्रह्मयज्ञञ्च वैश्वदेवञ्च नाचरेत्॥
नावर्त्तयेत् पुनः कर्म तर्पणादिकमन्वहम्।
काम्यनैमित्तिके हित्वा एकं ह्येकत्र वासरे॥"

तथा।

"संसृज्य चाष्टमं भागमुदयाद्यत्र कुत्रचित्।
तिथ्योर्युग्मेऽप्ययुग्मे वा सकृदाह्निकमाचरेत्॥"

प्रतिप्रसवमाह वशिष्ठः।

"पुत्रजन्मनि संक्रान्त्यां श्राद्धे जन्मदिने तथा।
नित्यस्नाने च कर्त्तव्ये तिथिदोषो न विद्यते॥"

आह वैवस्वतः।

"दर्भं पुष्पाणि समिधमौषधञ्च विशेषतः।
निषेधेनापि गृह्णीयादमावास्याहनि द्विजः॥"

तदहमात्रोपयुक्तं दर्भादिकं गृह्णीयादप्राप्तावित्यर्थः, वशिष्ठादिभिः निषिद्धत्वात्।

पद्यव्यासः।

स्नायाद्वा चतुर्थी सप्तमी दशमी पौर्णमासीषु श्रीकामः तैलाभ्यङ्गं कुर्य्यात्। स्पृशेदमावास्या षष्ठ्यष्टमी द्वादशी चतुर्द्दशीषु कृष्णत्रयोदश्याञ्चतुर्द्दश्यां वा यमाय धर्म्म-राजाय मृत्यवे चान्तकाय वैवस्वताय कालाय सर्व्व-भूतक्षयाय एतेभ्यः सप्तभिर्नमस्कारान्तैर्मन्त्रैः सप्तो-

दकाञ्जलीन् दद्यात् । सर्व्वपापेभ्यो विमुच्यते ।

अथ गद्यव्यासः ।

"पञ्चमी दशमी चैव पूर्णमासी त्रयोदशी ।
एकादश्यां तृतीयायां यस्तैलमुपसेवते ॥
अभ्यङ्गात्स्पर्शनाद्वापि भक्षणाच्च तथैव च ।
चतुर्थ्यां तस्य वृद्धिः स्याद्धनापत्यबलायुषाम् ॥"

तथा गार्ग्यः ।

"पञ्चमी दशमी चैव तृतीया च त्रयोदशी ।
एकादशी द्वितीया च पक्षयोरुभयोरपि ॥
अभ्यङ्गं स्पर्शनाद्यैरस्तत्र तैलं निषिध्यते ।
चतुर्थ्यां तस्य वृद्धिः स्याद्धनापत्यबलायुषाम् ॥"

अत्रान्धकेन तृतीयास्थाने पौर्णमासीति पठितम् ।

"दशम्यान्तैलमस्पृष्ट्वा यः स्नायादविचक्षणः ।
चत्वारस्तस्य नश्यन्ति आयुः प्रज्ञा यशो बलम् ॥"

आह वृहन्मनुः ।

"आहारं मैथुनं निद्रां सन्ध्यायां परिवर्ज्जयेत् ।
कर्म्म वाध्ययनं वापि तथा दानप्रतिग्रहौ ॥
आहाराद्व्याधिमाप्नोति गर्भो रौद्रश्च मैथुनात् ।
स्वप्नतः स्यादलक्ष्मीकः कर्म्म चैवात्र निष्फलम् ॥
अध्येता नरकं याति दानान्नाप्नोति तत्फलम् ।
प्रतिग्रहे भवेत्पापी तस्मात्सन्ध्यां विवर्ज्जयेत् ॥"

महानिशायामपि निषेधमाह महापुराणम् ।

"महानिशा तु विज्ञेया मध्यमं प्रहरद्वयम्।
स्नानन्तत्र न कुर्व्वीत नित्यनैमित्तिकादृते॥"

तथा विश्वामित्रः।

"महानिशा तु विज्ञेया रात्रौ मध्यमयामयोः।
तस्यां स्नानं न कुर्व्वीत काम्यमाचमनन्तथा॥"

षट्त्रिंशन्मतम्।

"अपेयं हि सदा तोयं रात्रौ मध्यमयामयोः।
स्नानं तत्र न कुर्व्वीत तथैवाचमनक्रियाम्॥
मूत्रोच्चारं महारात्रौ कुर्य्यान्नाचमनन्तु यः।
प्रायश्चित्तीयते विप्रः प्रायश्चित्तार्द्धमर्हति॥"

आह मार्कण्डेयः।

"महानिशे द्वे घटिके रात्रौ मध्यमयामयोः।
अत्र नैमित्तिकं कुर्य्यात् काम्यन्तु न मनागपि॥
महानिशा तु विज्ञेया सा च मध्यमरात्रकम्।
तस्यां स्नानं न कुर्व्वीत स्वाध्यायं पितृतर्पणम्॥"

मध्यस्थघटीद्वयमिति निर्णीतम्।

तथाच षट्त्रिंशन्मतम्।

"चत्वारि यानि कर्म्माणि सन्ध्यायान्तु विवर्ज्जयेत्।
आहारं मैथुनं निद्रां स्वाध्यायाध्ययनन्तथा॥
आहाराज्जायते व्याधिर्गर्भो रौद्रश्च मैथुनात्।
स्वप्नतः स्यादलक्ष्मीकः स्वाध्यायादायुषः क्षयः॥"

अकालवृष्टावपि नाध्येतव्यमित्याह।

"चातुर्मासे निवृत्ते तु चक्रपाणौ समुत्थिते ।
अकालवृष्टिं जानीयाद्यावद्विष्णुमहोत्सवम्* ॥"

महोत्सवः फाल्गुनपूर्णिमा ।

तथा ।

"मार्गान्मासात्प्रभृति मुनयो दक्षवाल्मीकिशिष्या-†
श्चैत्रं यावत्प्रवर्षणविधौ नेति कालं वदन्ति ।
नाड़ीजङ्घः सुरगुरुमुनिर्वक्ति वृष्टेरकालौ
मासावेतौ वदति नियतं पौषमाघौ न शेषान् ॥"

अथ षट्त्रिंशन्मतम् ।

"तैलैः स्नानं महापुण्यं कुर्य्यादामलकैः श्रिये ।
अष्टमीनवमीदर्शरविसंक्रमणादृते ॥
तुष्यत्यामलकैर्विष्णुरेकादश्यां विशेषतः ।
सर्व्वकालं तिलैः स्नानमिति व्यासोऽब्रवीन्मुनिः ॥
सर्व्वौषध्या तिलैर्वापि पुष्पैर्वामलकोदकैः ।
शिरःस्नानं तटे कृत्वा मज्जेदप्सु यथारुचि ॥"

आह शातातपः ।

तिलोद्वर्त्ती तिलस्नायी शुचिर्नित्यं तिलोदकी ।
होता दाता च भोक्ता च षट्तिली नावसीदति ॥
माघादिमासषट्के च मेखलाबन्धनं यतः ।
चूड़ाकरणमर्धञ्च श्रावणादौ न शस्यते ॥

---

* यावन्न सुप्यते हरिरिति चतुर्थचरणं स्मार्त्तादिभिः पठितम् ।

† व्याासवाल्मीकिगर्गा इति प्रथमचरणं तैरेव पठितम् ।

सिंहे धनुषि मीने च स्थिते सप्ततुरङ्गमे ।
चौरोद्वाहं न कुर्व्वीत गृहकर्म्म विवर्ज्जयेत् ॥
माघ एव यदा माघी सिंहे चैव यदा गुरुः ।
व्रतं चौरं तथोद्वाहं गृहकर्म्म च वर्ज्जयेत् ॥

आद्यचौरस्य श्रावणादिषट्क एव निषिद्धत्वात् सिंहे धनुषि द्वितीयचौरनिषेधो बोद्धव्यः ।

तत्तत्कालनिषिद्धं कर्म्मासङ्ख्यं श्रुतिस्मृतिपुराणैः ।
तत्कथमसहस्रायुः शक्तोऽहं वक्तुमेकाकी ॥
तस्मात् कतिपयवचनैराकरदृष्टैर्निबन्धृभिर्लिखितैः ।
यदवगतं तदभिहितमपरमपरे विलिखिष्यन्ति ॥

## अथ नाड़िकादिनिरूपणम् ।

नाड़िकादिज्ञानोपायः स्मृतौ भारते ।

कर्षेणात्यधिकैः षड्भिः पलैस्ताम्रस्य भाजनम् ।
त्रिंशदङ्गुलविस्तारं द्वादशाङ्गुलमुच्छ्रितम् ॥
स्वर्णमासेन कृत्वा तु चतुरङ्गुलकाष्ठिकाम् ।
मध्यभागे तया विद्धं नाड़ी कार्य्या घटी स्मृता ॥
ततस्तेनाम्भसा पूर्णा यावत्कालेन जायते ।
स कालो नाड़िका तस्याः षष्टिभागो विनाड़िका ॥
नाड़ीद्वयं मुहूर्त्तन्तु ते पञ्चदश वासराः ।
एवं रात्रिरतः पक्षमासर्त्त्वयनवत्सराः ॥

नाड़िकादिनिरूपणमिति ।

## अथ पौर्णमासीनिरूपणम् ।

तत्र ब्रह्माण्डपुराणम् ।

राका चानुमतिश्चैव पूर्णिमा द्विविधा स्मृता ।
पूर्णोदिते कलाहीने पौर्णमास्यान्निशाकरे ।
पूर्णिमानुमतिर्ज्ञेया या चास्तमितभास्करा ॥
यस्मात्तामनुमन्यन्ते पितरो दैवतैः सह ।
तस्मादनुमतिर्नाम पूर्णिमा प्रथमा स्मृता ॥
यदा चास्तमिते सूर्य्ये पूर्णचन्द्रस्य उद्गमः ।
रञ्जनाच्चैव चन्द्रस्य राकेति कवयो विदुः ॥

तथा शङ्करगीतायाम् ।

पञ्चान्ते पौर्णमास्यान्तु स्रोतस्येवोत्तरामुखे ।
स्नात्वा प्रेतपुरीं हित्वा विष्णुलोकं स गच्छति ॥
पञ्चान्ते स्रोतसि स्नातस्तेन नायाति मद्गृहम् ।
आषाढ़ी कार्त्तिकी माघी वैशाखीषु कृतन्तु यत् ।
तदनन्तफलं प्रोक्तं स्नानदानजपादिकम् ॥
आषाढ़ी कार्त्तिकी माघी वैशाखी श्रेष्ठपूर्णिमा ।
आकामावैष्विति ख्याता दत्तं यत्राक्षयम्भवेत् ॥

अथ भारतम् ।

माससंज्ञे यदा ऋक्षे चन्द्रः सम्पूर्णमण्डलः ।
गुरुणा याति संयोगं सा तिथिर्महती स्मृता ॥

माससंज्ञम् ऋक्षं चित्राविशाखाज्येष्ठादयः, तेषु नक्षत्रेषु सम्पूर्ण-

मण्डलश्चन्द्रः पूर्णिमायां भवति, तेन तस्यान्तिथौ यद्येकस्मिन्नचत्रे माससमानसंज्ञके गुरुचन्द्रयोगो भवति तदा महाचैत्री महावैशाखी महाज्यैष्ठीत्यादिका द्वादश पौर्णमास्यो भवन्तीत्यर्थः।

तथा।

"सहितौ यत्र दृश्येते दिवि चन्द्रबृहस्पती।
माससंज्ञे तु नचत्रे सा तिथिर्महती स्मृता॥"

पूर्व्ववचने सम्पूर्णमण्डलोपादानात् पौर्णमास्ये वात्रापि प्रत्येतव्या।

अतएव ज्योतिःशास्त्रे।

"सहितौ यत्र दृश्येते दिवि चन्द्रबृहस्पती।
पौर्णमासी तु महती प्रोक्ता संवत्सरे हि सा॥"

सहितयोर्दर्शनमेकत्रावस्थितयोरेव भवति, नैकराशिमात्रावस्थाने। तेन

एकराशिगतौ स्यातां यदा गुरुनिशाकरौ।
पौर्णमासी तु महती सर्व्वपापहरा तिथिः॥

एकनचत्रावस्थितिपरं सर्व्वैकवाक्यत्वात्।

तथा ब्रह्माण्डपुराणे।

"पौर्णमासी व्यतीपातो यदेच्छेतां परस्परम्।
यस्मिन् काले समौ स्यातां तौ व्यतीपात एव सः॥"

तौ चन्द्रगुरुसमौ यदाकाशे तिष्ठतः। तदेव स्वयं व्याकरोति।

"चन्द्रमा एकऋचस्थ देवाचार्य्यस्तथैव च।
वसन्ति द्वादशाब्दान्ते तन्महत्त्वं तिथेः स्मृतम्॥"

ऋक्षपदं माससंज्ञकज्येष्ठादिनक्षत्रपरम्। माससंज्ञकवचनेनैक-वाक्यत्वात् तिथिपदञ्च पौर्णमासीपरं, तिथिनक्षत्रमात्रपरत्वे द्वादशाब्दान्त इति विरोधात्। प्रतिमासं तस्याभावात् न च द्वादशाब्दान्तेऽप्यवश्यम्भावः,किन्तु ततः प्राङ् भवतीति तस्यार्थः। तदेव द्वादशपौर्णमासीनामेव महत्त्वम्। गुरुचन्द्रयोर्माससंज्ञक-नक्षत्रावस्थितौ भवतीत्युक्तम्। सौराणान्तु मासानान्नात्र विव-क्षितत्वं वचनैरनुपादानात् महामाघ्यादिषु वा सम्भवात्। महाज्यैष्ठ्यान्तु विशेषः।

"ऐन्द्रे गुरुः शशी चैव प्राजापत्ये रविस्तथा।
पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठी प्रकीर्त्तिता॥"

ऐन्द्रं ज्येष्ठानक्षत्रं, प्राजापत्यं रोहिणी। एवंलक्षणं प्रकीर्त्तिता प्रकर्षणवती कथिता फलभूयस्त्वात्, महत्त्वन्तु साधारणलक्षणा-देव। यत्तु पठन्ति।

बृहस्पतिः।

"पौर्णमास्यां सिते पक्षे ज्यैष्ठे मासि गुरोर्दिने।
वृषादित्ये शशी चैन्द्रे महाज्यैष्ठी प्रकीर्त्तिता॥"

अत्रापि गुरुवारवृषादित्याभ्यां फलभूयस्त्वम्। वृषादित्यं व्याकरोति।

"प्राजापत्येऽथ सौम्येऽर्के ऐन्द्रे जीवनिशाकरौ।
पूर्णिमा गुरुवारेण महाज्यैष्ठी प्रकीर्त्तिता॥
ऐन्द्रे शशी सुराचार्य्यश्चन्द्रे धातरि वा रविः।
पूर्णिमा ज्यैष्ठमासस्य महाज्यैष्ठी प्रकीर्त्तिता॥"

सौम्यचन्द्रपदाभ्यां मृगशिरो भण्यते। धाता तु रोहिणी, चन्द्रे धातरि वा रविरित्यमवक्लृप्तिदर्शने वृषादित्यमात्रं फलभूयस्त्व-प्रयोजकं ब्रूते, महत्त्वन्तु ज्येष्ठानक्षत्रे गुरुचन्द्रयोरवस्थानमात्रेणैव, प्राजापत्ये रविस्तथेति च ततोऽपि फलातिरेकार्थम्, अन्यथा महाज्यैष्ठ्या बहुतरं लक्षणं स्यात्। यदपि पठन्ति।

"वृश्चिकस्थो यदा जीवो वृषस्थश्च यदा रविः।
पूर्णिमा गुरुवारेण महाज्यैष्ठी प्रकीर्त्तिता॥"

पूर्णिमा सेन्दुशक्रस्थेति तृतीयपदं वचनान्तरे। तत्र वृश्चिकपदं ज्यैष्ठापरं सर्व्वैकवाक्यत्वात्। वृषपदं फलभूयस्त्वार्थम्।

यथा।

"मासाख्यर्क्षे चन्द्रगुरू तत्पञ्चदशके रविः।
पूर्णिमा ज्यैष्ठमासस्य महच्छब्दान्विता तिथिः॥
मासाख्यर्क्षे चन्द्रगुरू तत्पञ्चदशके रविः।
पूर्णिमा गुरुवारेण महाज्यैष्ठी प्रकीर्त्तिता॥"

अत्र तत्पञ्चदशके रविरिति विवक्षायां ज्येष्ठानक्षत्राच्चतुर्द्दशत्वा-द्रोहिण्यास्तत्रादित्ये न स्यात्। अथ चतुर्द्दशेऽप्यादित्ये वा भवति, तदा पञ्चदशकमविशेषकम्। न च तत्फलभूयस्त्वार्थम्, रोहिण्यामपि फलभूयस्त्वात्। ततः पञ्चदशकपर्य्यन्ते रवौ न षोड़शके आर्द्रायामपीत्यर्थः।

तथा।

"ऐन्द्रे शशी सुराचार्य्यौ वृषे अग्नेऽथवा रवौ।
पूर्णिमा गुरुवारेण महाज्यैष्ठी प्रकीर्त्तिता॥"

अग्ने मिथुने, तेनार्द्रास्थेऽपि रवौ प्रसक्तिः। तन्निराकरणार्थं पञ्चदशकपर्य्यन्ते भवति, न षोड़शक इति तात्पर्य्यम्, ज्येष्ठात आर्द्रायाः षोड़शकत्वात्। न तु चतुर्द्दशकस्य रोहिणीनक्षत्रस्यापि निवृत्तिः, तस्य विधानात्। यानि तु वचनानि।

"ऐन्द्रे मैत्रे यदा जीवस्तत्पञ्चदशके रविः।
पूर्णिमा शक्रचन्द्रेण महाज्यैष्ठी तिथिस्तदा॥
प्राजापत्येऽथ सौम्येऽर्के ऐन्द्रे शशी गुरुस्तथा।
मैत्रे वा पूर्णिमायुक्ता महाज्यैष्ठी प्रकीर्त्तिता॥
वृश्चिकस्थो यदा जीवो नक्षत्रद्वितये भवेत्।
ऐन्द्रे शशी महाज्यैष्ठी वृषे युग्मेऽथवा रवौ॥"

ऐन्द्रे मैत्रे च गुरौ यदि महाज्यैष्ठी स्यात् तदा तत्पञ्चदशकविशेषणादनुराधास्थे जीवे रोहिण्यामेव रवौ न मृगशिरसि, ज्येष्ठायाञ्च गुरौ मृगशिरस्येव रवौ न रोहिण्यामिति स्यात्, एतच्च प्राजापत्ये रविस्तथेति सर्व्वसम्मतवराहवचनं विरुद्धम्। तस्मात्तत्पञ्चदशके रविरित्यनेनैवाकुलितत्वात् मूलस्य चानुपलम्भात् द्वादशभिर्वचनैः ऐन्द्रस्थ एव गुरौ महाज्यैष्ठीप्रतिपादनात् महाज्यैष्ठीलक्षणस्य च भेदापत्तेः तस्य चान्याय्यत्वान्निबन्धृभिरनालिखितत्वात् पौर्णमास्यन्तरेषु च माससंज्ञकनक्षत्र एव गुरुचन्द्रयोर्मेलकेन महत्त्वदर्शनादत्रापि तथा त्वस्यैव युक्तत्वादित्यनाकराणि। यदि पुनः मैत्रवचनान्याकरस्थान्येव तदा नास्ति वचनस्यातिभार इति न्यायात् सर्व्वं पूर्व्वोक्तं दूषणमदूषणमेव, किन्तु गुरुवारस्तदा न योज्यः। यच्चापरं वचनम्।

मेषपृष्ठे यदा सौरिः सिंहे च गुरुचन्द्रमाः ।
भास्करे श्रवणामध्ये महामाघीति सा स्मृता ॥

श्रवणामध्ये हि भास्करो मकरे भवति । न च मकरस्थादित्ये पौर्णमास्यां सिंहे चन्द्रः सम्भवति । कुम्भस्थादित्ये तत्सम्भवः, तत्रापि 'भास्करे श्रवणामध्य' इति विरोधात् । तस्मात् पौर्णमासी-व्यतिरिक्ततिथ्यन्तराभिप्रायम् ।

पौर्णमासीनाञ्च तीर्थविशेषेषु महाफलमाह ।

"महामाघी प्रयागे तु नैमिषे फाल्गुनी तथा ।
शालग्रामे तथा चैत्री कृताः स्युश्च महाफलाः ॥
गङ्गाद्वारे तु वैशाखी ज्यैष्ठी तु पुरुषोत्तमे ।
आषाढ़ी वै कनखले केदारे श्रावणी तथा ॥
महाभाद्री वदर्य्याञ्च कुब्जाग्रेषु महाश्विनी ।
पुष्करे कार्त्तिकी रम्या कुब्जे मार्गशीर्षी तथा ।
अयोध्यायां महापौषी कृताः स्युश्च महाफलाः ॥"

महच्छब्दोऽनुषज्यते ।

अथ ब्रह्माण्डपुराणे ।

"पौर्णमासी व्यतीपातौ यद्येतौ परस्परम् ।
तस्मिन् काले समौ स्यातां तौ व्यतीपात एव सः ॥"

तौ चन्द्रबृहस्पती यदाकाशे समौ, एकनक्षत्रावस्थाने च तयो-राकाशे समता ।

तथा ।

"तत्रैव चन्द्रमाश्चैव देवाचार्य्यस्तथैव च ।

वसति द्वादशाब्दान्ते तन्महत्त्वं तिथेः स्मृतम् ॥
तिथावस्यान्तु यत्पुण्यं तीर्थेष्वायतनेषु च ।
तद्द्वादशगुणं कृत्स्नमृषिभिः परिकीर्त्तितम् ॥”

यच्च विष्णुवचनम् “मार्गशीर्षे पञ्चदश्यां मृगशिरोयुतायां चूर्णित-लवणस्य प्रस्थमेकम् सुवर्णतुलाभमित्यादि” द्वादशपौर्णमासी-प्रतिपादकम्, तस्मात् सनिर्णयावसरे लिखितम् योग्लोकेन तु वैशाख्यामिति श्रीविष्णुवचनस्यादौ पठितं, तदनाकरम् ।

अथ लिङ्गपुराणम् ।

“फाल्गुने पौर्णमास्याञ्च सदा बालविलासिनी ।
ज्ञेया फाल्गुनिकी सा च कार्य्या लोकविभूतये ॥”

बालवज्जनविलासिन्यामित्यर्थः ।

तथान्या अपि तिथयो महत्यः ।

“दुर्गोत्थानस्य नवमी विष्णूत्थानस्य द्वादशी ।
वह्निस्वापस्य षष्ठी च महत्यो माघसप्तमी ॥”

पाश्चात्यैर्महासप्तमीत्युच्यते ।

अथाष्टकाः ।

तत्राश्वलायनः ।

“हेमन्तशिशिरयोश्चतुर्णामपरपक्षाणामष्टमीष्वष्टकाः ।”

हेमन्तशिशिरयोरित्यभिधानात् सौरमासाश्रयणेनाष्टकाः कार्य्याः। यच्च चतुरष्टको हेमन्त इति वचनम्, तत्र तु संवत्सर इति

यत्तावलम्बनेन शिशिरस्यापि हेमन्तपदवाच्यत्वात् ।

अथ गोभिलः ।

"आग्रहायण्या ऊर्द्धं तिस्रोऽष्टकाः ।"

एतच्च गोभिलोक्तत्वात् छन्दोगानाम् ।

अतएव यट्‌त्र्यम्बृङ्गवचनम् ।

"तिस्रोऽष्टकास्तु कर्त्तव्याश्चतुर्थीन्तु न कारयेत् ।
अधिमासेष्वासुरी स्यात्तस्यां पित्रर्थंकारयेत् ॥"

तिसृभ्योऽधिको मासश्चतुर्थस्तन्मासीयाञ्चतुष्टयीमष्टकां न कुर्य्यादित्यर्थः । इति छन्दोगस्योपदेशः । अथवा चतुर्थे मास्यधिमासे । तत्र चतुर्थीमष्टकां न कुर्य्याद्‌यत्र तु कुर्य्यादेव तिस्रस्त्वष्टकाः, सत्यप्यधिमासे कर्त्तव्याः । अतएव पार्व्वणाश्रयणाष्टका इत्यनुत्कर्षः, प्रसवाद्योऽष्टकादय इत्युत्कर्ष उपपन्नः ।

अथानध्ययनप्रक्रमे गोतमः ।

"कार्त्तिकी फाल्गुन्याषाढ़ी पौर्णमासी तिस्रोऽष्टकाः,
त्रिरात्रमनध्याय इत्यनुषज्यते ।"

त्रिरात्रञ्च पूर्व्वपरदिनाभ्यां सह ।

पुनस्तेनैवोक्तम् ।

"अन्त्यामेके ।"

एके बह्वृचादयः । तेषाञ्चतुरष्टकत्वात् ।

तथापरपक्षस्याष्टकासु ।

"संक्रान्ते भास्करे कन्यां कृष्णपक्षे विशिष्यते ।
अष्टमी साष्टका कार्य्या शाकेनापि न हापयेत् ॥"

तथा ।

"अष्टकान्यपि तत्रैव पक्षे वै पञ्चमी स्मृता ।" इति ।

अथामावास्याविवेकः ।

तत्र हि श्राद्धमुक्तं मनुना ।

"पितृयज्ञन्तु निर्व्वर्त्त्य विप्रांश्च भक्षयेत् प्रियान् ।
पिण्डान्वाहार्य्यकं श्राद्धं कुर्य्यान्मासानुमासिकम् ॥"

तत्र ब्रह्माण्डपुराणम् ।

"अमा वसेतामृक्षे तु यदा चन्द्रदिवाकरौ ।
एकां पञ्चदशीरात्रिममावास्या ततस्तु सा ॥"

ऋक्षे नक्षत्रे, न तु राशौ, चतुर्द्दश्यामपि तत्सम्भवात् । एकनक्षत्रनिवासश्च कृष्णायां पञ्चदश्याम्भवतीति कृष्णत्वमर्थसिद्धम् । रात्रिमित्यमावास्यापरभाग उच्यते ।

अमाशब्दं व्याकरोति गोभिलः ।

"अमाशब्दः सहार्थे, सह वसतः सूर्य्याचन्द्रमसावस्यामित्यमावसी ।"

दर्शलक्षणमाह ब्रह्माण्डपुराणे ।

"व्युच्छिद्येताममावास्यां पश्यतस्तौ समागतौ ।
अन्योऽन्यं चन्द्रसूर्य्यौ तु यदा तद्दर्श उच्यते ॥"

अन्योऽन्यदर्शनाद्दर्श इत्यर्थः ।

देवीपुराणे ।

"अमा नाम रवे रश्मिः सूर्य्यलोके प्रतिष्ठिता।
तस्मात् सोमो वसेत्तस्याममावासी ततः स्मृता॥"

तस्यां तिथावमां रश्मिं चन्द्रो वसतीत्यर्थः। तत्र सम्पूर्णायां तिथौ न चिन्तावसरः। यदा तु द्विखण्डा, एका चतुर्द्दशीयुक्ता, अपरस्मिंश्च प्रतिपद्युक्ता व्रतोपवासादावित्युक्तम्। किन्तु श्राद्धादौ का ग्राह्येति चिन्त्यते।

अतएव प्रचेताः।

"सिनीवाली कुहूश्चैव श्रुत्युक्तोऽपि च कर्म्मणि।
स्याताञ्चेत्ते तु मध्याह्ने श्राद्धादिः स्यात् कथन्तदा॥
तिथिक्षये सिनीवाली तिथिवृद्धौ कुहूर्मता।
साम्येऽपि च कुहूर्ज्ञेया वेदवेदाङ्गवेदिभिः॥"

मध्याह्ने वृत्ते यदि भवतीत्यर्थः। तदा च परा भवति, अपराह्न एव भवतीत्युभयदिनेऽप्यपराह्नप्राप्तौ वृद्धिह्रासादिना व्यवस्थेत्याह। न तु मध्याह्नात् परतो मध्याह्नस्योपरीति पञ्चम्यर्थे षष्ठ्यर्थे वा सप्तमीवर्णना, अशब्दार्थस्वीकारापत्तेः। अतो नैषा पदयोजना, प्रमेये तु विशेषो नास्त्येव।

सिनीवालीमाह जाबालिः।

"दृष्टचन्द्रा सिनीवाली नष्टचन्द्रा कुहूर्मता।
सिनीवाली सदा पित्र्ये दैवे च सततं कुहूः॥"

अमावास्यायां चन्द्रस्यादृष्टत्वात् दृष्टचन्द्रत्वञ्चतुर्द्दशीत्वेन भवति, तेन तद्दिवसीयामावास्येत्यर्थः। ननु या परा सा अमावास्येति श्रुतिः, पराभूताया ग्रहणमाह। 'सिनीवाली सदा पित्र्य'

इति च पूर्व्वग्रहणम् । प्रचेतसा वृद्धिह्रासादिना व्यवस्थेत्युक्तेऽपि परस्परविरोध उच्यते । श्रुत्या तावन्न विरोधः । न हि सा श्राद्धे ग्राह्या परेत्याह । तेन देवकार्य्यविषयत्वं श्रुतेर्भविष्यति ।

तथा ।

"अमा या प्रतिपद्युक्ता सर्व्वपापहरा च सा ।
चन्द्रसूर्य्यग्रहैस्तुल्या स्नानदानजपादिषु ॥"

अविशेषेण श्रुतिः कथं स्मृत्योपसंह्रियत इति चेत् न । 'अपराह्णः पितृणामिति' श्रुत्यैवोपसंहारात् ।

एतच्छ्रुतिमूलमेव वचनम् ।

"ययास्तमेति सविता पितरस्तामुपासते ।
तिथिन्तेभ्योऽपराह्णो हि स्वयन्दत्तः स्वयम्भुवा ॥"

'सिनीवाली सदा पित्र्य' इत्यादेश्चायमर्थः । प्रतिपद्युक्तायामपराह्णस्यालाभे सिनीवाली ग्राह्या । उभयत्र तु प्राप्तौ 'या परा सामावास्येति' श्रुतिः । तिथिक्षये सिनीवालीति पूर्व्वदिने अपराह्णस्याप्राप्तिः, अपरदिने नापराह्णे तिष्ठतीति सा क्षीणा, तदा पूर्व्वैव ग्राह्या । यदा उभयत्रापराह्णव्यापिनी सा समा, यदाधिकमपि व्याप्नोति तदा वर्द्धमाना, उभयत्रापि परैव ग्राह्येत्यर्थ इति सर्व्वाविरोधः । न पुनरपराह्णस्यालाभेऽपि वृद्धिह्रासादिना व्यवस्था, अपराह्णबाधापत्तेः ।

अतएव छन्दोगपरिशिष्टे कात्यायनः ।

"वर्द्धमानाममावास्यां लक्षयेदपरेऽहनि ।

यामांस्त्रीनधिकान्नापि पितृयज्ञस्ततो भवेत् ॥
पञ्चादावेव कुर्व्वीत सदा पञ्चादिकञ्चरुम्।
पूर्व्वाह्ण एव कुर्व्वन्ति विद्धेऽप्यन्ये मनीषिणः ॥"

अतएव 'सिनीवाली सदा पित्र्य' इति जाबालिना व्याख्यातम्।

"प्रतिपत्सा त्वमावास्या पूर्व्वाह्णव्यापिनी यदि।
भूतविद्धैव सा कार्य्या पित्र्ये कर्म्मणि सर्व्वदा ॥"

पूर्व्वाह्णव्यापिनी न पराह्ण इत्यर्थः। नत्वपराह्णप्राप्तावपि सदैव सिनीवालीति बोद्धव्यम्।

अतएव बौधायनः।

"मध्याह्नात्परतो यत्र चतुर्द्दश्यनुवर्त्तते।
सिनीवाली तु सा ज्ञेया पितृकार्य्येष्वनिष्फला ॥"

मध्याह्नात् परतोऽपराह्ण इत्यर्थः।

"एवंविधा सिनीवाली निष्फला न तु सर्व्वदा।"

तथा।

"भूतविद्धाममावास्यां मोहादज्ञानतोऽपि वा।
श्राद्धकर्म्मणि कुर्व्वीरन् तेषामायुः प्रहीयते ॥"

उत्तरदिने अपराह्णप्राप्तावेतदपि। अप्राप्तौ च।

"यस्यां सन्ध्यागतः सोमो मृणालमिव दृश्यते।
अपराह्णे क्षयस्तस्यां पिण्डानां करणं ध्रुवम् ॥"

अपरदिने अपराह्णे यद्यमावास्याया अभावस्तदा पूर्व्वदिनामावास्यापराह्ण एव पिण्डादिक्रिया। शूलधरलिखितमेतद्वचनद्वयम्।

एतदाह गोभिलः ।

"यदहस्त्वेव चन्द्रमा न दृश्येतताममावास्यां कुर्व्वीत,
दृश्यमानेऽप्येकदा गताध्वा भवतीति ।"

एकदा परत्रापराह्णप्राप्तौ ।

तथाच श्रुतिः ।

"तदा बाध एव तन्मासि पितृभ्यो ददतो यदैवैष पुरस्तान्न परस्ताद्दृशे अथैतेभ्यो दद्यादेष वै सोमो राजा यद्देवाममन्नं यच्चन्द्रमाः स एतां रात्रिं क्षीयते, तस्मिन् क्षीणे ददाति, अथैतेभ्योऽसम्मदं करोति ; अथ यदक्षीणे दद्यात्, सम्मदं कुर्य्यात् ; देवेभ्यश्च पितृभ्यश्च तस्माद्यदैष वै पुनः पुरस्तान्न परस्ताद्दृशे, अथैतेभ्यो ददाति ।"

सम्मदः सङ्ग्रामः । चतुर्द्दशी कला देवभोग्या, पञ्चदशी कला पितृभोग्या । तेन चतुर्द्दशीयुक्ताया दाने देवानां पितॄणाञ्च सङ्ग्रामः स्यादिति निन्दा ; अपरदिनामावास्याऽपराह्णविधानाद्वा।

यदा तु दिनद्वयेऽप्यपराह्णो न लभ्यते तदा निगमः ।

"पूर्व्वाह्णे चेदमावास्या नापराह्णे भवेद्यदि ।
प्रतिपद्यपि कर्त्तव्यं श्राद्धं श्राद्धविदो विदुः ॥"

प्रतिपदोऽपि चन्द्रादर्शनस्याविशेषादमावास्यात्वम् ।

तथाहि श्रुतिः ।

"द्वे पौर्णमास्यौ द्वे अमावास्ये ।" इति ।

प्रतिपदप्यमावास्यैव, तेन तदपराह्णे कर्त्तव्यमेतत् साग्नेरेव ।

तथाहि श्रुतिः ।

"अमावास्यायामपराह्णे पिण्डपितृयज्ञेन चरन्तीति ।"

तथाच कात्यायनः ।

"अपराह्णे पिण्डपितृयज्ञश्चापराह्णे अमावास्यायाञ्चन्द्रा-
दर्शने पिण्डपितृयज्ञो विहितः । तदनन्तरञ्च श्राद्धम् ।"

तदाह छन्दोगपरिशिष्टे कात्यायनः ।

"पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः ॥
यदा चतुर्द्दशीयामं तुरीयमनुपूरयेत् ।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥
यदुक्तं यदहस्त्वेव दर्शनन्नैति चन्द्रमाः ।
तत् क्षयापेक्षया ज्ञेयं, क्षीणे राजनि चेत्यपि ॥"

पूर्व्वमस्यार्थो व्याख्यातः । तृतीयांश इति दिनं त्रिधा विभज्य तृतीयांशः, सन्ध्यापर्य्यन्तमेव । अन्यथा 'नातिसन्ध्यासमीपत' इत्यप्रसक्तपर्य्युदासानुपपत्तेः । पूर्व्वाह्णमध्याह्नापराह्णानाञ्च तुल्यो भागः । अतः सन्ध्यापर्य्यन्तमेवापराह्ण इति सिध्यति । पिण्डमनु पिण्डपितृयज्ञमन्वाक्रियत इति, पिण्डान्वाहार्य्यकं श्राद्धं तेन साग्नेरपराह्णे श्राद्धविधानम् । निरग्नेस्तु कथ्यते ।

"आदित्यस्योदये यत्र अमावास्यानुवर्त्तते ।
अपराह्णः स विज्ञेयः पितॄणां दत्तमक्षयम् ॥"

अन्धुकेन तु कथितम् ।

"अरुणोदयवेलायाममावास्या यदा भवेत् ।

स कालः परमो ज्ञेयः पितॄणान्दत्तमक्षयम् ॥”

उदयवेलोद्गमनवेला उद्गमनञ्चोर्द्धगमनं वर्द्धमानता सा चार्द्ध-दिनपर्य्यन्तम् ।

तदुक्तं वामनपुराणे ।

“उदयाद्वर्द्धमानैश्च मध्याह्नं भावयेद्रविः ।

ततः परं ह्रसन्तीति ज्योतिरस्तं स गच्छति ॥”

ततश्चार्द्धदिनात् पूर्व्वम् । अत्राह्नः पूर्व्वभागे पूर्व्वाह्नमात्रेणापराह्न इत्यर्थः । तेन पूर्व्वाह्नस्याप्यपराह्नकार्य्यकारितया तद्रूपत्वा-दपराह्नः स विज्ञेय इति ज्ञापयति । अपराह्नानुवृत्त्यभिप्रायेण एतद्वचनवर्णनेऽपराह्नस्य तद्रूपतया ज्ञापकस्य ‘स विज्ञेय’ इति ज्ञापकानुपपत्तेः ।

तथा बौधायनः ।

“घटिकैकाप्यमावास्या प्रतिपत्सु न चेत्तदा ।

भूतविद्धापि सा कार्य्या दैवे पित्र्ये च कर्म्मणि ॥”

घटिकैका कार्य्येत्यपिशब्देन घटिकायामनादरं दर्शयन् श्राद्धादावर्द्धप्रहरादिप्राप्तिपरत्वं ज्ञापयति । तेन प्रतिपद्दिन-पूर्व्वाह्णे श्राद्धयोग्यामावास्याकालप्राप्तौ भूतविद्धामावास्याग्रहण-म्मदनप्राप्तौ सत्यामपराह्नादरेण परदिन एव श्राद्धक्रियां दर्शयति ।

व्यक्तमाह प्रचेताः ।

“मुहूर्त्तमप्यमावास्या प्रतिपद्येव चेद्भवेत् ।

तद्दानमुत्तमं ज्ञेयं पर्व्वशेषन्तु पर्व्ववत् ॥”

दानं पितॄन् समुद्दिश्य विप्रेभ्यो दद्यात् पितृभ्यः प्रयतो मनुष्य

हुत्यादौ प्रयोगात् । अत्रापि 'मुहूर्त्त'पदेन घटिकोपादानम् । 'पर्व्व-शेषस्तु पर्व्ववदिति' तदुभयदिनेऽप्यपराह्णाप्राप्तौ साग्नेः प्रतिपद्य-पराह्णे श्राद्धविधानं, प्रतिपदो दर्शरूपत्वादपराह्णे च पिण्डपितृ-यज्ञविधानात्। अतो मुहूर्त्तमपीति घटिकैकापीति । 'आदित्य-स्योदय इति' 'अरुणोदयवेलाया'मित्यादिवचनजातविरोधात् ।

"प्रतिपत्सु त्वमावास्या पूर्व्वाह्णव्यापिनी यदि ।
भूतविद्धैव सा कार्य्या पित्र्ये कर्म्मणि सर्व्वदेति"

वचनमग्निहोत्रविषयं वर्णनीयं सर्व्वेषां वाक्यपरित्यागात् ।

अतएव ।

"अमा स्यात् प्रतिपद्युक्ता सर्व्वपापहरा तिथिः ।
चन्द्रसूर्य्यग्रहैस्तुल्या स्नानदानजपादिषु ॥"

अत्रापि दानपदेनादिपदेन वा चन्द्रसूर्य्यग्रहतुल्यताविधेर्वा श्राद्ध-प्राप्तिः । यद्द्योगेश्लोकेन व्याख्यातं आदित्यस्योदयात् प्रभृति यद्यप्यपराह्णव्यापिन्यमावास्या अत्र 'पितृणान्दत्तमक्षयमिति' वचनार्थो न तु प्रातरेव श्राद्धक्रिया ।

यथा शङ्खः ।

"रात्रौ श्राद्धं न कुर्व्वीत राक्षसी सा प्रकीर्त्तिता ।
सन्ध्ययोरुभयोश्चैव सूर्य्ये चैवाचिरोदिते ॥"

अचिरोदितसूर्य्ये निषेधादित्यन्तं, तदसङ्गतम् । न ह्ययन्निषेधः कलञ्जभक्षणादिष्विव रागतः प्रवृत्त्यभावात्, तत्काले क्रिय-माणस्य समीहितसाधनतानवगतेः । विधितस्त्वपराह्णादिष्वेव नियतत्वात्, प्रातरादिकाले प्रसक्त्यभावात् । तस्मादपराह्णादिवि-

शेषोऽयं चतुष्टयनिन्दानुवादः। पूर्व्वोक्तवचनजातपर्य्यालोचनया वाग्निहोत्रिण एवापराह्णविधिर्नाग्नेरिति ; तस्य निषेधोऽनुवादः। किञ्च स्वायत्तेऽपराह्णपदप्रयोगे कर्त्तव्ये 'आदित्यस्योदयेत्यादि' अर्थान्तरवाचकप्रयोगो मुनीनां केन हेतुनेति न विद्मः। किञ्च द्विखण्डतिथौ तावदिदं वचनम्।

तत्र च बौधायनेनैव।

"मध्याह्नात्परतो यत्र चतुर्द्दश्यनुवर्त्तते।
सिनीबालीति सा ज्ञेया पितृकृत्येषु निष्फलेति"

वचनेन चतुर्द्दशीदिने अपराह्णलाभेऽपि परदिनापराह्णव्यापिन्या ग्रहणस्योक्तत्वादिदं पुनरुक्तं स्यात्। तस्मात् यथोक्तमेव साधीयः। अतएव छन्दोगपरिशिष्टे कात्यायनः। 'पश्चादावेवेत्यादि' वचनेन पूर्व्वाह्णस्यैव विधानात् अम्बुसम्भ्रमाभ्यामपीत्थमेव वर्णितम्।

अमावास्यायाञ्च विहितं श्राद्धादिकं यथा।

"दर्शे स्नात्वा पितृभ्यस्तु दद्यात् कृष्णतिलोदकम्।
श्राद्धन्तु विधिवद्दद्यात् सन्ततिस्तेन वर्द्धते॥"

तथा।

"नीलभद्रविमोक्षेण अमावास्यान्तिलोदकैः।
वर्षासु दीपदानेन पितृणामनृणी भवेत्॥
न वर्त्तयति यः श्राद्धं प्रमीतपितृको द्विजः।
इन्दुक्षये मासि मासि प्रायश्चित्तीयते तु सः॥
मासि मास्यसिते पक्षे पञ्चदश्यान्नरेश्वर।
अष्टकासु च कुर्व्वीत काम्यानन्यान् शृणुष्व मे॥"

दैवन्तु तिथिनिर्णय एवोक्तं, अपरास्त्वमावास्यायां विशेषाः।

यथा हारीतः।

"तुलामकरमेषेषु कन्यायां मिथुने तथा।
भूतविद्धाप्यमावास्या पूज्या भवति यत्नतः॥"

दैवकार्य्यविषयमिदन्तु वचनं बहुभिर्न लिखितम्।

अथ वारादियोगैः पुण्यतमत्वम्।

तत्र व्यासः।

"अमावास्यां यदा वारो भवेद्भूमिसुतस्य च।
गोसहस्रफलन्दद्यात् स्नानमात्रेण जाह्नवी॥
सिनीवाली कुहूर्वापि यदि सोमदिने भवेत्।
गोसहस्रफलं दद्यात् स्नानं यन्मौनिना कृतम्॥
अमावास्यां यदा मैत्रविशाखास्वातियोगिनी।
श्राद्धे पितृगणस्तृप्तिं तदाप्नोत्यष्टवार्षिकीम्॥
अमावास्या यदा रौद्रे पुष्यर्क्षे च पुनर्व्वसौ।
द्वादशाब्दं तदा तृप्तिं प्रयान्ति पितरोऽर्च्चिताः॥
वासवाजैकपादर्क्षे पितॄणां तृप्तिमिच्छताम्।
वारुणेन त्वमावास्या देवानामपि दुर्लभा॥"

मैत्रमनुराधा, रौद्रमार्द्रा, वासवो धनिष्ठा, अजैकपादः पूर्व्वभाद्रपदा, वारुणं शतभिषा।

"नवस्वृक्षेष्वमावास्या यदा स्यादपराह्णिकी।
श्राद्धे मूलफलेनापि पितॄणामुत्सवाय सा॥
माघासिते पञ्चदशी कदाचि-

दुपैति योगं यदि वारुणेन ।
ऋक्षेण कालः स परः पितृणा-
मत्यल्पपुण्यैर्नृप लभ्यतेऽसौ ॥
काले धनिष्ठा यदि नाम तस्मिन्
भवन्ति भूपाल तदा पितृभ्यः ।
दत्तं जलान्नं प्रददाति तृप्तिं
वर्षायुतं तत्कुलजैर्मनुष्यैः ॥
तत्रैव चेद्भाद्रपदास्तु पूर्व्वाः
काले पितृभ्यः क्रियते तदा मैः ।
श्राद्धं परां तृप्तिमवाप्नुवन्ति
स्वर्गं समग्रं पितरः समस्ताः ॥

"श्रवणाश्विधनिष्ठार्द्रानागदैवतमस्तके ।
यद्यमा रविवारेण व्यतीपातः स उच्यते ॥"

श्रवणाश्विनीधनिष्ठार्द्राऽश्लेषाणां मस्तके प्रथमपादे । न तु मस्तकं मृगशिरो लोकशास्त्रतोऽप्रसिद्धेः । तथा द्वन्द्वसमासं कृत्वा समाहारपरत्वं वाच्यम्, अन्यथा मस्तकमित्येकवचनं न स्यात् । तथाचास्वार्थपरत्वं सर्व्वपदानां स्यात्, षष्ठीसमासे तु मस्तकपदस्यैव स्वार्थपरत्वं भवेत् ।

"पञ्चाननस्थौ गुरुभूमिपुत्त्रौ
मेषे रविः स्याद्यदि शुक्लपक्षे ।
पाशाभिधाना करभेण युक्ता
तिथिर्व्यतीपात इतीह योगः ॥"

अयन्तु द्वादशीव्यतीपातः। योऽस्मोकेन तु स्वल्पवृहद्ग्रन्थभेदेन द्वयमेवोक्तम्, बलाबलनिरूपणाक्षमत्वात्। नक्षत्रयोगे वर्त्तमान एव तन्निमित्ता क्रिया कार्य्या।

तदाह मार्कण्डेयः।

"कृत्तिकादिभरण्यन्तं वारावारविसप्तकम्।
नैते संयोगमात्रेण पुनन्ति सकलान्तिथिम्॥"

अथ कात्यायनः।

"स्वधनवदमावास्यां स्रोतःसु वेति"।

इति तिथिगोचरबहुविधविवादतमसा तिरोहितो विद्वान्॥
तिथितत्त्वं सुव्यक्तं चकार युक्तिप्रदीपशतैः॥

अथ पूर्व्वाह्लादिकं विविच्यते।

तदा द्विधाविभक्ताह्नः पूर्व्वो भागः पूर्व्वाह्नः, अपरो भागोऽपराह्ल इति कालद्वयं यदाश्रित्य—

पूर्व्वेद्युरुपवासः स्यात् पूर्व्वाह्ले स्वापबोधयोः।
अपराह्ले यदा रात्रौ तदहर्नियमं विदुः॥

अत्र हि पूर्व्वाह्लपदेनाह्नः पूर्व्वार्द्धस्य ग्रहणम्, अपराह्लपदेन चापरार्द्धस्य, अन्यथा मध्यन्दिने स्वापप्रबोधयोः तन्निमित्तक्रियाकालो नाभिहितः स्यात्। न च पूर्व्वाह्लापराह्लपदयोरन्यतरन्मध्याह्नोपलक्षणमिति वाच्यं विनिगमनाकारणाभावादनुष्ठानानध्यवसायापत्तेः। रात्रौ तु स्वापादिषु रात्रावुदयमापन्न इत्यनेनैवोदय-

मुपलक्षणीकृत्य रात्रिकालस्य निर्द्दिष्टत्वे तथा विनिगमः। 'पूर्व्वाह्ने चेदमावास्या नापराह्ने भवेद्यदी'त्यत्रापि कारणद्वयं निर्द्दिष्टम्। तथा 'प्रतिपत्तु त्वमावास्या पूर्व्वाह्नव्यापिनी यदी'-त्येतदपि पूर्व्वाह्ने व्याप्तिमपराह्ने व्याप्तिञ्च वदद्दह्नो द्विधैव विभागं दर्शयति। अन्यथा 'मध्याह्नव्यापिनी'त्युक्तं स्यात्।

तथा कात्यायनः।

"सभास्थाने तु पूर्व्वाह्ने कार्य्याणां निर्णयं नृपः।
कुर्य्याच्छास्त्रप्रणीतेन मार्गेणामित्रकर्षणः॥
दिवसस्याष्टमं भागमह्नो भागत्रयन्तु यत्।
स कालो व्यवहाराणां शास्त्रदृष्टः परः स्मृतः॥"

दिवसमष्टधा विभज्याष्टमं, प्रथमार्द्धप्रहरं विहायापरभागत्रये पूर्व्वाह्नरूपे कुर्य्यादिति दिनार्द्धस्य पूर्व्वाह्नतां दर्शयति।

तथा मनुः।

"यथा चैवापरः पक्षः पूर्व्वपक्षाद्विशिष्यते।
तथा श्राद्धस्य पूर्व्वाह्णादपराह्णो विशिष्यते॥"

दिनस्य त्रिभागत्वे पूर्व्वाह्नमध्याह्नाभ्यामपराह्णो विशिष्यत इति ब्रूयात्, पूर्व्वापरपक्षदृष्टान्ताच्च। तद्वदेव पूर्व्वाह्णापराह्नपक्षयो-रप्यवच्छेदादवस्थितिरित्यवगम्यते।

व्यक्तञ्च ब्रह्माण्डपुराणे।

"शुक्लपक्षस्य पूर्व्वाह्ने श्राद्धं कुर्य्याद्विचक्षणः।
कृष्णपक्षे पराह्ने तु रौहिणन्तु न लङ्घयेत्॥"

रौहिणं नवमघटिका। तत्पर्य्युदासात् प्रहरद्वयादूर्द्ध्वमपराह्न

इति ज्ञापयति। अतएवोक्तं जितेन्द्रियेण,—"पूर्व्वापराह्णौ च यद्यपि विष्णुपुराणादिषु नाड़ित्रयं पूर्व्वापराह्णस्य तावानित्युक्तम्। तथापि पूर्व्वाह्णकृत्यस्य मध्याह्नं यावत् स्वकाललाघव एव च। अपराह्णस्य च मध्याह्नापराह्णानन्तरं प्रवृत्तस्य सूर्य्यानुवृत्तिं यावदिति तत् प्रत्येतव्यम्। श्रुतौ स्मृतौ च पूर्व्वापराह्णाभ्यामपि दिनविभागादित्यन्तम्। तस्माद्रात्रेः पूर्व्वापरार्द्धरात्रविभागवदह्नोऽपि पूर्व्वापराह्णविभागेनैव द्विधा विभागः। यत्तु क्वचित्त्रिधा विधानं तत् पूर्व्वापराह्णयोरेकैकदेशाभ्यां मध्यन्दिनं पृथक्कृत्यैकोद्दिष्टादिश्राद्धविधानार्थम्।

"पूर्व्वाह्णे दैविकं कार्य्यमपराह्णे तु पैतृकम्।
एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम्॥
आमश्राद्धन्तु पूर्व्वाह्णे सिद्धान्नेन तु मध्यमे।
पार्व्वणञ्चापराह्णे तु वृद्धिश्राद्धन्तु नाग्निकम्॥"

वृद्धौ तु क्वचित्प्रातः क्वचिन्नाग्निकमिति विधानं तत्पूर्व्वावगतविवाहादिनिमित्तं प्रातः, पुत्त्रजन्मादिनिमित्तन्तु नाग्निकमिति व्यवस्था।

पराशरेण च पञ्चधा विभक्तमाह।

"लेखाप्रभृत्यथादित्ये त्रिमुहूर्त्तगते रवौ।
प्रातस्तनः स्मृतः कालो भागश्चाह्नस्तु पञ्चमः॥
सङ्गवस्त्रिमुहूर्त्तस्तु मध्याह्नस्तत्समः स्मृतः।
ततस्त्रयो मुहूर्त्ताश्च अपराह्णः प्रकीर्त्त्यते॥
पञ्चमोऽथ दिनांशो यः स सायाह्न इति स्मृतः।

यद्यद्येतेषु विहितं तत्तत्कार्य्यं विजानता ॥"

दिवसस्य पञ्चदशांशो मुहूर्त्तः ।

तदाह वराहमिहिरः ।

"अह्नः पञ्चदशांशो रात्रेश्चैव मुहूर्त्त इति संज्ञा ।
स च विज्ञेयस्तज्ज्ञैश्छाया यत्राम्बुभिर्युक्ता ॥

तेनोदयादित्यमण्डलरेखादर्शनात् प्रभृति मुहूर्त्तत्रयं यावत् प्रातःकालस्ततः परं तावानेव सङ्गवः । ततोऽपि परं तावानेव मध्याह्नः । ततः परं तावानेव अपराह्णः । स च व्यतीपात-नामश्राद्धक्रियायां व्यतीपातवत् बहुफलप्रदातृत्वात् । ततोऽपि परस्तावानेव सायाह्नः । सोऽपि चापराह्णावयव एवाल्पफलत्वेन पृथग्दर्शितः ।

अतएव छन्दोगपरिशिष्टे कात्यायनः ।

"पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः ॥
यदा चतुर्द्दशी यामं तुरीयमनुपूरयेत् ।
अमावास्या क्षीयमाणा तदैव श्राद्धमिष्यते ॥"

तृतीयांशोऽपराह्णः सायाह्नसहितोऽन्यथा अपराह्णे श्राद्धविधौ समीपपर्य्युदासो न स्यात् । तदा च दिवसस्य चतुर्थप्रहर-श्चतुर्द्दशी अनुपूरयेत्सम्यक् पूरयेदित्यमावास्यापरदिने क्षयगामि-तया व्यतीपातापरनामापराह्णांशं न व्याप्नोति तदा परस्मिन्नहनि श्राद्धमिष्यते । कर्त्तव्यतया चतुर्थे प्रहरे अमावास्याप्राप्तावपि न चतुर्थयामम् अनु पश्चात् तृतीयं यामं पूरयेद्यदीति योग्यौ-

कीयव्याख्यानमादरणीयम् । श्रुतहान्यश्रुतकल्पनापत्तेः तुरीयमिति कर्म्मतया अवगम्यमानं परिहाय द्वितीयां कर्म्मप्रवचनीययोगेनोपपदविभक्तितया वर्णयित्वा कर्म्मतया द्वितीयस्याध्याहारात् । अनुपूरणञ्चासम्यक् पूरणं लोकप्रसिद्धम् ।

यच्चोक्तं वायुपुराणे ।

"चतुर्थे प्रहरे प्राप्ते यच्छ्राद्धं कुरुते नरः ।
आसुरन्तद्भवेच्छ्राद्धं दाता च नरकं व्रजेत् ॥"

यच्च मत्स्यपुराणम् ।

"सायाह्नस्त्रिमुहूर्त्तः स्यात् श्राद्धं तत्र तु निन्दितम् ।
राक्षसी नाम सा वेला गर्हितं पितृकर्म्मसु ॥"

अयमप्येतत्तु निन्दयतीति यत् पूर्व्वमुहूर्त्तद्वयप्रशंसार्थं न तु कर्त्तव्यतार्थम् ।

तथा वायुपुराणे ।

"दिवसस्याष्टमे भागे मन्दीभूते दिवाकरे ।
वृथांश्राद्धं हि कुर्व्वाणो दाता च नरकं व्रजेत् ॥"

मुहूर्त्तद्वयार्थं यामैकभागेनाष्टधा विभक्तस्याह्नोऽष्टमभागो दिनार्द्धप्रहरः । यदभिप्राययुक्तमष्टमे लोकयात्रा वहिः सन्ध्या ततः पुनरिति पूर्व्ववचनेन चतुर्थप्रहरप्राप्तिमात्र एव निषिध्यते । पुनरष्टमभागे निषेधानुपपत्तिः ततश्चोत्तरोत्तरजघन्यार्थं वचनम् । अतएवाष्टम इत्यभिधाय पुनर्मन्दीभूत इति विशेषणादतिसन्ध्यासमीपस्यैव निषेधः ।

तथाच ।

"वनस्पतिं गते सोमे छाया या पूर्व्वगामिणी ।
गजच्छाया तु सा प्रोक्ता पितॄणां दत्तमक्षयम् ॥
नरस्य द्विगुणच्छाया गजच्छायेति कीर्त्तिता ।
अपराह्ले त्वमावास्या तत्र दत्तं न पश्यति ॥"

शास्त्रानतिक्रमणमात्रं भवतीत्यर्थः ।

अतएव ।

"पिण्डान्वाहार्य्यकं श्राद्धं क्षीणे राजनि शस्यते ।
वासरस्य तृतीयांशे नातिसन्ध्यासमीपतः ॥"

इति पर्य्युदासो न स्यात् ।

यदपि उक्तं मत्स्यपुराणे ।

"ऊर्द्धं मुहूर्त्तात् कुतपाद्यन्मुहूर्त्तचतुष्टयम् ।
मुहूर्त्तपञ्चकं चैतत् स्वधाभवनमिष्यते ॥"

कुतपेन सह पञ्चकम् । एतत् स्वधाभवनमिति एतदपि प्राशस्त्यर्थं तत्रापि पञ्चके कुतपरौहिणाख्यं मुहूर्त्तद्वयमेकोद्दिष्टार्थं ततः परन्तु मुहूर्त्तत्रयमपराह्णस्य प्रशस्ततरमित्यर्थः ।

अतः ।

"पूर्व्वाह्ले दैविकं श्राद्धमपराह्ले तु पैतृकम् ।
एकोद्दिष्टन्तु मध्याह्ने प्रातर्वृद्धिनिमित्तकम् ॥"

एतदपि तथैव वर्णनीयम् ।

अतएव जितेन्द्रियेण ।

"रौद्रश्चैत्रश्च मैत्रश्च तथा सारभटः* स्मृतः ।

---

* शालकटः स्मृत इति कालमाधवीये पाठः ।

सावित्रो विजयश्चैव* गान्धर्व्वः कुतपस्तथा ॥
रौहिणेयो विरिञ्चिश्च जयोऽथ† नैर्ऋतस्तथा।
महेन्द्रो वारुणश्चैव भटः पञ्चदश स्मृताः ॥"

एतान् मत्स्यपुराणोक्तानेकैकमुहूर्त्तपरिमितान् यावन्नियतक्रमसंज्ञानभिधाय दर्शितम्। ये रौद्रादयो भटान्ताः पञ्चदश मुहूर्त्तास्तत्र रौद्रादिरौहिणेयान्ताः पूर्व्वाह्लसाध्यदेवकार्य्याय विहिताः। विरिञ्चिप्रभृतयश्च भटान्ताः पितृक्रियायाम्। तत्रापि पार्व्वणपिण्डान्वाहार्य्यादिषु विरिञ्चिजयनैर्ऋतमपराह्लव्यतीपातापरनामकं प्रशस्तम्। यमधिकृत्यामावास्यायामपराह्ले पिण्डपितृयज्ञेनाचरन्तीत्यादि श्रुतिस्मृतयः। यस्तु माहेन्द्रवारुणभटत्रिमुहूर्त्तात्मकः सायाह्नः सोऽपराह्लसम्भवे सति निन्दितः पितृकृत्य इत्यन्तम्। अत्र तु यत् जितेन्द्रियेणोक्तम् रौहिणेयोऽपि पूर्व्वाह्लकार्य्यविहित इति तत्परं नानुमन्यामहे। दिनस्य द्विधा त्रिधा पञ्चधा दशधा भागेषु रौहिणस्य पूर्व्वाह्लेऽनुप्रविष्टत्वात्। अतएव रात्रौ श्राद्धं न कुर्व्वीत इत्यनेन रात्रिसन्ध्ययोरेकान्तपर्य्युदासः। अन्यथापराह्लविधिना सायाह्नादेः पर्य्युदस्तत्वाद्विविरित्यनर्थकं स्यात्। ततश्च सायाह्नस्य नातिनिन्दितत्वम्, किन्तु व्यतीपातनाम्नः सकाशात् रात्रिसन्ध्ययोस्तु सर्व्वथैवेति विशेषः। तथान्धुकेनापि परमार्थतस्तु त्रिधा दिवसं विभज्य यः

---

* सावित्रश्च जयन्तश्च कालमाधवीये पाठः।

† विजयो नैर्ऋतस्तथा कालमाधवीये पाठः।

पूर्व्वो भागः स पूर्व्वाह्णो मध्यो मध्याह्नोऽन्योऽपराह्ण इत्यभिधाय उक्तमपराह्णस्य पूर्व्वभागे श्राद्धकरणे शक्तौ सत्यां परभागस्य निन्दितत्वम्। प्रमादादिना तु तत्राकरणे परभागेऽप्यदोष इत्यर्थः। एकोद्दिष्टन्तु मध्याह्न इत्युक्तम् स च गान्धर्व्वकुतप-रौहिणेयैस्त्रिभिस्तत्रापि रौहिणेयस्य प्राशस्त्यम्।

यथा वायुपुराणोक्तम्।

"खं यत्र गोपतिर्गोभिः कार्त्स्न्येन तपति क्षणे।
स कालः कुतपो नाम पितॄणां दत्तमक्षयम्॥"

खं यत्र गोपतिर्गोभिः कार्त्स्न्येन तपति क्षिताविति वा पाठः। गोभी रश्मिभिः।

यथा भविष्यपुराणम्।

"दिवसस्याष्टमे भागे मन्दीभूते च भास्करे।
स कालः कुतपो ज्ञेयः पितॄणां दत्तमक्षयम्॥"

तमेव स्पष्टयति आपस्तम्बः।

"सप्तमात् परतो यस्तु नवमात् पूर्व्वतः स्थितः।
उभयोरपि मध्यस्थः कुतपः स उदाहृतः॥"

अशक्तौ तु तत्रारम्भोऽपि कार्य्यः।

तत्राह श्लोकं गौतमः।

"आरभ्य कुतपे श्राद्धं कुर्य्यादारौहिणं बुधः।
विधिज्ञो विधिमास्थाय रौहिणन्तु न लङ्घयेत्॥"

मध्याह्नग्रहणञ्च सति सम्भवेऽप्राप्तौ तु दिनमात्रादरः।

अत्रैव याज्ञवल्क्यः।

"मृताहनि तु कर्त्तव्यं प्रतिमासन्तु वत्सरम् ।
प्रतिसंवत्सरञ्चैवमाद्यमेकादशेऽहनि ॥"

अत्र प्रतिसंवत्सरमिति श्रुतिः मृताहनि मृततिथाववश्यकर्त्तव्यताप्रतीतेः। नित्यवत् कुतपादिकालस्याप्रवृत्तेः तद्विरोधेन कुतपादौ फलभूयस्त्वमेव वाच्यम् ।

आह सत्यव्रतः ।

"यस्मिन् राशिगते भानौ विपत्तिं यान्ति मानवाः ।
तेषां तत्रैव कर्त्तव्याः पिण्डदानोदकक्रियाः ॥"

तथा प्रचेताः ।

"प्रेतमासस्य यः पक्षः तत्तिथौ प्रतिवत्सरम् ।
यावत् स्मरति पौत्रोऽपि एकमुद्दिश्य दापयेत् ॥"

कार्त्तिकादिमासषट्के च कुतपादिव्यभिचारस्य बहुशः दर्शनात् प्रतिसंवत्सरश्रुतिविरोधात् । न च पतितत्वेन कालान्तरे तत्क्रियापाताभावात् विहितकालप्राप्तौ सूतकादिनाऽकरणे पातो भवति । अन्यथा नित्यं पातापत्तेः ।

अतएवाह ।

"श्राद्धविघ्ने समुत्पन्ने मृताहाविदिते तथा ।
एकादश्यां प्रकुर्व्वीत कृष्णपक्षे विशेषतः ॥"

एकोद्दिष्टन्तु सिद्धान्नेनैव कार्य्यम् ।

तदाह ।

"एकोद्दिष्टन्तु यच्छ्राद्धं पक्वान्नेनैव कारयेत् ।
पार्व्वणे वाथ संप्राप्ते श्रुतं वा यदि वाश्रुतम् ॥"

शृतं पक्वम्। शृताशृतयोः पार्व्वणे विकल्पः। एतच्च साग्नेः।
निरग्नेस्त्वाह शातातपः।

"आमश्राद्धप्रदोऽनग्निः सर्व्वत्रैव मनीषिणः।
तेनाग्नौकरणं कुर्य्यात् पिण्डांस्तेनैव निर्वपेत्॥"

एकोद्दिष्टे तु पाकाशक्तौ अपक्वमपि तथा।

"अपत्नीकः प्रवासी च यस्य भार्य्या रजस्वला।
आमश्राद्धं द्विजो दद्यात् शूद्रो दद्यात् सदैव हि॥"

अपत्नीकत्वादिकमसामर्थ्योपलक्षणम्। तेनासति पक्वान्ने आमपात्रेण कुर्य्यात्। शूद्रेण सदैवामपात्रेण देयम्। आमपात्रेण तु द्विजेन श्राद्धकरणे पूर्व्वाह्णे कर्त्तव्यम्।

आमपात्रन्तु पूर्व्वाह्णे सिद्धान्नेन तु मध्यमे।
पार्व्वणञ्चापराह्णे तु वृद्धिश्राद्धन्तु नाग्निकम्॥

ननु शूद्रस्यामपात्रक्रियाकृतो न पूर्व्वाह्णे। एकोद्दिष्टन्तु मध्याह्ने इत्यस्य बाधापत्तेरिति चेन्न, द्विजानामप्यविशेषात् दृश्यते। विधिद्वयं तावच्छ्रूयते। तत्र सिद्धान्नेन क्रियायान्तावत् एकोद्दिष्टन्तु मध्याह्ने इति निर्व्विवादम्। नैमित्तिकन्तु आमपात्रं द्विजानां विहितम्। तत्र एकोद्दिष्टन्तु मध्याह्ने इति न प्रवर्त्तते। पूर्व्वाह्णविधेर्निर्विषयत्वापत्तेः। शूद्रविषयत्वमस्यास्त्विति चेन्न, मध्याह्नविधेरनित्यवत्सिद्धान्नविधिना नैमित्तिकामपात्रविधिना चैकवाक्यत्वे वैरूप्यापत्तेश्च। पूर्व्वाह्णेऽधिकृतशूद्रविषयामपात्रविधेर्नैमित्तिकेन द्विजसम्बन्ध्यामपात्रविधिना चैकवाक्यत्वे तदेव दूषणम्। तस्मात् पूर्व्वाह्णविधेर्नैमित्तिकद्विजसम्बन्ध्यामपात्र-

गोचरो मध्याह्नविधिस्तु शूद्रस्यापीति सिद्धम्। किञ्चामं शूद्रस्य पक्वान्नमिति पक्वान्नधर्म्मतया विहितत्वात्। पक्वान्नेन च मध्याह्न-विधानात् शूद्रस्यापि तथैव युक्तम्। ननु यस्मिन् राशिगते भानाविति विरुद्धम्।

"आब्दिके पितृकृत्ये च चान्द्रमानं प्रशस्यते"

इति चान्द्रमिष्टम्, तथाब्दिक इत्यादिना चान्द्रे विहितत्वात्। उच्यते, चान्द्रमानेनैकवत्सरे पूर्णे आब्दिकश्राद्धकरणात् नहि तद्राशिस्थसूर्य्ये मृततिथौ क्रियमाणं श्राद्धं सौरेण वत्सरेण क्रियते। प्रथमं सौरमासस्योपक्रमात् प्रभृति द्वादशमाससमाप्तौ सौर-वत्सरो भवति। न च नियमेन सौरमासस्यादौ नराणां मरणं भवति। न चैकस्यापि सौरादौ मृतस्य सौरद्वादशमासान्ते सा तिथिर्भवति, वत्सरेण द्वादशतिथिवृद्धेः। तस्माद्यद्राशिस्थे मृतं तद्राशिस्थ एव सूर्य्ये श्राद्धक्रिया चान्द्रमानेन संवत्सरेणैव भव-तीति चान्द्रमिष्टन्तथाब्दिके इत्युक्तविधिविरोधाच्च। अथवा प्रथमाब्दसमाप्तिपर्य्यन्तं श्राद्धमाब्दिकं तच्च प्रतिमासञ्चान्द्रमानेनैव क्रियते इत्यविरोधः।

इत्यपराह्लादिविवेकः।

## अथ जन्ममासादिविवेकः।

जन्मोदये जन्मनि वासरे वा
मासे तथा जन्मनि जन्मभे वा।

अल्पाल्पविद्योऽपि नरः सभायां
प्रख्यातविद्यो भवति व्रतेन ॥
"जन्ममासं हितं श्राद्धे विवाहे व्रतबन्धने ।
प्रतिष्ठार्घ्यक्रियारम्भप्रवेशे नववेश्मनः ॥
यो जन्ममासे क्षुरकर्म्मयात्रां
कर्णस्य वेधं कुरुते च मोहात् ।
नूनं स रोगी* धनपुत्त्रनाशं
प्राप्नोति मूढ़ो वधबन्धनानि ॥"
"जन्ममासे न कर्त्तव्यं सततं हितमिच्छता ।
चौरयानाव्रतोद्वाहं गृहार्घ्यमशुभं जगुः ॥"

अत्र निषेधानुपालनं विविच्यते ।

तत्र मांसाशने पञ्चदशीत्यादिदोषश्रुतिसामर्थ्येन यो ब्राह्मणायावगुरेत्तं शतं † यातयेदितिवन्निषेधविधौ क्लृप्तश्चिन्त्यते । कालानुवृत्तिपर्य्यन्तं वा न वा, तत्र यत्कालीननिषिध्यमानक्रियाप्रवृत्तिमतो निषेधविधावधिकारात्तत्तिथ्यनुवृत्तिपर्य्यन्तमेव तस्याधिकारोऽवगम्यते । न हि कलञ्जभक्षणोद्यतः कुतश्चित् कारणात् सकृन्निवृत्तस्य निषेधानुपालनं सकृद्वृत्तमिति कलञ्ज-

* नूनं स रोगं इति क्वचिद्ग्रन्थे पाठः ।

† शतेन इति वार्त्तादिग्रन्थे पाठः ।

भक्षणनिषेधो न पुनस्तन्निवर्त्तयति किन्तर्हि भक्षणप्रवृत्ति-मात्रमधिकारिविशेषणं यदा यदा भवति तदा तदैव निषेध-विधिरपि तन्निवारयति। तद्वदत्रापि कालविशेषावच्छिन्न-मांसभक्षणमपि प्रवृत्तिमात्रनिमित्तस्याधिकारेण विशेषणत्वात् तत्कालपर्य्यन्तमेव निषिद्धं निवारयति। नैमित्तिके तु श्राद्धादि-विधौ अमावास्याविशिष्टजीवनस्याधिकारिविशेषणस्यैकवाक्य-त्वात्। सकृत्करणेनैव शास्त्रस्य सफलत्वान्नैकामावास्यायामेव पुनः पुनः क्रियार्थविधेर्गौरवापत्तेः। न हि तत्र सकृत्करण-मेव शास्त्रं विना सिध्यति। अमावास्याभेदे तु पुनस्तदव-च्छिन्नजीवनभेदादधिकारव्यावृत्त्या शास्त्रार्थोऽप्यावर्त्तते। अत्र तु यद्यमावास्यानिषेधं विनापि तत्प्राप्तेः न ह्यमावास्यायां मांसभक्षणक्षणात् प्रभृति तदन्तपर्य्यन्तं भक्षयति, ततश्च भक्षणे-तरकाले निवृत्तिः, अप्रवृत्तस्य प्रवृत्त्युपपत्तेः*। सत्यं प्रवृत्त्यु-पाधिना प्रागभाव एव† साध्यमाना निवृत्तिरुच्यते, न तु प्रवृत्ति-रपि साध्यतयोपदिश्यते, तद्वत एवाधिकारात्। अतः प्रागभाव एव कालान्तरतया साध्यभावेनोपदिश्यते‡। स चाप्रवृत्तस्यापि भक्षणकारणमननुतिष्ठतः सिध्यत्यवच्छिन्नतया जीवनमिव प्रवृत्तिरपेतकामेवाधिकारिविशेषणं तथापि तन्निमित्तासकृत्-

---

* निवृत्त्यनुपपत्तेरिति स्मार्त्तसम्मतपाठः।

† प्रवृत्त्युपाधिना विनाशं प्राप्तन् प्रागभाव एव स्वनिवृत्तिनिराकरणादिति अधिकम् एकादशीतत्त्वे स्मार्त्तेन लिखितम्।

‡ कालान्तरसम्बन्धितया साध्यत्वेनोपदिश्यते इति च तत्र तेन लिखितम्।

क्रियात्रेति सकृत्क्रियापर्य्यवसायित्वे विफलो विधिः। तस्मात् विधिनिषेधेष्वधिकारिविशेषणीभूतायाः प्रवृत्तेर्यावत्कालमनुवृत्तिः तावत्कालमनुवृत्तौ साफल्यं* न पुनर्निमित्तान्तरवत् सकृदनुष्ठानेनैव शास्त्रार्थसम्पत्तिः। ततश्च कृत्स्नामावास्यायामेव निषेध इति नास्त्यपेक्षा। कस्मिन्नमावास्याक्षणे निषेधोऽनुमन्यताम्। नात्र युग्मविधिः। तन्न्यायमूलमेव व्याख्यातृवचनम्।

"तत्र पूज्ये विधेर्वृत्तिर्निषेधः कालमात्रके।
निमित्तं कालमादाय वृत्तिर्विधिनिषेधयोः॥
तिथीनां पूज्यता नाम कर्म्मानुष्ठानतो मता।
निषेधस्तु निवृत्तात्मा कालमात्रमपेक्षते॥"

## अथ तैलनिरूपणम्।

तत्र तैलपदेन विधौ वा निषेधे वा तिलभवं तैलम् इति योगेन तिलभव एव स्नेहविशेषोऽभिधीयते न तु सर्षपादि, समुदायशक्तिकल्पनानुपपत्तेः। वीजप्रभवस्नेहसामान्याभिधानं हि तदा वाच्यम्। न च सामान्येन योगः सम्भवति, अतएव यौगिकैः शब्दैर्व्यक्तिरेवाभिधीयते। व्यक्तयश्च नानाजातीयवीजसम्भवाः परस्परं भिद्यन्ते। न चैकव्यक्तियोगेऽत्यन्तायोगव्यावृत्त्या

* तस्मान्निषेधविधिषु काकवन्तो देवदत्तस्य गृहा इतिवत् तटस्थत्वेनाधिकारिविशेषणीभूतायाः प्रवृत्तेर्यावत्कालमनुवृत्तिस्तावत्कालमेव निवृत्तौ साफल्यम् इति च तत्रैव ग्रन्थे पठितम्।

व्यक्त्यन्तरेऽपि यौगिकत्वम्। रथकारपदस्याप्येकस्यामेव व्यक्तौ योगेन सर्व्वत्र यौगिकापत्तेः। ननु तैलपदस्य यौगिकत्वे मोदकादिष्वपि प्रयोगः स्यात्। स्नेहत्वमुपाधेरिति चेन्न, उपाधिकल्पना चेदरं समुदायशक्तिरेव कल्प्यतां, वीजप्रभवस्नेहमात्रे प्रयोगदर्शनात्। उच्यते, रूढिवादिनापि वीजप्रभवत्वस्योपाधेरेव स्यात्। अन्यथा प्राणिभवस्नेहेऽपि प्रयोगापत्तेः। अतोऽत्र यौगिकत्वमेव उपाधितो युक्तं न रूढिः। न च वीजप्रभवमात्रेऽपि निरुपपदतैलप्रयोगः। करञ्जैरण्डतैलादिष्वपि दर्शनात्। सार्षपेऽस्तीति चेन्न, तत्राप्युभयत्रार्थगतैकरूपाभावात् अनेकार्थतापत्तेः। योगस्तु तिलसम्भवस्नेहस्थाने प्रचुरसादृश्यात् सार्षपेऽपि प्रयोगो वर्णनीयः। सोपपदप्रयोगस्य च प्राणिभवस्नेहेऽपि गोतैलं शिशुमारतैलमिल्लिशस्य तैलमित्यादिषु दर्शनाद्दुग्धसम्भवस्नेहसामान्यवचनत्वमेव कुतो नाङ्गीक्रियते? किञ्च नारिकेलादिवीजसम्भवेऽपि स्नेहे तैलशब्दो न प्रयुज्यते। किन्तु नारिकेलस्य घृतमिति कथं वीजसम्भवस्नेहवचनताश्रयणम्? किञ्च तैलपदस्य योगानपेक्षस्य सर्षपादिष्वपि मुख्यत्वे सर्षपस्य तैलं सर्षपतैलमिति सिद्धे, यदेतत्सिद्ध्यर्थं स्नेहतैलमिति वक्तव्यं कात्यायनस्य तदनर्थकं स्यात्। यौगिकत्वे सार्षपतैलमिति कलायस्य भक्तशरावमितिवद्विरोधात्तदर्थं तैलवत्प्रत्ययार्थशासनमुपपन्नम्। तेन सार्षपतैलमित्यस्य पदस्य तैलेन च प्रत्ययान्तस्यैकदेशस्तैलशब्दः सर्षपादिस्नेहेषु एकदेशिलक्षणया प्रयुज्यते। उक्तं मन्यमाना च निष्टमानाविष्टेत्यत्र कशब्दोऽनवकाशलक्षणा

न तु तिलभवं तैलमिति यत् साधितं तदेव वा गौणम्। तस्मात् सर्व्वत्र तैलविधौ निषेधे च तिलभवः स्नेहस्तैलपदेनोपादेयः, तस्याप्यपक्वस्यैव निषेधः।

"अमावास्यां न गच्छेत्तु प्राप्तकालामपि स्त्रियम्।
तैलञ्च न स्पृशेदामं वृक्षादींश्छेदयेन्न तु॥"

एवम्।

"कुहूपूर्णेन्दुसंक्रान्त्याञ्चतुर्द्दश्यष्टमीषु च"

इत्यत्रापि तैलपदमपक्वपरमिति। पूर्व्ववचने आममिति विशेषात्।

तथा षट्त्रिंशन्मतञ्च लिखति।

"सूर्य्यशुक्रादिवारेषु निषिद्धासु तिथिष्वथ।
स्नाते वा यदि वास्नाते पक्वतैलं न दुष्यति॥"

सार्षपत्वामेऽपि न निषेधो निषेधाविषयत्वादिति सर्व्वं सुस्थम्।

विद्वत्क्रियामनालोच्य अबोधकरणीमिमाम्।
निरूपयन्ति ये कालं मुधा क्लिश्यन्ति ते बुधाः॥
जितेन्द्रियशङ्खधरान्धूकसभ्यमहरिवंशधवलयोग्लोकैः।
कृतमपि कालनिरूपणमधुना निःसारतां याति॥
करतलगतामलकमिव कालं बालोऽपि वीक्षते येन।
जीमूतवाहनकृतः कालविवेकः परं जयति॥

—

## अथ संक्रान्तिनिरूपणम् ।

तत्र ज्योतिःशास्त्रम् ।

"अयने द्वे विषुवे द्वे चतस्रः षड़शीतयः ।
चतस्रो विष्णुपद्यश्च संक्रान्त्यो द्वादश स्मृताः ॥
मृगकर्कटसंक्रान्ती द्वे तूदग्दक्षिणायने ।
विषुवती तुलामेषे गोलमध्ये तथापराः ॥"

मृगो मकरस्तद्गमनञ्चोत्तरायणम् । कर्कटगमनं दक्षिणायनम् । तुलामेषगमनञ्च विषुवम् । विषुवायनयोस्तु मध्ये विष्णुपदीषड़शीतयः । एता द्वादश संक्रान्तयो गोलमध्ये चक्रमध्ये भवन्तीत्यर्थः ।

तयोरविशेषलक्षणमाह ।

"धनुर्मिथुनकन्यासु मीने च षड़शीतयः ।
वृषवृश्चिककुम्भेषु सिंहे विष्णुपदी तथा ॥"

धनूराशिषु संक्रमणमित्यध्याहार्य्यम् ।

संक्रान्तौ च स्नानदानादिकं श्रूयते भगवतीपुराणे ।

"रविसंक्रमणे पुण्ये न स्नायाद्यस्तु मानवः ।
सप्तजन्मन्यसौ रोगी निर्द्धनश्चोपजायते ॥
संक्रान्तौ यानि दत्तानि हव्यकव्यानि मानवैः ।
तानि तस्य ददात्यर्कः पुनर्जन्मनि विस्तरम् ॥"

तथा ज्योतिःशास्त्रे ।

"अयने कोटिपुण्यन्तु लक्षं विष्णुपदीफलम् ।

षड़शीतिसहस्राणि षड़शीत्यां स्मृतं बुधैः ॥"

यद्‌यत् स्नानादिकं तत्तत् संक्रान्त्यादिषु यथोक्तगुणितं फलम् ।

"शतमिन्दुक्षये दानं सहस्रन्तु दिनक्षये ।

विषुवे शतसाहस्रम् आकामावैष्वनन्तकम् ॥"

आषाढ़ी कार्त्तिकी माघी वैशाखी पूर्णिमास्वित्यर्थः । यद्‌यत् स्नानादिकं तत्तत्संक्रान्त्यादिषु यथोक्तगुणितं फलं ददातीत्यर्थः ।

तत्र संक्रान्तिकालो भगवतीपुराणे दर्शितः ।

"सुस्थे नरे सुखासीने यावत् स्पन्दति लोचनम् ।

तस्य त्रिंशतमो भागस्तत्परः परिकीर्त्तितः ॥

तत्परायुतभागस्तु त्रुटिरित्यभिधीयते ।

त्रुटेः सहस्रभागार्द्धं* तत्कालं रविसंक्रमः ॥"

तदेतस्यातिसूक्ष्मकालस्य कर्म्मायोग्यतया तत्र विहितस्य कथमनुष्ठानमित्यपेक्षायामाहतुः शातातपजाबाली ।

अर्व्वाक् षोड़श नाड्यस्तु परस्तादपि षोड़श ।

पुण्यकालोऽर्कसंक्रान्त्यां धर्म्मविद्भिरुदाहृतः ॥

तथा वैवस्वतः ।

नाड्यः षोड़श पूर्व्वेण संक्रान्तेस्तु परेण च ।

राहोर्दर्शनमात्रेण पुण्यः कालः प्रकीर्त्तितः ॥

तस्य सूक्ष्मसंक्रान्तिकालस्य पूर्व्वाः षोड़श पराः षोड़श कर्म्मार्थमित्यर्थः । इदं सामान्येन संक्रान्तौ उक्तं, विशेषेण पुनराहतुस्तावेव ।

---

* त्रुटेः सहस्रभागो यः स कालो रविसंक्रमः इति रघुनन्दनादिसम्मतः पाठः ।

त्रिंशत्कर्कटके नाड्यो मकरे विंशतिः स्मृताः।
वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश॥
षड़शीत्यामतीतायामष्टिरुक्तास्तु नाड़िकाः।
पुण्याख्यविष्णुपद्याञ्च प्राक् पश्चादपि षोड़श॥

सामान्येन तु संक्रान्तेः पूर्व्वापरकालयोः षोड़शनाड़ीनां पुण्यत्वाभिधानं विष्णुपद्यामुपसंक्रियते विष्णुपदीपदानर्थक्यात्। उभयत इति पदं त्रिंशत्कर्कट इत्यादिषु प्रमाणाभावात् विरोधाच्च।

यथा।

पूर्णे चेदर्द्धरात्रे तु रविसंक्रमणं भवेत्।
प्राहुर्दिनद्वयं पुण्यं त्यक्त्वा मकरकर्कटौ॥
त्रिंशत्कर्कटके पुण्यं मकरे विंशतिस्तथा।
भविष्ये दक्षिणे पुण्यमतीते चोत्तरायणे॥

पूर्णार्द्धरात्रसंक्रमणे दिनद्वयस्य पुण्यत्वविधानात् मकरकर्कटसंक्रान्तिपर्य्युदासस्य अवयवं व्याचष्टे। यस्मादनागतं दक्षिणायनं वृत्तं चोत्तरायणं पुण्यं तस्मान्न तत्र दिनद्वयं पुण्यं किन्तूत्तरायणे परदिनं दक्षिणायने च पूर्व्वदिनं पुण्यमित्यर्थः।

अस्तं गते यदा सूर्य्ये झषं याति दिवाकरे।
प्रदोषे चार्द्धरात्रे वा तदा पुण्यं दिनान्तरम्॥

झषो मकरः। दिनान्तरं परदिनम्। अत्रैव विषये त्रिंशत्कर्कटके पुण्यं मकरे विंशतिरिति दर्शयति। इदमन्यूकेनेत्थं पठितम्।

भविष्यत्ययने पुण्यं त्रिंशदेव तु दक्षिणे।
अतीते उत्तरे नाड्य इति प्राहुः पुराविदः।

षड़शीत्यामतीतायामष्टिनाद्यस्तु नाड़िकाः ॥

अष्टिः षोड़शपर्य्यायः। अत्र दक्षिणायने भविष्यत्त्रिंशन्नाड़ीनां वृत्ते चोत्तरायणे नाद्य इति विंशतिनाड़ीनामेव विशेषविधाना-त्त्रिंशन्नाड़ीसाहचर्य्यावगतानां व्यवस्थापितत्वात् उभयत इत्यनु-षङ्गेष्ववगताविरोधः। किञ्चासम्भवोऽप्युभयतः त्रिंशद्विंशति-नाड़ीनां पुण्यतमत्वस्य रात्रिकालस्यासम्भवात् दक्षिणायनदिनस्य सम्भवात् दक्षिणायनदिनस्य चतुस्त्रिंशत्पलोयपलाधिकत्रय-स्त्रिंशद्दण्डाः, उत्तरायणदिनस्य च षड्विंशतिपलाधिकषड्-विंशदण्डाः। न च दिनान्तरापेक्षसम्भव इति वाच्यं, पूर्व्वापरार्द्ध-रात्रद्वयक्रोड़ीकृतकाले संक्रमणस्य दिनैकमात्रपूज्यत्वात् सम्पू-र्णार्द्धरात्रसंक्रमणे दिनद्वयस्य पूज्यत्वेऽपि मुक्ता मकरकर्कटावि-त्यनयोः पर्य्युदस्तत्वात्। एतदतिरिक्तविषयन्तत्, तस्मादुभय इत्यस्य सर्व्वत्रानुषङ्ग इति दीक्षितवचनस्यार्थं न विद्मः। ननु दक्षिणायनात् पूर्व्वं त्रिंशन्नाड़ीनाम् उत्तरायणाच्च परतः विंशति-नाड़ीनाम् अप्राप्तौ पुण्यता कथं वचनाधीनत्वादस्याः संख्याव-च्छिन्नविषयत्वाद्वचनस्य। उच्यते, अवध्यर्थत्वाद्वचनस्य तावत्-संख्यनाड़ीपर्य्यन्तं पुण्यतमत्वं वदता तत् क्रोड़ीकृतानां यथा-सम्भवं सर्व्वासामेव उक्तमिति न विरोधः। उत्तरायणवच्च षड़शीत्यामपि वृत्तायां पुण्यत्वाभिधानात् पूर्व्वार्द्धरात्रसंक्रमणेऽपि परमेव दिनं ग्राह्यम्। अतीतया पुण्यत्वस्य हेतोरविशेषात् दिनद्वयविधिस्तु विष्णुपद्यां विषुवद्वये च व्यवतिष्ठते।

पुण्याख्यविष्णुपद्यां च प्राक् पश्चादपि षोड़श।

तथा।

"वर्त्तमाने तुलामेषे नाड्यस्तूभयतो दश"

इति चोभयत्रैव उभयपुण्यपृष्ठपुण्यत्वाभिधानात्। पार्श्वत उभयतः षोड़श नाड्यः दश वा ता दिवासम्बन्धिन्य एव ग्राह्याः। अन्यथार्द्धरात्रसंक्रमणे उभयतः षोड़शनाड़ीनां रात्रावेव समाप्तत्वात् कथं पूर्व्वदिने वा संक्रान्तिकालाभावे तन्निमित्तकर्म्माचरणम्। तेन संक्रान्तिपूर्व्वभूतदिनसम्बन्धिन्यः परभूताश्चेत्यस्यार्थो न च रात्रिकालव्यवाये तत्पूर्व्वपरभूतदिनसम्बन्धिन्यो न भवन्ति दिनसम्बन्धिनाड़िकाभिरव्यपेतत्वात्।

अतएव वशिष्ठः।

"अर्द्धरात्रादधस्तस्मिन् मध्याह्नस्योपरि क्रिया।
ऊर्द्ध्वं संक्रमणे चोर्द्ध्वमुदयात् प्रहरद्वयम्॥"

अर्द्धरात्रात् पूर्व्वसंक्रमणेऽपरदिनसम्बन्धिषोड़शनाड़ीनामपि पुण्यत्वप्रसक्तौ तत्रापवादार्थंवचनम्। एवं परार्द्धसंक्रमणे पूर्व्वनाड़ीनां दिनसम्बन्धिनीनामपवादः। अर्द्धरात्रे द्वयोरपि नापवादः। यथारुचि क्रिया पूर्व्वत्र परत्र वा। न तूभयनिमित्तस्य सत्त्वे नैमित्तिकस्यापि सत्त्वात्। ननु संक्रान्तेरव्यवहितावेव पूर्व्वापरकालौ दिवादिविशेषानपेक्षौ कुतो न गृह्येते। उच्यते।

"रात्रौ संक्रमणे भानोर्दिवा कुर्य्यात्तु तत्क्रियाम्।
पूर्व्वस्मात् परतो वापि प्रत्यासत्तेस्तु तत्फलम्॥"

पूर्व्वार्द्धेन दिवाकालस्य विहितत्वात् उभयतो दशषोड़शादिविधानं दिनसम्बन्धिनि व्यवतिष्ठते। अर्द्धरात्रात्तु पूर्व्वसंक्रमणस्य

पूर्व्वस्मादह्नः प्रत्यासन्नत्वात्परसंक्रमणस्य च परस्मादासन्नत्वात् पूर्व्वदिने परदिने व्यवस्थामात्रम्। यथा मध्याह्नस्योपरिक्रिया उदयात्प्रहरद्वयमिति वचनद्वयम्।

ननु रात्रावपि संक्रान्तिनिमित्तं स्नानमाह वैवस्वतः।

"ग्रहणोद्वाहसंक्रान्तियात्रार्त्तिप्रसवेषु च।
स्नानं नैमित्तिकं ज्ञेयं रात्रावपि तदिष्यते॥"

उच्यते, संक्रान्तिस्नानस्यावश्यकर्त्तव्यत्वात् दैवादिना दिवा न कृतं रात्रावपि कार्य्यमिति तस्यार्थः। दिवा कुर्य्यात्तु तत्क्रियां तथा मध्याह्नस्योपरि तत्क्रियेत्यादिविरोधात्। ननु मध्याह्नस्योपरीति विरुद्धम्।

तदाह गार्ग्यः।

"कालान्यूने*ऽर्द्धरात्रे तु यदा संक्रमणम्भवेत्।
तदहः पुण्यमिच्छन्ति गार्ग्यगालवगोतमाः।
सम्पूर्णे चोभयं पुण्यमतिरेके परं दिनम्†॥"

अनेन कृत्स्नस्याह्नः पुण्यत्वाभिधानात् नैतत्तदहरिति परदिननिवृत्त्या पूर्व्वदिनस्य पुण्यतामात्रार्थमेतन्न तु कृत्स्नपरमपि गौरवापत्तेः। मध्याह्नस्योपरिक्रियाविधिविरोधाच्च विषुवायनाभिप्रायञ्चेति वक्ष्यामः। ननु कथं मध्याह्नस्योपरिक्रिया।

---

* कलान्यूने इति स्मार्त्तादिबहुप्रामाणिकग्रन्थे पठितम्।

† सम्पूर्णे चोभयं ज्ञेयमतिरेके परेऽहनि इति स्मार्त्तादिसम्मतः पाठः।

तथाहि ज्योतिःशास्त्रम् ।

"पूर्व्वोत्तरगते भागे रात्रौ संक्रमणं भवेत् ।
पूर्व्वाह्णे पञ्च नाड्यस्तु पुण्याः प्रोक्ता मनीषिभिः ।
अपराह्णे तु पञ्चैव दैवे पित्र्ये च कर्म्मणि ॥"

रात्रेः पूर्व्वभागगते वा सूर्य्ये संक्रमणं यदि स्यात् तदापराह्णस्य वा पञ्च नाड्यः पुण्या इत्याह ।

अतएव ।

"अह्नि संक्रमणे पुण्यमहः कृत्स्नं प्रकीर्त्तितम् ।
रात्रौ संक्रमणे भानोर्दिनार्द्धं स्नानदानयोः ॥"

अत्रार्द्धशब्दो न समग्रविभागवचनस्तस्य नपुंसकत्वेनार्द्धं नपुंसकमिति समासे पूर्व्वनिपातापत्तेः । अर्द्धरात्रवदर्द्धदिनमिति स्यात् । ततश्च पुंलिङ्गोऽयमर्द्धशब्द एकदेशवाची स चैकदेशः पञ्चनाड्य एव पूर्व्वोक्तवचनात् । अतएव लोकेऽप्यध्यष्टप्रहरीया काचित्काचिच्च कोटिसंक्रान्तिरुच्यते । उच्यते पुण्यतमत्वार्थं तदिति गृह्यताम् । एतत्पूर्व्वभूताः परभूताश्चैताभ्यो न्यूनफलाः । तदर्थमेवाह ।

"या याः सन्निहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः ।
रात्रौ संक्रमणे भानोर्विषुवत्ययने दिनम् ॥"

न च पञ्चनाड़ीष्वपि प्रत्यासत्तिविशेषेण फलविशेष इति वाच्यम् । मध्याह्नस्योपरिकालस्य पञ्चनाड़ीनाञ्च पुण्यत्वपुण्यतमत्वविधिमूलेनोपपत्तौ मूलान्तरकल्पनानुपपत्तेः । सर्व्वसंक्रान्तिष्वेव प्रत्यासन्नपञ्चनाड़ीनां पुण्यतमत्वं वेदितव्यम् । रात्रिग्रहणमात्रो-

पलक्षणम्। तेन यत्र यावान् पूर्व्वः परो वा उभयविधो वा तत्र प्रत्यासन्नपञ्चनाड़ीनां पुण्यतमत्वमित्यर्थः। यच्चाह्नि संक्रमणे पुण्यमहः कृत्स्नमिति तत्संक्रमणमात्रश्रुतिः। सर्व्वसंक्रान्तिष्वेव कृत्स्नमहः पुण्यम्। अहनि संक्रमणात्तु तद्विशेषविहितं कालं विनापि तस्मिन्नहनि कर्म्मणा कृतेनाकरणनिमित्तप्रत्यवायपरीहारो भवति। दानादिकमिति यथोक्तकालादल्पफलमिति तस्यार्थः। विषुवत्ययने दिनमिति च। विषुवायनयोस्तु रात्रावपि संक्रमणे दिनमेव कृत्स्नं पुण्यम्। अन्यथा विषुवायनपदद्वयानर्थक्यापत्तेः। तदेवं त्रिविधः संक्रान्तिकालः पुण्यमहः। पुण्यतरविशेषः विहिता नाड्यः पुण्यतमश्चेत् संक्रान्तिप्रत्यासन्नाः पञ्च नाड़िकाः।

विषुवे विशेषमाह।

"विप्रेभ्यः पादुके च्छत्रं पितृभ्यो विषुवे शुभान्।
शक्तून् शर्करया मिश्रान्दद्यात्सजलगर्गरीः॥
यो ददाति तु मेषादौ शक्तूनम्बुघटान्वितान्।
पितॄनुद्दिश्य विप्रेभ्यः सर्व्वं तरति दुष्कृतम्॥"

उपवासार्थं पुण्यतमत्वमाहापस्तम्बः।

"अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः।
अहोरात्रोषितः स्नातः सर्व्वपापैः प्रमुच्यते॥"

तथा समुच्चये।

"उपोष्यैव तु संक्रान्त्यां स्नात्वा योऽर्च्चयति रविम्।
प्रातः पञ्चोपचारेण स काम्यं फलमाप्नुयात्॥

अयने विषुवे चैव त्रिरात्रोपोषितो नरः ।
स्नात्वा यः पूजयेदर्कं स काम्यफलमाप्नुयात् ॥"

इदञ्च पुत्त्रवद्गृहिपर्य्युदासेन मन्तव्यम् ।

तथा स्मरन्ति ।

"संक्रान्त्यां रविवारेण ग्रहणे चन्द्रसूर्य्ययोः ।
पारणञ्चोपवासञ्च न कुर्य्यात्पुत्त्रवान् गृही ॥"

अयनेन गृहिणां पुत्त्रवतां संक्रान्त्यादिषूपवासस्य निषिद्धत्वात् । कस्योपवासस्येत्यपेक्षायां संक्रान्त्यादिभिः स्वनिमित्तस्यैव शीघ्रं बुद्धौ विधानम् । निमित्तान्तरस्याश्रुतत्वात् वारेष्वपि चोपवास-विधिरस्ति स्मृतिसमुच्चये ।

"सप्त वारानुपोष्यैव सप्तधा सप्तजन्मसु ।
सर्व्वपापविनिर्मुक्तः सर्व्वसम्पदमाप्नुयात्* ॥"

एतन्न्यायमूलमेव वचनम् ।

"तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः ।
नानुषङ्गकृते दोषो† यतो नित्यमुपोषणम् ॥"

विषुवाणाञ्च विष्णुपुराणे दर्शितम् ।

"विशाखानां यदा सूर्य्यश्चरत्यंशं तृतीयकम् ।
तदा चन्द्रं विजानीयात्कृत्तिकाशिरसि स्थितम् ॥

---

* सप्त वारान् उपोष्यैव सप्तधा संयतेन्द्रियः ।
सप्तजन्मकृतं पापं तत्क्षणादेव नश्यति ॥
इत्येवंरूपं वचनं स्मार्त्तादिप्रामाणिकग्रन्थकारैः लिखितम् ।

† नानुषङ्गकृतो ग्राह्य इति स्मार्त्तादिसम्मतः पाठः ।

कृत्तिकानां यदा सूर्य्यः प्रथमांशन्तु गच्छति ।
विशाखायान्तदा सूर्य्यस्तृतीयांशे निशाकरः ॥
तदेव विषुवाख्योऽयं कालः पुण्यो विधीयते ।
कृत्तिकाप्रथमे भागे यदा भास्वांस्तदा शशी ॥
विशाखायाश्चतुर्थेऽंशे मुने तिष्ठत्यसंशयः ।
तदा हि विषुवाख्योऽयं कालः पुण्यतमः स्मृतः ॥
तदा दानानि देयानि देवेभ्यः प्रयतैर्नृभिः ।
पितॄनुद्दिश्य देवेभ्यस्तच्चानन्तफलं स्मृतम् ॥"

आह पराशरः ।

"मेषादौ च तुलादौ च विषुवन्तु विभाव्यते ।
दत्तदानस्तु विषुवे कृतकृत्योऽभिजायते ॥"

अथ पद्मपुराणम् ।

"विशाखासु यदा भानुः कृत्तिकासु च चन्द्रमाः ।
स योगः पद्मको नाम पुष्करेष्वतिदुर्लभः ॥"

विशाखातृतीयपादे कृत्तिकायाश्चादिपाद इत्यर्थः । विष्णुपुराणैकवाक्यत्वात् ।

तथा ब्रह्माण्डपुराणम् ।

"मेषान्ते च तुलान्ते च यदा चरति भास्करः ।
विषुवन्तु तदा विद्यादेवमाहुः श्रुतर्षयः ॥"

मेषान्ते सूर्य्ये यदि चन्द्रः तुलान्ते वा सूर्य्ये यदि चन्द्रो मेषान्ते स्यादित्यर्थः ।

अथ पुराणे ।

"मसूरं निम्बपत्राभ्यां पिबेन्मेषगते रवौ ।
न विषं क्रमते तस्य यावदब्दं न पूर्य्यते ॥"

तथा ।

"ये पिचुमर्द्दलाभ्यां मेषगसूर्य्ये मसूरमश्नन्ति ।
मसूरिकारक्तकरी दूरे तेभ्यो नमस्कुरुतः ॥"

पिचुमर्द्दो निम्बः । एतच्च यदा मेषस्थे सूर्य्ये चन्द्रोऽपि मेषे भवति तदा तत्करणीयम् । मेषस्थे रविचित्रा इत्यादिपाठः । संक्रान्तिषु च श्राद्धं पिण्डमन्तरेणैव कार्य्यम् ।

तथा मत्स्यपुराणे ।

"अयनद्वितये श्राद्धं विषुवद्वितये तथा ।
संक्रान्तिषु च कर्त्तव्यं पिण्डनिर्व्वापनादृते ॥"

अथ संक्रान्तिसंग्रहश्लोकौ ।

"विषुवायनयोः पूर्व्वा या सा षड़शीतिरुच्यते शास्त्रे ।
परभूता पुनरनयोर्विष्णुपदी सूर्य्यसंक्रान्तिः ॥
कर्कटे संक्रमणं दक्षिणमयनं तथोत्तरं मकरे ।
मेषतुलासंक्रमणं विषुवद्वितयं जगत्ख्यातम् ॥"

इति संक्रान्तिनिरूपणम् ।

## अथ युगादिनिरूपणम् ।

तत्र भविष्यपुराणे ।

"वैशाखशुक्लस्य तु या तृतीया
नवम्यसौ कार्त्तिकशुक्लपक्षे ।

नभस्यमासस्य तमिस्रपक्षे
त्रयोदशी पञ्चदशी च माघे ॥
युगादयः स्मृता ह्येता दत्तस्याक्षयकारिकाः ।”

तथा ।

“कृतोपवासाः सलिलं ये युगादिदिनेषु च ।
दास्यन्त्यन्नादि सहितं तेषां लोका महोदयाः ॥
वैशाखशुक्लपक्षे तु तृतीयायान्तथैव च ।
गङ्गातोये नरः स्नात्वा मुच्यते सर्व्वकिल्विषैः ॥”

तत्र कश्चिन्मन्यते । न तूत्कर्षौ युगादिष्वित्युत्कर्षनिषेधात् सौर-एव मासि युगादयः। चान्द्रेषु विहितस्य तद्द्वैधे कर्म्मान्तरस्येवास्याप्युत्कर्षः स्यात्तदयुक्तम् । इतरमर्य्यादयोत्कर्षविधिसम्भवान्न सौर-परिग्रहे प्रमाणमिदं भवितुमर्हति । अतएव प्रतिषेधबलेनैव चान्द्रेषु वैशाखादिषु युगादय इति मन्यते शङ्खधरः । तत्र हि विहितस्य चान्द्रद्वैधे पूर्व्वस्य मलिम्लुचत्वेन कर्म्मान्तरवत् युगादिष्वपि उत्कर्षप्राप्तौ न तूत्कर्षौ युगादिष्विति निषेधोपपत्तेः। सौरस्य तु द्वित्वाभावादप्रसक्तप्रतिषेधापत्तेः । तथा माघासिते पञ्चदशी कदाचिदिति सौरफाल्गुने चान्द्रमासस्यामावास्याया युगाद्याया वरुणनक्षत्रयोगेन पुण्यतमत्वाभिधानं चान्द्र एव मासि युगादि-रिति ज्ञापयति । तथा प्रौष्ठपद्यादूर्द्धं कृष्णत्रयोदशीति चान्द्र-भाद्रस्य कृष्णत्रयोदशी युगादिरित्याह। सा हि प्रायशः कन्यागत-एव भवति न चासौ सौरे भाद्रश्चान्द्रस्तु भवति तथा वैशाख-कार्त्तिकयोः शुक्लपक्षे माघभाद्रयोश्च कृष्णपक्षे युगादिरिति

वचनमाह। तौ च पक्षौ चान्द्रस्यैव न सौरस्य। स एव काल-श्चन्द्रक्षयत्वात् पुण्यो युगादित्वात् पुण्यतरो वारुणनक्षत्रयोगाच्च पुण्यतमः।

यच्च।

> "दशहरास्वनुत्कर्षश्चतुर्ष्वपि युगादिषु।
> उपाकर्म्मणि चोत्सर्गे तत् कर्त्तव्यं वृषादितः॥" *

इति तदनाकरमित्युक्तम्। तदप्ययुक्तम्। वैशाखादिपदानां सौरमासवचनत्वात्तथैव युगादीनां युक्तत्वात्। न चाभाकासित-पक्षेष्वित्यत्र गौणचान्द्रग्रहणे यथा कल्पनालाघवादिकारणं तथात्र किमप्यस्ति न च प्रतिषेधानुपपत्तिः। न ह्युपाकर्म्मण उत्कर्षः सौर एव तस्य विधानात्। किन्तु द्विखण्डतिथौ तस्योत्कर्षः पूर्व्वाह्णव्यापिनी तिथिर्गृह्यते दैवत्वादुपाकर्म्मणः। पूर्व्वाह्णे दैविकं कार्य्यमिति विधानात् बह्वृचानां वाजसनेयिनाञ्चापराह्णविधाना-भावात् तथा युगादिषु नोत्कर्ष इत्यर्थः। किन्तु पितृकार्य्यप्रधान-त्वात् प्रथमोपनिपातितत्वात्तृतीयायाश्च द्वितीयायोगेन नवम्याश्चा-ष्टमीयोगेन मकरस्यामावास्यायाश्चतुर्द्दशीयोगेन पूज्यत्वात् युक्तो-ऽनुत्कर्षः त्रयोदश्याश्चतुर्द्दशीयोगेनैव पूज्यत्वेऽपि तदितराभिप्राये-णैवापि बहुवचनमुपपन्नमेव। यद्वा उत्कर्षः कालवृद्धौ स्यादि-त्यभिधाय न तूत्कर्षो युगादिष्वित्युत्कर्षपदस्य पुनः प्रयोगादयं मासान्तरसम्बन्धरूपोत्कर्षनिषेधः। सौर एव विहितत्वादित्यर्थः।

---

* उपाकर्म्ममहाषष्ठीर्ष्वेतदुक्तं वृषादित इति हेमाद्रौ पठितम्।

उपाकर्म्मादिषु तु तिथिद्वयापेक्षोत्कर्षविधानमित्यविरोधः। अन्यथोत्कर्षपदस्य द्विरुच्चारणमनर्थकं स्यात्। न भवेत्तु युगादिष्विति ब्रूयात्। यत्तु माघासित इति प्रौष्ठपद्यूर्द्धमिति द्वितयमुपन्यस्तम् तदतितुच्छं न ह्येतद्वचनद्वयं तयोर्युगादितामाह किन्तु पुण्यतमतां सा चायुगादित्वेऽप्यविरुद्धैव। पूर्व्वं दशहरास्वनुत्कर्ष इति वचनमनाकरमुक्तं तदप्यनुपयुक्तम्। वैशाखादिपदानां सौराभिधायकत्वेनास्यार्थस्य प्राप्तस्य व्याख्या निबध्यते नापि समूलतया वाचकत्वसम्भवात्। सौरेऽपि च मासि शुक्लकृष्णपक्षव्यपदेशो लोके कृत्स्नसम्बन्धाभावेऽपि दृष्ट एवेति न तस्यापि विरोधः। ये तु चान्द्रवाचिनो वैशाखादय इति मन्यन्ते तन्मते दशहरावचनस्यानाकरत्वेन शङ्कितत्वात् न तूत्कर्षो युगादिष्वित्यत्र स्वयमेव चान्द्रे व्युत्पत्त्युपपादितत्वात्। वैशाखकार्त्तिकमाघपदानाञ्च चान्द्रवाचिता भूयसामनुरोधेन नभस्यपदस्यैवैकस्यान्यथावर्णनमुचितम्। न च सौरे निरूढ़लक्षणत्वे मुख्यलाक्षणिकग्रहणसन्देहे नभस्यपदानुरोधेन सौरपरिग्रह इति वाच्यम्। मध्यदेशादौ चान्द्रे मुख्य एव निरूढ़तयास्य स्वयमभिधानात् अतो मुख्यत्वनिरूढ़स्य देशभेदेन साधारण्याच्चान्द्र एव युगादिषूक्तः। अतएव दीक्षितेनैव तदपरितोषेणैव तत्कर्त्तव्यं वृषादित इत्ययमेव पुरस्कृतः। स चानाकरशङ्काव्याकुलितः। तत्कर्त्तव्यं वृषादित इत्यस्य स्थाने माघ्यास्त्वेव विशेषतः इत्यपि केचित् पठन्ति।

योग्लोकेन तूक्तम्।

"प्रतिसंवत्सरश्राद्धे मासश्चान्द्रमसः स्मृतः ।
विवाहादौ स्मृतः सौरो यज्ञादौ सावनः स्मृतः ॥"

तथा ।

"सौरो मासो विवाहादौ यज्ञादौ सावनो मतः ।
आब्दिके पितृकार्य्ये च मासश्चान्द्रमसः स्मृतः ॥"

तदेवमादिवचनपरामर्शात् सौर एव मासि युगादौ युज्यत इत्युक्तं तदतीव हेतुशून्यं कथमेतत् परामर्शाद्युगादिषु सौरस्य युक्तत्व-हेतोरनभिधानात् । वचनद्वयेऽपि विवाहादिपदेनोपादानं युगादेरिति चेन्न विवाहसमानोपनयनचूड़ाकरणादिपरत्वादादि-शब्दस्य युगादिपरत्वे प्रमाणाभावात् । यच्चापरन्तेनैवोक्तम् ।

किञ्च ।

"माघे मासि रटन्त्यापः किञ्चिदभ्युदिते रवाविति ।"

तथा ।

"सूर्य्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमीति ।"

"माघे मासि चतुर्थ्याञ्च शिवमाराध्य चेति ।"

माघे मासि सिताष्टम्यामित्यादिविहितमनुष्ठानं वृषे चाक्षय-तृतीयाकर्म्म मिथुने दशहरास्नानं चान्द्रमाघादिषु निश्चीयमानं हास्यमावहन्तीत्युक्तम् । तत्तदभिधानमेव विद्विषां हास्यमा-वहति हेतुशून्यहास्यमात्राभिधानात् । तस्मात् पूर्व्वोक्त एव हेतुः ।

अत्र श्लोकः ।

"वैशाखादिपदानां सिद्धे रविमासमात्रवचनत्वे ।
विद्विषां कथमिह चान्द्रे गौणकलङ्काङ्कितशङ्का ॥"

यदा तु सौरे वैशाखादौ शुक्लतृतीयादिद्वयम्भवति तदा

"मासि संवत्सरे चैव तिथिद्वैधं यदा भवेत् ।
तत्रोत्तरोत्तमा ज्ञेया पूर्व्वा तु स्यान्मलिम्लुचा ॥"

पूर्व्वतिथेर्मलिम्लुचत्वज्ञापनात्तिथौ च मलिम्लुचरूपस्य साक्षादनुपदर्शितत्वान्मलिम्लुचे मासि दर्शितं यद्रूपं प्रतिपदोक्तेतरदैवपित्रादिसकलकर्म्मानर्हत्वम् ।

"गर्हितः पितृदेवाभ्यां सर्व्वकर्म्मसु तं त्यजेदिति" ।

अनेन ज्ञापित एवात्रापि मलिम्लुचपदार्थ इत्यवधार्य्यते । न च युगादिषु कर्त्तव्यस्य मलिम्लुचे प्रतिप्रसवोऽस्ति ।

ननु ।

"तिथिद्वैधं यदैकस्मिन् भवेन्मासि कथञ्चन ।
श्राद्धे पूर्व्वा तिथिर्ज्ञेया व्रतादौ तूत्तरा स्मृतेति ॥"

वचनात् श्राद्धमनुज्ञातमेव नैतत् युगादौ स्नायात्यजेत् जुहुयात् व्रतं कुर्य्यात् सलक्ष्मीकं विष्णुमभ्यर्च्चयेत् श्राद्धं कुर्य्यादिति । तथा स्नानदानादिकं सर्व्वं युगादौ चाक्षयं भवेदिति व्यासः । तथा दत्तस्याक्षयकारिकाः । अनन्तपुण्यास्तिथयस्तस्र इत्यादिनानाकर्म्मविधानादेषाञ्च मलिम्लुचे निषेधात् । न च श्राद्धं पूर्व्वतिथावेव परतिथौ च स्नानादिकं भविष्यतीति वाच्यं युगादेरधिकसंख्यापत्त्या चतस्र इति बाधापत्तेः । किञ्च सति हि युगादित्वे पूर्व्वत्र श्राद्धक्रिया तस्य स्नानदानादिबहुतरकर्म्मानुरोधेन परतिथेरेव युगादिषु निर्णयात्तु निमित्तस्य श्राद्धस्यापि तत्रैव प्रसक्तिर्नोभयत्रेति । भूयसां स्यात्सधर्म्मत्वमिति न्यायात् किञ्च

"पानीयमप्यत्र तिलैर्विमिश्र-
न्दद्यात् पितृभ्यः प्रयतो मनुष्यः ।
श्राद्धं कृतं तेन समासहस्रं
रहस्यमेतत्पितरो वदन्ति ॥"

इति तिलमिश्रपानीयदानेनापीत्यपिशब्देन श्राद्धस्यातीव बहुफलत्वदर्शनात् काम्यस्य च मलिम्लुचे निषेधात् । कथं पूर्व्वतिथौ श्राद्धक्रियास्नानदानादिकं सर्व्वमित्यत्राप्यादिशब्देन श्राद्धस्याक्षयफलत्वमुक्तम् । अतएवाश्विनेऽधिमासपाते कन्यागतश्राद्धस्य

"मासि कन्यागते भानुरसंक्रान्तो भवेद्यदि ।
दैवं पित्र्यन्तथा कर्म्म तुलास्थे कर्त्तुरक्षयम् ॥"

इत्युत्कर्षः । ततश्च यत्र काम्यनित्यस्याननुष्ठानं मलिम्लुचे कथन्तत्र केवलकाम्यस्य काम्या इष्टीर्विवर्ज्जयेदिति निषेधात् । एवंविधश्राद्धस्य मलिम्लुचे करणे पितृगर्हाभिधानं निर्विषयं स्यात् श्राद्धे पूर्व्वा तिथिर्ग्राह्येति त्वेकोद्दिष्टविषयम् । तदुक्तम् । "मलमासेऽपि कर्त्तव्यं श्राद्धं यत्प्रतिवत्सर"मित्यादि मलमासप्रस्तावे दर्शितम् यत्नेन तूत्कर्षो युगादिष्विति वचनात् । योऽन्यो को मन्यते प्रथमतिथिरेव युगादिरिति तदयुक्तम् । अनुत्कर्षवचनस्य सौरे कर्त्तव्यतापरत्वेन पूर्व्वं व्याख्यातत्वात्तथैव चोपपत्तेरेकत्वान्मलिम्लुचतिथेः सकलकर्म्मानर्हत्वप्रतिपादकबहुतरवचनादन्यथाकरणसामर्थ्याभावात् । ननु वैशाखादिष्वधिमासपाते युगादेरनुत्कर्षान्मलिम्लुच एव परिग्रहः । सत्यं सौरमासविहितकर्म्मार्थं तस्या मलिम्लुचत्वात् ।

तथाहि ।

"रविणा लङ्घितो मासश्चान्द्रः ख्यातो मलिम्लुचः ।
तत्र यद्विहितं कर्म्म उत्तरे मासि कारयेत् ॥"

तत्रेत्यनेन चान्द्रे विहितस्य कर्म्मणश्चान्द्रद्वैधे कुत्र तत्क्रियेत्यपेक्षायां पूर्व्वस्य निर्णयोऽपरस्मिन् चान्द्रे व्यवस्थापितत्वात्। यत्तु सौर-मासे विहितस्य विवाहादेस्तत्र निषेधस्तदपि सौर एव मासान्तरे सावकाशस्य मलिम्लुचहानेन विधानम्। युगादेस्तु प्रतिनिय-तैकसौर एव व्यवस्थितत्वात्तस्य च मलिम्लुचत्वाल्लोप एव वा मलिम्लुच एव वा क्रियेति सन्देहे अनुत्कर्षवचनं युगादिप्रतिप्रस-वार्थं प्रतिसंवत्सरं चतस्रो युगादय इत्यवगता चतुःसंख्या रक्षिता स्यात्। न चैवं तिथिद्वैधे प्राथम्यात् मलिम्लुचतिथावेव कुतो वास्य क्रियेति वाच्यं सर्व्वकर्म्मानर्हत्वेन तस्याः प्रतिपादनात् युगादे-श्चोत्तरतिथावपि क्रियायां कर्म्मलोपसंख्याविरोधयोः परिहृतत्वात् कर्म्मानर्हत्ववचनस्य विनाकरणे नोपसंहारलोपात्। तस्मात् सुखरात्रेरिव मलिम्लुचेऽपि क्रियाद्वैधे चोत्तरतिथ्यादरः। युगा-दिषु च श्राद्धं विहितं तत्त्रयोदशीतरतिथिषु युगादिषु पुत्त्रवता गृहिणा कर्त्तव्यं कृष्णत्रयोदश्यां तस्य निषेधात्।

तथाच वृहस्पतिः।

"कृष्णपक्षे त्रयोदश्यां यः श्राद्धं कुरुते नरः ।
पञ्चत्वं तस्य जानीयाज्ज्येष्ठपुत्त्रस्य निश्चितम् ॥"

तथा स्मृतिसमुच्चये ।

"त्रयोदश्यान्तु वै श्राद्धं न कुर्य्यात् पुत्त्रवान् गृही ।

नेष्यते चोपवासश्च कैश्चिदप्ययनद्वये ॥"

ननु विहितप्रतिषिद्धत्वात् विकल्पः स्यात् नैतत् विकल्पभयादेव पर्य्युदासोऽयं पुत्रवत् गृहिपर्य्युदासेन तदितरस्त्रयोदशीश्राद्धाधिकारीति ज्ञापयति। ननु युगादौ श्राद्धं कुर्य्यादिति विधेरेकत्वात्तत्र पुत्रवतो गृहिणः पर्य्युदस्तत्वात् चतुर्ष्वेव युगादिषु तस्य श्राद्धानधिकारः स्यात्। नैतत् स्मृतिकारस्यैतत् सङ्क्षिप्ताभिधानम्। परमार्थतस्तु विधिरत्र भिद्यते। वैशाखशुक्लतृतीयायां श्राद्धं कुर्य्यात् स्नानदानादिकञ्च एवं भाद्रकृष्णत्रयोदश्यादावपीति युगादित्वञ्च तद्विधानानुवादस्तुत्यर्थः। ननु युगादित्वं ज्ञाप्यत इत्यतः श्राद्धादिविधिः सिद्धरूपयुगादित्वज्ञापनपरत्वानुपपत्तेः। न च ज्ञापनमपि सप्रयोजनं तस्याज्ञानेऽपि तृतीयादिषु तत्तत्कर्म्मविधानसम्भवात्। अतस्त्रयोदश्यां यो विधिस्तत्र पुत्रवतो गृहिणः पर्य्युदासो नान्यत्रेति नास्ति वैरूप्यविधिः। एवञ्च यद्विस्पष्टं दीक्षितेन पर्य्युदासादिह पुत्रीतरः श्राद्धेऽधिकारी प्रतीयते। तत्र यदि श्राद्धमात्रे पुत्रीतरस्याधिकारः तदा त्रयोदश्यामित्यनर्थकम्। तत्रैव कालविधिरिति चेत् न। मृताहादिकालविधिबाधप्रसङ्गात्। त्रयोदशीपदं श्राद्धोपलक्षणं वाच्यम्। तदा च स्वनिमित्तमेव यत् प्रौष्ठपद्या ऊर्द्ध्वं कृष्णत्रयोदश्यां विहितं तदेव लक्षयति न तु मृताहत्वनिमित्तत्रयोदशीप्राप्तमिव युगादित्वे यत्प्राप्तं तदपि पुत्रवतो न सिध्यति। पुत्रिणा तत्कर्त्तव्यमेवेत्युक्तं तदपि निरस्तम्भवति। तस्यापि त्रयोदशीत्वेनैव व्यापितत्वात् युगादित्वमपि त्रयोदशीत्वादेव।

मृताहत्वन्तु न त्रयोदशीत्वात्। सर्व्वतिथिष्वेव तदविशेषात्। युगादित्वस्यापि तिथ्यन्तरेऽविशेषादिति चेत् न अत्रापि तत्तिथिरूपत्वस्य प्रयोजकत्वात्। अन्यथा तिथिचतुष्टयेतरेष्वपि युगादित्वप्रसङ्गात्। तस्मात् युगादित्रयोदशीश्राद्धे पुत्त्रीतरस्यैवाधिकार इति सिद्धम्। शुक्लयुगादिद्वये च पिण्डमन्तरेणैव श्राद्धं कार्य्यम्।

तथा मत्स्यपुराणम्।

"वैशाखस्य तृतीयायां नवम्यां कार्त्तिकस्य च।
श्राद्धङ्कार्य्यञ्च शुक्लायां संक्रान्तिविधिना नरैः॥"

संक्रान्तिविधिः पिण्डशून्य इत्युक्तं संक्रान्तिविवेके।

इति युगादिः।

## अथ दशहरा।

तत्र स्कन्दपुराणे।

"ज्यैष्ठस्य शुक्लदशमी संवत्सरमुखी स्मृता।
तस्यां स्नानं प्रकुर्व्वीत दानञ्चैव विशेषतः॥
यां काञ्चित्सरितं प्राप्य दद्याद्दर्भतिलोदकम्।
मुच्यते दशभिः पापैः स महापातकोपमैः॥
दशमी ज्यैष्ठशुक्लस्य संवत्सरमुखी स्मृता।
हरते दश पापानि तस्माद्दशहरा स्मृता॥"

अथ ब्रह्माण्डपुराणम्।

"ज्यैष्ठे मासि सिते पक्षे दशमी हस्तसंयुता ।
हरते दश पापानि तस्माद्दशहरा स्मृता ।
तस्यां स्नानं प्रकुर्व्वीत दानञ्चैव विशेषत: ॥"

अथ भविष्यपुराणम् ।

"ज्यैष्ठशुक्लदशम्याञ्च भवेद्भौमदिनं यदि ।
ज्ञेया हस्तर्क्षसंयुक्ता सर्व्वपापहरा तिथि: ॥"

अथ विष्णुधर्म्मोत्तरे ।

"दशम्यां शुक्लपक्षे च ज्यैष्ठे मासि कुजे दिने ।
अवतीर्णा यतो गङ्गा हस्तर्क्षे च सरिद्वरा ।
हरते दश पापानि तस्माद्दशहरा स्मृता ॥"

तथा ।

"दशजन्मकृतं पापं दश पापानि चैव हि ।
आहरणोत्यप्रयत्नेन तस्माद्दशहरा तिथि: ॥
गङ्गास्नानान्सिता ज्यैष्ठे दशमी हस्तसंयुता ।
हरेद्वै दश पापानि तस्माद्दशहरा स्मृता ॥"

अत्र ज्यैष्ठ: सौर एव मास: तद्वाचकत्वात्, अतएवानुत्कर्ष: । तन्मासीया दशमी केवलैव क्वचिद्वचने क्वचित् हस्तर्क्षसंयुक्ता, क्वचित् हस्तर्क्षभौमवारयुता । तत्रोत्तरोत्तरं फलभूयस्त्वम्मन्तव्यम् । केवला दशमी स्वल्पफला, हस्तर्क्षयुक्ता तदधिकफला, भौमवारहस्तर्क्षयुक्ता महाफला ।

अथ दश पापानि ।

"परद्रव्येष्वभिध्यानं मनसाऽनिष्टचिन्तनम् ।

वितथाभिनिवेशश्च त्रिविधं कर्म्म मानसम् ॥
पारुष्यमनृतञ्चैव पैशुन्यञ्चापि सर्व्वशः।
अनिबद्धप्रलापश्च* वाङ्मयं स्याच्चतुर्व्विधम् ॥
अदत्तानामुपादानं हिंसा चैवाविधानतः।
परदारोपसेवा च शारीरं त्रिविधं स्मृतम् ॥"

अयमेव मनुवाक्यानां क्रमपाठश्च, अन्यतः पुनरागमनं हेयम्† । अतएव याज्ञवल्क्येनामीषां फलविपाकेऽप्ययमेव श्लोकानां क्रमोऽर्थाद्दर्शितः।

"परद्रव्याण्यभिध्यायन् तथानिष्टानि चिन्तयन्।
वितथाभिनिवेशी च जायतेऽन्त्यासु योनिषु ॥
पुरुषोऽनृतवादी च पिशुनः पुरुषस्तथा।
अनिबद्धप्रलापी च मृगपक्षिषु जायते ॥
अदत्तादाननिरतः परदारोपसेवकः।
हिंसकश्चाविधानेन स्थावरेषूपजायते ॥‡"

यद्यपि शारीरश्लोके हिंसापरदारसेवयोर्व्यतिक्रमः छन्दोऽनुरोधेन कृतः, तथापि श्लोकानां क्रमं नियच्छत्येव। उत्पत्तिक्रमोऽप्ययमेव हारीतेन दर्शितः।

यथा।

---

* असम्बन्धप्रलापश्च इति रघुनन्दनसम्मतः पाठः। ख-चिह्नितपुस्तके असम्बद्धप्रलापश्च इत्येव पाठः।

† अयमेव मनुवाक्यानां क्रमः। पुनरागमनं हेयम् इति ख-पुस्तके पाठान्तरम्।

‡ अयं श्लोकः ख-पुस्तके नोपलभ्यते।

"मनसा सङ्कल्पयति, वाचा वदति, कर्म्मणा करोतीति
तस्मादमूलज्ञैरन्यथा पठितमनादेयम् ।"
इति दशहरा ।

अथ कोजागरनिरूपणम् ।

"आश्विने पौर्णमास्याञ्च चरेज्जागरणन्निशि ।
कौमुदी सा समाख्याता कार्य्या लोकविभूतये ॥
कौमुद्यां पूजयेल्लक्ष्मीमिन्द्रमैरावतस्थितम् ।
सुगन्धिर्निशि सद्वेशः अक्षैर्जागरणञ्चरेत् ॥"

पुराणस्य । दुर्गोत्सवस्य चान्द्राश्विननियतत्वात् तदनन्तरित-पौर्णमास्याञ्च कोजागरः सदाचारदर्शनादाश्विनपदं लक्षणया सौर एव । आश्विने आरब्धचान्द्रमासस्य पौर्णमास्यामित्यध्याहृत्यान्वयः कार्य्यः । अन्यथा अविगीतसदाचारविरोधात् ।

इति कोजागरपूर्णिमा ।

अथ सुखरात्रिः ।

आह माण्डव्यः ।

"अमावास्यान्तुलादित्ये लक्ष्मीर्निद्रां विमुञ्चति ।
तस्मिन् शुक्ले सदा विष्णुस्तुलायामथ वृश्चिके ॥"

तेन लक्ष्मीप्रबोधस्तुलागतामावास्यायामेव तस्मिन्निति च तदमा-

वास्यानन्तरितशुक्लपक्ष एव सदा देवोत्थानमिति प्रतिपादनात् तस्य पक्षस्य देवोत्थानाव्यभिचारोऽवगम्यते अतएव स पक्षस्तुलायां वा भवति वृश्चिके वेत्यत्रैव परमनियम इत्यत्राह तेनैतदनुरोधेनास्यैवानन्तरवचनं शुक्लपक्षे यदा भानुरिति वर्णनीयम्। अथ देवोत्थानपक्षपूर्व्वभूतैवामावास्या नियमेन लक्ष्मीप्रबोधकालः, सैव च सुखरात्रिरित्युच्यते।

अत्र विहितं ज्योतिःशास्त्रे।

"सुखरात्रेरुषःकाले प्रदीपोज्ज्वलितालये।
सुशुभैः कुसुमैर्गन्धैर्दधिगोरोचनाफलैः॥
बन्धुर्बन्धूनबन्धूंश्च वाचा कुशलयार्च्चयेत्।
पूजयेच्च तथा लक्ष्मीमलक्ष्मीं मलनाशनीम्॥"

वाचा कुशलया पूर्व्वेश्च [?] कुसुमादिभिरर्च्चयेदिति सम्बन्धः।

## अथ प्रतिपत्।

तदनन्तरितप्रतिपदि कर्त्तव्यमाह ज्योतिःशास्त्रे।

"कार्त्तिके मासि शुक्लादौ तिथौ च कुसुमांशुकैः।
पक्षार्च्चा पक्षरात्रिः सा कार्य्या लोकसुखावहा॥"

तथा भविष्यपुराणे।

"स्नानं दानं शतगुणं कार्त्तिके या तिथिर्भवेत्।
प्रतिपद्ब्राह्मणांश्चैव गुड़मिश्रैः प्रदीपकैः।
वासोभिराहतैश्चैव स गच्छेद्ब्रह्मणः पदम्॥

पुष्पैर्गन्धैर्नैवेद्यैर्वस्त्रैराह्वानं पूजयेच्च यः ।
तस्यां प्रतिपदायाञ्च स गच्छेद्ब्रह्मणः पदम् ॥”

भविष्यवचने कार्त्तिकपदस्य सौरपरत्वे कृष्णशुक्लयोरन्यतरप्रतिपद्विशेषाग्रहणे प्राथम्यादिहेतोरभावादनध्यवसायापत्तेः कार्त्तिकपदं चान्द्रपरं, तत्र शुक्लैव प्रतिपत्प्रथमभाविनीति तदग्रहणम् । न च कार्त्तिके शुक्लपक्षादाविति वचनाद्विशेषावगतिरिति वाच्यं लोकसुखफलपक्षार्चाकर्म्माङ्गतया तद्विधानात्, अत्र तु ब्राह्मणानामाह्वानञ्चार्च्चनस्य ब्रह्मणः पदगमनफलस्य विधानात् । कथं ततो निर्णयः कर्त्तृभेदाच्च ।

## अथ भ्रातृद्वितीया ।

प्रतिपदनन्तरितद्वितीयामाह व्यासः ।

“कार्त्तिके शुक्लपक्षस्य द्वितीयायां युधिष्ठिर ।
यमो यमुनया पूर्व्वं भोजितः स्वगृहे तदा ॥
अतो यमद्वितीया या ख्याता लोके युधिष्ठिर ।
अस्यां निजगृहे पार्थ न भोक्तव्यमितो बुधैः ॥
यत्नेन भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ।
दानानि च प्रदेयानि भगिनीभ्यो विधानतः ॥
स्वर्णालङ्कारवस्त्रादिपूजासत्कारभोजनैः ।
सर्व्वा भगिन्यः सम्पूज्या अभावे प्रतिपन्नकाः ॥
सर्व्वदा भगिनीहस्ताद्भोक्तव्यं पुष्टिवर्द्धनम् ।

यशस्यं धन्यमायुष्यं धर्म्मकामार्थवर्द्धनम् ॥
यस्यान्तिथौ यमुनया यमराजदेवः
सम्भोजितो भगवतः स्वसृदा कृतेन ।
तस्यां स्वसाकरतलादिह* यो भुनक्ति
प्राप्नोति वित्तसुतसौख्यमनुत्तमं सः ॥"
इति भ्रातृद्वितीया ।

"पुण्यं समयमनन्तं वक्तुं चतुराननोऽपि न हि शक्तः ।
तद्वच्मे सङ्क्षेपाद्विकल्पविक्षोभणाय† लोकानाम् ॥"

तत्र भविष्यपुराणे ।

"तिथीनां प्रसवा‡ यस्माद्ब्रह्मणा समुदाहृताः ।
प्रतिपादिता च पदे प्रतिपत्तेन चोच्यते ॥
तिस्रो ह्येताः पुरा प्रोक्तास्तिथयः कुरुनन्दन ।
कार्त्तिकेऽश्वयुजे मासे चैत्रे मासि च भारत ॥
महापुण्यतिथिरियं बलिराज्यप्रवर्त्तनी ।
स्नानं दानं शतगुणं कार्त्तिके या तिथिर्भवेत् ॥
प्रतिपद्ब्राह्मणांश्चैव गुड़मिश्रैः प्रदीपकैः ।
वासोभिश्चाहतैश्चार्च्चेत्स गच्छेद्ब्रह्मणः पदम् ॥

---

* स्वसुः करतलादिहेति ख-पुस्तके पाठः ।

† वियोगाय इति ख-पुस्तके पाठः ।

‡ प्रवरा इति ख-पुस्तके पाठः ।

अग्निमिष्ट्वा च हुत्वा च प्रतिपद्यमितं हुतम्।
हविषा सर्व्वधान्यानि प्राप्नुयादमितं धनम्॥"

अथ लिङ्गपुराणम्।

"वृश्चिके च द्वितीयायां शुक्लायां भ्रातृपूजनम्।
या न कुर्य्याद्विनश्यन्ति भ्रातरः सप्तजन्मगाः॥
वृहस्पतौ द्वितीयायां शुक्लायां विधिपूजनम्।
कृत्वा नक्तं समश्नीयाल्लभते भूतिमीप्सिताम्॥"

वृहस्पतौ तद्वार इत्यर्थः।

अथ देवीपुराणे।

"उमां शिवं हुताशञ्च द्वितीयायाञ्च पूजयेत्।
हविष्यमन्नं नैवेद्यं देयं गन्धार्च्चनं तथा॥"

पुलस्त्य उवाच।

"अशून्यशयना नाम द्वितीया शृणु तां मम।
यामुपोष्य न वैधव्यं स्त्री प्रयाति द्विजोत्तम॥
पत्नीविमुक्तश्च नरो न कदाचित्प्रजायते।
शेते जगत्पतिः कृष्णः श्रिया सार्द्धं सदा द्विज॥
अशून्यशयना नाम तदा ग्राह्या हि सा तिथिः।
कृष्णपक्षे द्वितीयायां श्रावणे मुनिसत्तम॥"

अनेन देवशयनानन्तरितैव सौरश्रावणस्य कृष्णद्वितीया ग्राह्या। सा च मिथुनशयनानन्तरं वा कर्कटशयनानन्तरं वा नास्ति विशेषः।

अथ तृतीया।

तत्र भविष्योत्तरे।

"तथा सिततृतीयायां नार्य्यः सौभाग्यगर्व्विताः।
कुङ्कुमेन प्रयच्छन्ति लवणेन गुड़ेन च।
न तत्र मन्त्रो होमो वा एवमेव प्रदापयेत्॥"

अथ भविष्ये।

"या त्वेषा कुरुशार्दूल वैशाखे मासि वै तिथिः।
तृतीया साक्षया लोके गीर्व्वाणैरभिनन्दिता॥
यत्किञ्चिद्दीयते दानं स्वल्पं वा यदि वा बहु।
तत्सर्व्वमक्षयं स्याद्वै तेनेयमक्षया स्मृता॥
कलधौतं तथा चान्नं घृतं वापि विशेषतः।
अस्यान्दत्तन्त्वक्षयं स्यात्तेनेयमक्षया स्मृता॥"

आह विष्णुः।

"वैशाखमासस्य तु तृतीयायामुपोषितोऽक्षतैर्वासुदेवमभ्यर्च्च तानेव हुत्वा दत्त्वा च सर्व्वपापेभ्यः पूतो भवति। यच्च तदहनि प्रयच्छति तदक्षय्यमवाप्नोति।"

उपोषितः पूर्व्वदिन इत्यर्थः।

अथ यमः।

"वैशाखसितपक्षस्य तृतीयायान्तथैव च।
गङ्गातोये नरः स्नात्वा मुच्यते सर्व्वकिल्बिषैः॥
योऽस्यान्ददाति करकान्वारिबीजसमन्वितान्।

स याति पुरुषो धीरो नाकान्वे हेतिमालिनः* ॥”

वीजमन्त्रम् ।

दिवस्पतिसङ्ग्रहस्य ।

“वैशाखे मासि राजेन्द्र शुक्लपक्षे तु या तिथिः ।
तृतीया रोहिणीयुक्ता अक्षया सा प्रकीर्त्तिता ॥
तस्यां यद्दीयते किञ्चित्तदक्षयमुदाहृतम् ।
विशेषतो हविष्यान्नं मोदकादिसमायुतम् ॥
तोयदानं विशेषेण प्रशंसन्ति मनीषिणः ।
दत्त्वा त्वन्नं सपानीयं ब्रह्मलोके महीयते ॥”

अथ विष्णुधर्म्मे ।

“भक्ष्यभोज्यसमायुक्तां वर्द्धनीं यः प्रयच्छति ।
तृतीयायान्तु वैशाखे ब्रह्मलोके महीयते ॥
विशेषतः पौर्णमास्यां वैशाखे मासि भारत† ।
पक्वान्नसहितान् दद्यादुदकुम्भान् विचक्षणः ॥
मोदकानुदकुम्भांश्च पक्वान्नसहितान् नरः ।
दत्त्वा च पौर्णमास्यान्तु ब्रह्मलोके महीयते ॥
धान्यमन्नं तथा शाकं‡ ये प्रयच्छन्ति मानवाः ।
ते प्रयान्ति महाबाहो मम लोकमसंशयम् ॥
श्रावणे सङ्गमाः पुण्याः कुरुक्षेत्रसमाः स्मृताः ।

* हेममालिन इति स्मार्त्तभट्टाचार्य्यधृतपाठः ।

† विशेषतः ॥ पौर्णमास्यान्तु वैशाखे मासि यत्नेन भारत इति ख-पुस्तके पाठः ।

‡ तथा पाकमिति ख-पुस्तके पाठः ।

विशेषाद्बुधसंयुक्ता तृतीया या विशेषतः* ॥
बुधश्रवणसंयुक्ता तृतीया यदि लभ्यते ।
अस्यां स्नानोपवासाद्य†मक्षयं परिकीर्त्तितम् ॥
माघे मासि तृतीयायां गुड़स्य लवणस्य च ।
दानं श्रेयस्करं राजन् स्त्रीणाञ्च पुरुषस्य च ॥
गुड़पूपाश्च दातव्या मासि भाद्रपदे तथा ।
तृतीयायां पायसञ्च वामदेवस्य प्रीतये ॥
वारिदानं प्रशस्तं स्यान्मोदकानान्तथैव च ।
वैशाखे मासि राजेन्द्र तृतीयायां गुड़स्य च ॥"

अथ देवीपुराणे ।

"तृतीयायां यजेद्देवीं शङ्करेण समन्विताम् ।
कुङ्कुमागुरुकर्पूरमणिवस्त्रसमन्विताम् ।
सुगन्धिपुष्पधूपैश्च दमनेन सुमीलिताम् ॥"

चैत्रतृतीया प्रक्रमात् ।

## अथ चतुर्थी ।

"चतुर्थीभरणीयोगे शनैश्चरदिनं यदा ।
तदा चाभ्यर्च्च्य देवेशं‡ मुच्यते सर्व्वकिल्बिषैः ॥"

---

* तृतीया यदि लभ्यते इति ख-पुस्तके पाठः ।

† स्नानोपवासाभ्यामिति ख-पुस्तके पाठः ।

‡ तदाभ्यर्च्च्य यमं देवमिति क-पुस्तके पाठः ।

अथ भविष्ये ।

"शिवा शान्ता सुखा राजन्* चतुर्थी त्रिविधा स्मृता ।
मासि भाद्रपदे शुक्ला शिवा लोकेषु पूजिता ॥
तस्यां स्नानं तथा दानमुपवासो जपस्तथा ।
भवेत्सहस्रगुणितं प्रसादाद्दन्तिनो नृप ॥
यास्त्वस्यां कुरुशार्दूल पूजयन्ति सदा स्त्रियः ।
गुड़लवणपूपैश्च श्वश्रूं श्वशुरमेव च ॥
ताः सर्व्वाः सुभगाः स्युर्वै विघ्नेशस्यानुमोदनात् ।
कन्यकास्तु विशेषेण विधिनानेन पूजयेत् ॥
माघे मासि तथा शुक्ला या चतुर्थी महीपते ।
सा शान्ता शान्तिदा नित्यं कुर्य्याच्छान्तिं सदैव हि ॥
स्नानदानादिकं कर्म्म सर्व्वमस्यां कृतं विभो ।
भवेत्सहस्रगुणितं प्रसादाद्दन्तिनो नृप ॥
कृत्वोपवासं यस्त्वस्यां पूजयेद्विघ्ननायकम्† ।
तस्यां होमादिकं कर्म्म भवेत्साहस्रिकं नृप ॥
लवणञ्च गुड़ं शाकं गुड़पूपञ्च भारत‡ ।
दत्त्वा शक्त्या तु विप्रेभ्यः फलं साहस्रिकं लभेत् ॥
विशेषतः स्त्रियो राजन् पूजयन्त्यो गुरुं नृप§ ।

---

* शिवा शान्ता चमा राजन् इति ख-पुस्तके पाठः ।

† विघ्ननाशकमिति क-पुस्तके पाठः ।

‡ लवणं गुड़ं तथा शाकं गुड़पूपांश्च भारत इति क-पुस्तके पाठः ।

§ पूजयन् स्त्री गुरुं नृप इति ख-पुस्तके पाठः ।

गुड़लवणघृतैर्वीर सुभगाः स्युः कुरूद्वह ॥
यदा शुक्लचतुर्थ्यान्तु वारो भौमस्य वा भवेत् ।
तदा सा सुखदा ज्ञेया सुखानामिति कीर्त्तिता* ।
स्नानदानादिकं कर्म्म सर्व्वमक्षयमुच्यते ॥"

अथ देवीपुराणम् ।

"गणेशे कारयेत्पूजां लड्डुकादिविभावनात् ।
चतुर्थ्यां विघ्ननाशाय सर्व्वकामप्रसिद्धये ॥"

चैत्रशुक्लचतुर्थ्यां दमनकैरिति बोद्धव्यं प्रकरणात् ।

"कृष्णपक्षे चतुर्थ्यान्तु सिंहे चन्द्रस्य दर्शनम् ।
मिथ्याभिदूषणं कुर्य्यात् तस्मात्पश्येन्न तं तदा ॥"

धवलेन लिखितम् ।

अथ भारते ।

"अङ्गारकचतुर्थीन्तु कृत्वा शुक्लां विधानतः ।
त्रिंशद्योजनविस्तारे मण्डले रूपवान् भवेत् ॥"

अथ पञ्चमी ।

पौराणिकाः पठन्ति ।

"माघे सितचतुर्थ्यान्तु† वरमाराध्य च श्रियः ।
पञ्चम्यां कुन्दकुसुमैः पूजा कार्य्या समृद्धये ॥"

---

* सुखनामेति कीर्त्तिता इति ख-पुस्तके पाठः ।

† माघस्य सितपञ्चम्यामिति ख-पुस्तके पाठः ।

अथ भविष्यपुराणे* ।

"पञ्चमी दयिता राजन् नागानां नन्दिवर्द्धिनी ॥
पञ्चम्यां स्नपयन्तीह नागान् क्षीरेण ये नराः ।
तेषां कुले प्रयच्छन्ति अभयं प्राणरक्षणम्† ॥
श्रावणे मासि पञ्चम्यां शुक्लपक्षे नराधिप ।
द्वारस्योभयतो लेख्या गोमयेन विषोल्वणाः ।
पूजयेद्विधिवद्वीर दधिदूर्व्वाङ्कुरैः कुशैः ॥
गन्धपुष्पोपहारैश्च ब्राह्मणानाञ्च तर्पणैः ।
ये तस्यां पूजयन्तीह नागान् भक्तिपुरःसराः ।
न तेषां सर्पतो वीर भयं भवति कुत्रचित् ॥
तथा भाद्रपदे मासि पञ्चम्यां श्रद्धयान्वितः ।
समालिख्य नरो नागान् शुक्लकृष्णादिवर्णकैः‡ ।
पूजयेद्गन्धपुष्पैश्च सर्पिर्गुग्गुलुपायसैः ।
तस्य तुष्टिं प्रयान्त्याशु पन्नगास्तक्षकादयः ॥
पञ्चम्यां किल नागानां भवतीहोत्सवो महान् ॥
वासुकिस्तक्षकश्चैव कालियो नागभद्रकः ।
ऐरावतो धृतराष्ट्रः कर्कोटकधनञ्जयौ ॥
एते प्रयच्छन्त्यभयं प्राणिनां प्राणजीवनम्§ ।

---

* अयं पाठः ख-पुस्तके नोपलभ्यते ।

† अभयं प्राणदक्षिणमिति क-पुस्तके पाठः ।

‡ कृष्णशुक्लादिवर्णकैरिति ख-पुस्तके पाठः ।

§ प्राणिनां प्राणजीविनामिति ख-पुस्तके पाठः ।

आसप्तमात्कुलात्तस्य न भयं सर्पतो भवेत् ॥
सुप्ते जनार्द्दने देवे पञ्चम्यां भवनाङ्गने ।
पूजयेन्मनसां देवीं स्नुहीविटपसंस्थिताम् ॥
पिचुमर्द्दस्य पत्राणि स्थापयेद्भवनोदरे ।
पूजयित्वा नरो देवीं न सर्पभयमाप्नुयात् ॥"

अथ षष्ठी ।

"येयं भाद्रपदे मासि षष्ठी च भरतर्षभ ।
स्नानदानादिकं सर्व्वमस्यामक्षयमुच्यते ॥
षष्ठ्यां फलाशनो राजन्* विशेषात्कार्त्तिके नृप ।
शुक्लां कृष्णां सुनियतो† ब्रह्मचारी जितेन्द्रियः ॥
षष्ठ्यां फलाशनो यस्तु नक्ताहारो भविष्यति ।
इह चामुत्र सोऽत्यर्थं लभते ख्यातिमद्भुताम् ।
राज्यच्युतो विशेषेण स्वराज्यं लभतेऽचिरात् ॥"

अथ लिङ्गपुराणम् ।

"वृश्चिके विजया नाम सप्तमी द्वादशी तथा ।
महाषष्ठी च सा ज्ञेया यस्यां शेते हुताशनः‡ ॥
प्रत्यब्दमग्निपूजा च षष्ठ्यां कार्य्या गृहस्य च ।

---

* यस्यां फलाशनो राजन्निति क-पुस्तके पाठः ।

† शुक्लाकृष्णासु नियतः इति ख-पुस्तके पाठः ।

‡ महाषष्ठी च सा भीक्ता तस्यां शेते हुताशनः इति ख-पुस्तके पाठः ।

दीप्ताग्निः* स सुखी च स्यात्तस्मिन्नागामिवत्सरे॥"
पूर्व्वः पक्षो देवानामिति श्रुतेः शुक्लपरिग्रहः। क्वचित्तु विशेष-वचनाद्दैवेऽपि कृष्णपक्षग्रहणम्।

## अथ सप्तमी।

अथ भविष्ये।

"शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो भवेद्यदि।
सप्तमी विजया नाम तत्र दत्तं महाफलम्॥
एषा धन्या पापहरा महापातकनाशिनी॥
स्नानं दानं तथा होमः पितृदेवाभिपूजनम्।
सर्व्वं विजयसप्तम्यां महापातकनाशनम्॥"

एतदन्तं साम्बपुराणेऽपि।

पुनर्भविष्ये।

"शुक्लपक्षस्य सप्तम्यां नक्षत्रं पञ्चतारकम्।
यदा स्यात्तु तदा ज्ञेया जयानामिति सप्तमी॥
तस्यां स्नानादिकं कर्म्म भवेच्छतगुणं विभो†॥"

पञ्चतारकं शतभिषा।

"माघस्य शुक्लपक्षे तु सप्तमी या त्रिलोचन।
जयन्ती नाम सा प्रोक्ता पुण्या पापहरा शिवा॥

* दृप्ताग्निः दृप्ताग्निर्भीत पाठद्वयं ख-पुस्तके दृश्यते।

† भवेच्चतुर्गुणं विभो इति ख-पुस्तके पाठः।

मासि भाद्रपदे शुक्ले सप्तमी या गणाधिप ।
अपराजितेति विख्याता महापातकनाशिनी ॥
शुक्लपक्षे च सप्तम्यां यदा संक्रमते रविः ।
महाजया तदा स्याद्वै सप्तमी भास्करप्रिया ॥
स्नानं दानं तथा होमः पितृदेवाभिपूजनम् ।
सर्व्वं कोटिगुणं पुण्यं भास्करस्य वचो यथा ॥
या तु मार्गशिरे मासि शुक्लपक्षे तु सप्तमी* ।
नन्दा सा कथिता वीर सर्व्वानन्दकरी तथा† ॥
स्नानदानादिकं सर्व्वमस्यामक्षयमुच्यते ॥
शुक्लपक्षे तु सप्तम्यां नक्षत्रं सवितुर्भवेत् ।
यदा प्रथममेवेश तदा सा भद्रतां व्रजेत् ॥
स्नपनं तत्र देवेऽपि घृतेन कथितं बुधैः‡ ॥
इत्येषा कथिता वीर भद्रानामेति सप्तमी ।
यामुपोष्य नरो भीम स्वर्गलोकमवाप्नुयात् ॥"

सवितुर्नक्षत्रं हस्तः। प्रथमं सप्तम्युपक्रमइति योग्लोकेन§ व्याख्यातं दिनोपक्रम इति मम सम्मतं दिनोपक्रमस्यैव प्रशस्तत्वात्¶ ।

---

* शुक्लपक्षे च सप्तमी इति ख-पुस्तके पाठः ।

† सर्व्वनन्दकरी शुभा इति ख-पुस्तके पाठः ।

‡ सूर्य्यं तत्र च देवेशं घृतेन कथितं बुधैरिति ख-पुस्तके पाठः स्नपयेदिति पदाध्याहारेण सङ्गमनीयः ।

§ योग्धाकेन इति ख-पुस्तके पाठः ।

¶ सप्तम्यां प्रशस्तत्वादिति क-पुस्तके पाठः ।

तथा।

"शुक्लपक्षे तु सप्तम्यां यदर्च्चन्तु करं भवेत्।
तदा सा स्यान्महापुण्या सप्तमी पापनाशनी॥
तस्यां सम्पूज्य देवेशं चित्रभानुं दिवाकरम्।
सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः॥
यश्चोपवासं कुरुते तस्यां नियतमानसः।
सर्व्वपापविशुद्धात्मा* सूर्य्यलोके महीयते॥
शुक्लपक्षस्य सप्तम्यामुपवासपरो नरः।
सर्व्वशुक्लोपहारेण पूजयेद्यस्तु भास्करम्॥
(जातीतगरकैश्चैव श्वेतोत्पलकदम्बकैः।
शुक्लपक्षस्य सप्तम्यामुपवासपरो नरः॥
सर्व्वरक्तोपहारेण पूजयेद्यस्तु भास्करम्)† ।
कर्णिकैः करवीरैश्च रक्तपुष्पैस्तु भारत‡।
सर्व्वपापविनिर्मुक्तः सूर्य्यलोके महीयते॥"

तथा साम्बपुराणम्§ ।

"शुक्ला वा यदि वा कृष्णा षष्ठी वा सप्तमी च वा।
रविवारेण संयुक्ता तिथिः पुण्यतमा स्मृता॥"

तथा मत्स्यपुराणम्।

---

* विनिर्मुक्त इति ख-पुस्तके पाठः।

† अयमंशः ख-पुस्तके नोपलभ्यते।

‡ भावतः इति ख-पुस्तके पाठः।

§ यथा शाम्बपुराणे इति क-पुस्तके पाठः।

"यस्मान्मन्वन्तरस्यादौ रथानापुर्दिवाकरः ।
माघमासस्य सप्तम्यां तस्मात्सा रथसप्तमी ॥"

तथा भविष्ये ।

"इत्येषा कथिता वीर रथाङ्गा सप्तमी परा ।
महासप्तमीति ख्याता महापातकनाशनी ॥"*

तथा स्मृतिसमुच्चये ।

"सूर्य्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायां तस्यां स्नानं महाफलम् ॥
व्यतीपाते वैधृतौ च पक्षान्ते च दिनक्षये ।
माघमासे तु सप्तम्यां दानं बहुफलं भवेत् ॥
माघे मासि सिते पक्षे सप्तमी कोटिभास्करा ।
तस्यां स्नानार्घदानाभ्यां†मायुरारोग्यसम्पदः ॥"

विसृष्टेयं पूर्व्वम्‡ ।

"षष्ठ्यामुपोष्य यः सम्यक्सप्तम्यामर्च्चयेद्रविम् ।
स द्रव्यभागुरुगुणः सम्प्राप्नोतीप्सितं फलम् ॥

---

* तथा मत्स्यपुराणमित्यादिः महापातकनाशनीत्यन्तः पाठः ख-पुस्तके अनेन क्रमेण नोपलभ्यते । तत्र तु एवं क्रमो दृश्यते यथा—

अथ मत्स्यपुराणम्—"माघमासस्य सप्तम्यां स्यात्तस्माद्रथसप्तमी ।"

तथा भविष्ये—"इत्येषा कथिता वीर रथाङ्गा सप्तमी परा ।
महासप्तमी विख्याता महापातकनाशिनी ॥"

† कुर्य्यात्स्नानार्घदानाभ्यामिति क-पुस्तके पाठः ।

‡ विसृष्टेयं पूर्व्वैरिति क-पुस्तके पाठः ।

षष्ठ्यां यो नियतो भूत्वा सप्तम्यां विधिवद्रविम् ।
सम्पूज्योपवसेत्सोऽपि युयुत्सुश्चेप्सितं फलम् ॥
सप्तमी सूर्य्यवारेण अमा वै सोमयोगतः ।
भूतजा भूमिजेनैव बुधे भद्रा उपागता ॥
बृहस्पतिर्दिने पूर्णा शुक्रेणैकादशी युता ।
शनैश्चरदिने षष्ठी महापुण्यतमा इमाः ॥
एषु जागरणं कृत्वा महापूजां विशेषतः ।
उद्धरेत्* सकलान् गोत्रान् नयते रविमन्दिरम् ।
आत्मपरिजनैः सार्द्धं गच्छति सूर्य्यमन्दिरम् ॥"

भूतजा चतुर्द्दशी ।

अथ पौराणिकाः पठन्ति ।

"अर्काङ्गं† शुचिगोमयं सुमरिचं‡ तोयं फलञ्चाश्नुते
मूलं नक्तमुपोषणञ्च विधिवत्कृत्वैकभक्तन्तथा ।
चीरं वायुशनं घृताशनमिति प्रोक्तान्यमूनि क्रमात्
कृत्वा वत्सरसप्तमीं दिनकृतः प्राप्नोत्यभीष्टं फलम् ॥"

तथा ।

"गोधूममाषमधुमैथुनमद्यमांस-
पाषाणपिष्टयवषष्टिककांस्यपात्रम् ।

---

* उद्धरेत्सकलान् पितृनिति ख-पुस्तके पाठः ।

† अर्कांग्रमिति ख-पुस्तके पाठः ।

‡ समरिचमिति ख-पुस्तके पाठः ।

अभ्यञ्जनाञ्जनतिलांश्च विवर्ज्जयेद्यः
सोऽभीप्सितं लभति* सप्तसु सप्तमीषु ॥"

दैवत्वाद्व्यवहारसिद्धं† व्रतद्वयमप्येतन्माघसप्तम्या‡मारभ्यते। इति शिष्टाचारः।

अथाष्टमी।

रोहिण्यष्टमी पूर्व्वमुक्ता। अथान्या भविष्ये।

"कन्यां गते सवितरि कृष्णपक्षेऽष्टमी च या§।
सा तु पुण्या पापहरा शिवस्यानन्दवर्द्धिनी॥
स्नानं दानं जपो होमः पितृदेवाभिपूजनम्।
सर्व्वं प्रीतिकरं स्याद्वै कृतं तस्यां त्रिलोचने।
विशेषतः कृतं श्राद्धं होमञ्च विधिवन्मुने॥"

आह शातातपः।

"मघासु पित्रेऽह्नि सुते च जाते
ग्रहोपरागेऽप्ययनद्वये च।
नित्यञ्च श्राद्धे च तथैव पद्मे
दत्तन्भवेन्निष्कसहस्रतुल्यम्॥

---

* लभते इति ख-पुस्तके पाठः।

† दैवत्वाच्चाज्ञासिद्धमिति क-पुस्तके पाठः।

‡ माघसप्तम्यामारभ्य कार्य्यमिति ख-पुस्तके पाठः।

§ कृष्णे दथाष्टमी च या इति ख-पुस्तके पाठः।

शुद्धं प्राहुरमावास्यां क्षीणसोमां द्विजोत्तमाः ।
अष्टकास्तु भवेत्पक्षं तत्र दत्तमथाक्षयम् ॥"

पितृग्रमहः कन्यागतस्य कृष्णत्रयोदशी ।

"पौषे मासि यदा देवि शुक्लाष्टम्यां बुधो भवेत् ।
तदा तु सा महापुण्या महारुद्रेति कोर्त्तिता ॥
तस्यां स्नानं जपो होमस्तर्पणं विप्रभोजनम् ।
मत्प्रीतये कृतं देवि शतसाहस्त्रिकम्भवेत् ॥
तस्मात्तस्यां सदा देवि पूज्योऽहं विधिवन्नरैः ।
गन्धपुष्पोपहारैश्च ब्राह्मणानाञ्च तर्पणैः ॥
पौषे मासि यदा देवि अष्टम्यां नगजे शुभम् ।
नक्षत्रं जायते पुण्यं यल्लोके रौद्रमुच्यते ॥
तदा तु सा महापुण्या जयन्ती अष्टमी स्मृता ।
तस्यां स्नानं तथा दानं जपो होमश्च तर्पणम् ॥
सर्व्वं कोटिगुणं देवि कृतं भवति कृत्स्नशः ।
एवं ममेष्टा तिथिरियं पौषमासेऽष्टमी शुभा ।
यथेष्टा सप्तमी नित्यं माघेऽर्कस्य महात्मनः ॥"

नगजे गौरि । माघस्य सप्तमीसाहचर्य्याच्च शुक्लाष्टमी न च तस्यां रौद्रस्य आर्द्रस्य योगः सम्भवतीति रौद्रपदेन पूर्व्वभाद्रपदोच्यते । तस्याजैकपाद्दैवतत्वात् "वासवाजैकपादर्क्षं" इत्यादिषु कलनात्* । न तु भयङ्करत्वाद्यमस्य यमदेवताका भरणीति

---

* इत्यादिष्वपि दर्शनादिति ख-पुस्तके पाठः ।

योग्लोकव्याख्यानम् आदरणीयम्। रुद्रदैवतस्यैव सम्भवात्॥ कृष्णाष्टम्यान्तु नक्षत्रत्रयस्यैव असम्भवः।

अथ पठन्ति।

"अग्निपुत्रसमायुक्ता शुक्लपक्षाष्टमी च या।
तस्यां नियमकर्त्तारो न स्युः खण्डितसम्पदः॥"

यदा पूर्णा सिताष्टमीति वा द्वितीयः पादः।

तथापरं पठन्ति।

"अष्टमी बुधवारेण पक्षयोरुभयोरपि।
भविष्यति तदा तस्यां व्रतमेतत्करिष्यति॥"

अथ लिङ्गपुराणम्।

"अशोककलिकाश्चाष्टौ ये पिबन्ति पुनर्व्वसौ।
चैत्रे मासि सिताष्टम्यां न ते शोकमवाप्नुयुः॥"

तत्रैव पानमन्त्रः।

"त्वामशोक हराभीष्ट मधुमाससमुद्भव।
पिबामि शोकसन्तप्तो मामशोकं सदा कुरु॥"

पठन्ति।

"पृथिव्यां यानि तीर्थानि सरितः सागरास्तथा।
सर्व्वे लौहित्यमायान्ति चैत्रे मासि सिताष्टमीम्॥
पुनर्व्वसौ वृषे लग्ने चैत्रे मासि सिताष्टमीम्।
लौहित्ये विधिवत्स्नात्वा वाजपेयफलं लभेत्*॥

---

* वाजपेयफलं भवेदिति क-पुस्तके पाठः।

चैत्राष्टम्यादिपूर्णिमा*मशोकैर्मन्मथार्च्चनम् ।
तच्च कार्य्यमशोकार्थं क्रिया वासन्तिकी हि सा ॥†
माघे मासि सिताष्टम्यां सलिलं भीष्मवर्म्मणि ।
श्राद्धञ्चापि सदा कुर्य्युस्ते स्युः सन्ततिभागिनः ॥
शुक्लाष्टम्यान्तु माघस्य दद्याद्भीष्माय यो जलम् ।
संवत्सरकृतं पापं तत्क्षणादेव मुञ्चति ॥
भीष्मः शान्तनवो वीरः सत्यवादी जितेन्द्रियः ।
आभिरद्भिरवाप्नोतु पुत्त्रपौत्त्रोचितां क्रियाम् ॥"

प्रदानवाक्यम् ।

"वैयाघ्रपद्यगोत्राय साङ्कृतिप्रवराय च ।
अपुत्त्राय ददाम्येतत्सलिलं भीष्मवर्म्मणि ॥"

अन्ते स्वधेति कार्य्यं पितृत्वाध्यारोपणकार्य्यत्वात् । न च भीष्मस्य क्षत्त्रियत्वात्तदितरैर्ब्राह्मणादिभिस्तर्पणादि न कार्य्य-मुत्तमाधम-वर्णयोरधमोत्तमक्रियानिषेधादिति वाच्यं वसोरवतारत्वाद्भीष्मस्य। अन्यथा दैवक्यां वसुदेवेनाब्राह्मणेन जातयोर्बलभद्रवासुदेवयो-र्दाशरथेर्वा रामस्य ब्राह्मणाद्यैः सर्व्वैरेव वर्णैरर्च्चनादिकं न स्यात् । (वाक्याचाविशेषेणैव स्मृतिः ।
तथा भवधनेन लिखितम् ।

---

* पूर्णिम्यामिति ख-पुस्तके पाठः ।

† अस्मात् श्लोकात्प्राक्—पुनर्व्वसौ बुधोपेता चैत्रे मासि सिताष्टमी ।
स्रोतःसु विधिवत्स्नात्वा वाजपेयफलं लभेत् ॥
इति श्लोकान्तरमधिकमुपलभ्यते ख-पुस्तके ।

"अष्टम्यान्तु सिते पक्षे भीष्माय तु तिलोदकम् ।
अन्नञ्च विधिवद्दद्युः सर्व्वे वर्णा द्विजातयः ॥")*

किञ्च भीष्मप्रभृतिश्राद्धविधावादिमत्ता प्रसज्येत अनुवादमात्रन्तु तत्† ।

## अथ नवमी ।

तत्र वराहपुराणम् ।

"नवम्यान्तु सदा पूज्या गौरी देवी समाधिना ।
वरदा सर्व्वलोकस्य भविष्यति न संशयः ॥
नवम्यां यस्तु पिष्टाशी सम्भविष्यति मानवः‡ ।
नारी वा तस्य सम्पत्तु भविष्यति न संशयः ॥
महानवम्यां प्रथमं कृतस्नानविधिर्नरः§ ।
गृह्णीयात्परमञ्चैतद्यथाकामप्रदं व्रतम् ॥

आश्विनस्य नवमी ग्राह्या ।

"तृतीया चैव वैशाखे नवम्याश्वयुजि तथा ।"

इति भविष्यपुराणवचनात् ।

अथ देवीपुराणे ।

---

* (—) अनयो रेखयोरन्तःस्थः पाठः ख-पुस्तके नोपलभ्यते ।
† अपवादमात्रन्तदिति ख-पुस्तके पाठः ।
‡ पिष्टाशी भविष्यति च मानव इति ख-पुस्तके पाठः ।
§ कृत्वा स्नानं विधानत इति ख-पुस्तके पाठः ।

"नवम्यां पूजयेद्देवीं महामहिषमर्द्दिनीम् ।
कुङ्कुमागुरुकर्पूरैर्धूपान्नध्वजदर्पणैः* ।
दमनैर्मरुपत्रैश्च विजयाख्यं पदं लभेत् ॥"

अथ वराहपुराणे ।

"कार्त्तिकस्य तु मासस्य दशमी शुक्लपक्षिका ।
तस्यां नक्ताशनो राजन् दिक्षु शुद्धं फलं लभेत् ॥
दशमी च तिथिस्तासामतीव दयिता भवेत् ।
तस्यां दध्यशनो यस्तु नक्ताहारो भवेन्नरः ।
तस्य पापक्षयं तास्तु कुर्व्वन्त्यहरहर्नृप ॥"

अत्रापि कार्त्तिकी शुक्ला दशमी । "तासां" दिशामित्यर्थः । दशहरा तु पूर्व्वमुक्ता ।

## अथैकादशी ।

अपरिचयाद्वचनानां
परिचितवचनार्थबोधविरहेण ।
एकादश्यां विलुप्तं
व्रतमिदमधुनोज्ज्वलं क्रियते ॥

तत्र विष्णुधर्म्मोत्तरे ।

"ब्रह्महा स भवेत्स्तेनः सुरापो गुरुतल्पगः ।
विवेचयति यो मोहादेकादश्यौ सितासिते ॥

---

* तर्पणैरिति ख-पुस्तके पाठः ।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
एकादश्यां हि भुञ्जानो विष्णुलोकाच्युतो भवेत् ॥”

तथा ।

“अतिक्रामति यो मोहादेकादश्यौ सितासिते ।
उपवासे स मूढ़ात्मा विष्णुलोकं न पश्यति ॥”

भोजनदोषं दर्शयन्नुपवासं नियच्छति । न चायं निषेध इति-कर्त्तव्यताविधानात् । निषेधे च इतिकर्त्तव्यताभावात् व्रत-प्रयोगाच्च ।

तथा मत्स्यपुराणम् ।

“दशम्यां नियताहारो मांसमैथुनवर्ज्जितः ।
एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ॥
एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने ।
शुक्ले वा यदि वा कृष्णे तद्व्रतं वैष्णवं महत् ॥”

तदिदमेकादशीद्वितयव्रतं* यतिवानप्रस्थयोः ।

तथा स्मृतिमीमांसायाम् ।

“एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि ।
वनस्थयतिधर्म्मोऽयं शुक्लामेव सदा गृही ॥”

वनस्थयतिमात्रोपादानाद्वनस्थयतिप्रतियोगिकगृहिमात्रोपादानात् आश्रममात्रे च वनस्थयतिद्वयसाहचर्य्याच्च गृहिमात्रस्यैवोपा-दानम् । न च मांसमैथुनवर्ज्जनविधानात् पुत्ररहितगृहिविष-

---

* एकादशीव्रतमित्येव ख-पुस्तके पाठः ।

यत्नमप्यस्य वाच्यम्। भार्य्यया सह वनं गतस्य ऋतौ मैथुन-सम्भवात्।

तदाह मनुः।

"सन्त्यज्य ग्राम्यमाहारं सर्व्वञ्चैव परिच्छदम्।
पुत्त्रेषु भार्य्यां निक्षिप्य वनं गच्छेत्सहैव वा॥"

व्याकरोति विष्णुः।

"गृही वलिपलितदर्शने वनाश्रयो भवेत्। अपत्यदर्शने वा।
पुत्त्रेषु भार्य्यां निक्षिप्य तया अनुगम्यमानो वा।"

न च वानप्रस्थभार्य्यायाः ऋतुर्न सम्भवतीति वाच्यम्।

"वनं पञ्चाशतो व्रजेत्।" इति।

"वर्षैरेकगुणां भार्य्यामुद्वहेत्त्रिगुणः पुमान्।"

इति वचनद्वयालोचनेन तत्सम्भवात्। अतएव पुराणेषु ऋषि-कुमाराः श्रूयन्ते।

मांसभोजनमप्यस्ति।

तदाह बौधायनः।

"अथ वानप्रस्थद्वैविध्यं पचमाना अपचमानाश्च।"

इत्युपक्रम्य कियद्दूरे।

"स्वतोऽवसितमाममांसं व्याघ्रवृकश्येनहतमित्येवमादिभि-
रन्यैर्वा हत-मानीय अपयित्वा सायम्प्रातरग्निहोत्रञ्जुत्वा
यत्यतिथिव्रतिभ्यश्च दत्त्वा अथेतरच्छेषभक्षा" इत्यादि।

मधुमांसवर्ज्जनन्तु वनस्थानाममांसवृत्तीनाम्। तस्मात्कथमेत-द्वलादपुत्त्रस्य गृहिणोऽप्युभयैकादश्युपवासव्रतम्। कृष्णैकादश्यां

च गृहिमात्रस्य उपवासनिषेधः श्रूयते ।

तदाह वायुपुराणे ।

"इन्दुक्षयेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे ।

उपवासं न कुर्व्वीत पुत्रबन्धुधनक्षयात् ॥"

अत्र पुत्रबन्धुधनक्षयरूपपुरुषदोषश्रुतेर्यावद्गृहिविषयत्वं* न हि बन्धुशून्यः कश्चिद्गृही भ्रातृपितृव्यादिषु दायादेष्वपि शास्त्रे बन्धुपददर्शनात् ।

यथा ।

"बन्धुनापहृतं द्रव्यं बलान्नैव प्रदापयेत् ।"

तथा ।

"बन्धूनामविभक्तानां भागं नैव प्रकर्त्तयेत्† ।"

तथा ।

"बन्धुदत्तन्तु बन्धूनामभावे भर्त्तृगामि तत् ।"

लोके च तेष्वेव दर्शनात्‡ । केचित्तु सुतज्ञातिधनक्षयादिति पठितम् । जीविष्यति विना धनेनेत्यनुपपत्तेः ।

यच्च वचनम् ।

"रविवारेण संक्रान्त्यामेकादश्यां सितेतरे ।

पारणञ्चोपवासञ्च न कुर्य्यात्पुत्रवान् गृही ॥"

तत्र पुत्रवतां वानप्रस्थादीनामनिषेधार्थं गृहित्वं तावद्विशेषणं

---

* भार्य्यावद्गृहिविषयत्वमिति ख-पुस्तके पाठः ।

† भोगे नैव प्रवर्त्तयेदिति ख-पुस्तके पाठः ।

‡ बहुष्वेव दर्शनादिति ख-पुस्तके पाठः ।

वाच्यम्। तथाच "कृष्यामहे हविषा विशेषण"मिति न्यायात् हविरुभयत्ववत् न पुत्रवत्तापि विशेषणं वाक्यभेदापत्तेः। किञ्च नायं निषेधः दुःखहेतावुपवासे रागतः प्रवृत्तेरभावात्। क्रोधादिना प्रसक्तौ तन्निषेध एव स्यात् न तु "एकादश्यां न भुञ्जीत" इत्यस्यापि। अथ तस्यैव निषेधः पुत्रवतो गृहिण इति तन्न विहितप्रतिषिद्धत्वापत्तेः विधिवैरूप्याच्च। यतिवानप्रस्थयोर्नित्यवद्विधानात् गृहिणो* विकल्पेन। यथा "उपात्र वपन्ति" इति चातुर्मास्यीयपर्व्वचतुष्टये उत्तरवेदिविधिः "न वैश्वदेव उत्तरवेदिमुपकिरन्ति न सुनासीर्य्ये" इत्यनयोर्वैकल्पिकत्वापत्तेः शाकमेधवरुणप्रघासयोश्च नित्यत्वापत्तेः। तस्मादधिकारिपर्य्युदासोऽयम्। तेनावश्याङ्गीकरणीय† विशेषणेनैव तत्पर्य्युदस्तस्य उद्देश्यस्याधिकारिणो लब्धत्वान्न विशेषणान्तरं विवक्षितम् वाक्यभेदापत्तेः। तस्माद्गृहस्थेतरः पक्षयोरुभयोरुपवसेदिति तद्वचनस्यार्थः। "वनस्थयतिधर्म्मोऽय"मित्यनेनापि अन्वयमुखेन तदेवोक्तम्। पुत्रवानिति श्रुतिश्च प्रायः प्राप्तानुवादिका‡।

अतएव।

"इन्दुक्षयेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे।
उपवासं न कुर्व्वीत यदीच्छेत्सन्ततिं ध्रुवाम्॥"

अत्र 'सन्ततिं यदीच्छेत्' इति सन्ततिरेव निरपेक्षेच्छाकर्म्मतया-

---

* गृहिणाच्च इति ख-पुस्तके पाठः।

† गृहित्वविशेषणेनैव इति क-पुस्तके पाठः।

‡ श्रुतेश्च प्रायः प्राप्तावनुवादिता इति ख-पुस्तके पाठः।

ऽवगम्यते। "ध्रुवां" चेत्यर्थात् सन्ततिसम्बन्धः क्रियान्वये सति सन्ततिकामोऽनुत्पन्नसन्ततिरेव उत्सर्गतः। तेन अनुत्पन्नसन्ततेरपि पर्य्युदासः। "वनस्थयतिधर्म्मोऽयम्" इत्याश्रमधर्म्मताकथनेन* नित्यतां ज्ञापयति।

"विष्णुलोकाच्युतो भवेत्।" इति श्रुतेः

"शुक्लामेव† सदा गृही"। इति

गृहस्थधर्म्मताम्। सदेत्यभिधानात् नित्यधर्म्मसाहचर्य्याच्च। तत्रैतद्विचार्य्यम्। किं सदैवोपवासविधेः यदि वा सदा व्रतमात्रं कुर्य्यात् तदा सदोपवासविधौ।

"एकभक्तेन नक्तेन तथैवायाचितेन च।
उपवासेन भैक्षेण नैवाद्वादशिको भवेत्॥"

इति निर्व्विषयं स्यात् गृहिणोऽपि उपवासावरुद्धत्वात्। न च गृहिणः कृष्णापत्ते विधानमिदम् "उपवासेन" इत्यनुपपत्तेः। ततश्चैकभक्तादिना शुक्लायां सद्वादशिको भवेदिति विधिः। एकादशीव्रतेनैव सद्वादशीकत्वं तत्पूर्व्वकं द्वादश्यां भगवद्वासुदेव-पूजनविधानात्।

तदुक्तं पुराणे।

"एकादश्यामुपवसेत्पक्षयोरुभयोरपि।
द्वादश्यां योऽर्च्चयेद्विष्णुं स मुक्तिफलभाग्भवेत्॥"

अन्यथा एकादश्यामुपोषितस्य* द्वादश्यां नक्तोपवासादिकं

* आश्रयधर्म्मताभिधानेन इति क-पुस्तके पाठः।

† शुद्धामेव इति क-पुस्तके पाठः।

स्यात् । द्वादश्यामपि एकभक्तादिना "नैवाद्वादशिको भवेत्" इति विधानात् । अस्येत्रोपवासस्य शुक्रवारादिष्वपि अनियमेन प्रसक्तौ तत्पर्य्युदासेन तदितरव्यवस्थितिः ।

रविवारसंक्रमणादिदूषिते तु ।

"उपवासनिषेधे तु भक्ष्यं किञ्चित्प्रकल्पयेत् ।
उपवासो न दुष्येत्तु उपवासफलं लभेत् ॥"

तथा ।

"नक्तं हविष्यान्नमनोदनं वा
फलं तिलाः क्षीरमथाम्बु चाज्यम् ।
यत्पञ्चगव्यं यदि वा च वायुः
प्रशस्तमत्रोत्तरमुत्तरञ्च ॥"

एतद्वायुपुराणेनोक्तं वेदितव्यम् । अदुष्टे हि एकभक्तेनेत्यादिवचनम्† । किञ्च "शुक्लामेव सदा गृही" इत्युपवासविधिः शुक्रवारादिवर्ज्जितायामेकादश्यां सर्व्वत्र वा । यदि वर्ज्जितायां तदा कृष्णायां नास्ति विधिरिति किमर्थं नक्ताद्याचरणम् । विधित एव हि उपवासस्य प्राप्तस्य निषेधे नक्तादिविधानम् । अथ सर्व्वत्र तदाप्युपवासस्यैव विधानात् कथमेतत्क्रिया । अथ निषेधात् क्रिया तदा कृष्णायां विकल्पः अकृष्णायान्तु नित्यवदुपवासविधिरिति वैरूप्यम् । अथ कृष्णायामन्यएव "नैवाद्वादशिको भवेत्" इति विधिः तन्न "उपवासेन भैक्ष्येण" इत्यनुप-

---

* "द्वादश्यामुपोषितस्य" इत्यधिकः पाठः ख-पुस्तके दृश्यते ।

† दुष्टे त्वेकभक्तेत्यादिवचनमिति ख-पुस्तके पाठः ।

पत्तेः। उपवासानर्हे एव काले तद्विधेरापत्तेः तस्माददुष्ट एव काले "एकभक्तेन" इत्यादिना उपवासविधिः। गुरुणि कर्म्मणि फलभूयस्त्वम्। वारादिदूषितायान्तु उपवासनिषेधे उपवासपर्य्युदासफलस्य निषेधसमानफलत्वात् निषेधार्थेन "नक्तं हविष्यान्न"मितिविधानं तिलानोदनादिकं कृष्णायामेव अयाचितं भैक्ष्यं वा दुष्टायां कार्य्यमुपवासेन सह वैकल्पिकमिति यद्यपि पक्षः सम्भवति। तथापि "शुक्लामेव सदा गृही" इत्यत्र वनस्थयतिधर्म्मतया उक्तस्य उपवासस्यैव समन्वयः प्रक्रान्तत्वात्। एकभक्तादिविधाने च उपवासे फलान्तरकल्पना। नक्तादिविधानार्थञ्च फलान्तरकल्पना। तस्मात् "शुक्लामेव सदा गृही उपवसेत्" इत्येको विधिः(शुक्लापदेनैव कृष्णाव्युदासेन तत्समानरूपतया शास्त्रान्तरादवगतकविरविवाररविसंक्रमणादिकमपि पर्य्युदस्तं तेषु नक्तादिविधिः)* तेनोपवासेन नक्तादिना गृही शुक्लकृष्णपक्षयोः व्रतं कुर्य्यात् नाद्दादशिको भवेदिति। एतदेवोक्तम् "एकभक्तेन नक्तेन" इत्यनेन। "नैवाद्वादशिको भवेत्" इति नित्यतां दर्शयति। "उपवासफलं लभेत्" इति च नित्यकर्त्तव्यसमाप्तिं दर्शयति। नोपवासकरणदोषो भवतीत्यर्थः।

तदाह सौरधर्म्मोत्तरे।

"यथा शुक्ला तथा कृष्णा विशेषो नास्ति कश्चन।
अभेदो दर्शितस्ते वै विशन्ति हरिमन्दिरम्॥"

---

* (—) अनयोः खलु रेखयोरन्तःस्थः पाठो नोपलभ्यते ख-पुस्तके।

यथैव गौरो वै विप्रः कृष्णो वा वेदविद्द्विजः ।
सन्तारयति दातारं द्वादश्युभयतस्तथा ॥”

तेन गृहिणा कृष्णपक्ष-रविवार-शुक्रवारादिवर्ज्जितायामेकादश्या-मुपोषितव्यम् अन्यत्र नक्तादिकमिति नित्यवद्विकल्पः* । स च एकैकादशीसमाप्य उभयोरपि श्रुतेर्वा उभयसमाप्यो दर्शपूर्ण-मासवन्न तु यावज्जीव एव कल्पः† ।

## अथ काम्यकल्पाः ।

तत्र विष्णुः ।

“माघशुक्लैकादश्यामुपोष्य द्वादश्यां भगवन्तं वासुदेव-मभ्यर्च्य पुष्पधूपानुलेपननैवेद्यैर्बहुभिर्ब्राह्मणतर्पणैर्व्रतमेतत् संवत्सरं कृत्वा सापत्यः पूतो भवति । यावज्जीवं कृत्वा श्वेतद्वीपमाप्नोति । उभयपक्षद्वादशीमेवं संवत्सरेण स्वर्ग-लोकमवाप्नोति । यावज्जीवञ्च कृत्वा विष्णुलोकम् । एवमेव पञ्चदशीष्वपि ।

ब्रह्मभूतममावास्यां पौर्णमास्यान्तथैव च ।
योगिभूतं परिचरेत्केशवं महदाप्नुयात् ॥”

वह्नितर्पणं तिलहोमादिना, ब्राह्मणतर्पणञ्च भोजनदक्षिणादिना । तदेते चत्वारः कल्पाः पापक्षयकामस्य । संवत्सरं शुक्लैकादश्या-

---

* अन्यत्र तु नक्तादिनित्यकल्पः इति ख-पुस्तके पाठः ।

† एवं कल्प इति ख-पुस्तके पाठः ।

मुपवासव्रतं द्वादश्यन्तम्। शुक्लायामेव यावज्जीविकम्* उपवासव्रतं श्वेतद्वीपप्राप्तिकामस्य। तथोभयपक्षोपवासव्रतं सांवत्सरिकं स्वर्गकामस्य। तदेव यावज्जीवं विष्णुलोकप्राप्तिकामस्य। कालाधिक्येन फलाधिक्यम्। "तदेतेषु व्रतेषु रविवारादेरवश्यम्भावात् तद्वर्ज्जनेन प्रथममेव गृहिणा सङ्कल्पः कार्य्य" इति योग्लोकवचनमनादेयं संवत्सरं यावज्जीवं वा उपवासस्यैव फलार्थं विहितत्वात् शुक्रवारादिवर्ज्जने तावत्कालीनव्रतस्यासिद्धेः कथं तत्फलसिद्धिः। एवमित्यादिपदैरुपवासस्यैव परामर्शात् नित्यस्याप्युभयैकादशीमात्रसमाप्यत्वाद्दर्शपूर्णमासवत् नास्ति यावज्जीवप्रयोगो यः सङ्कल्पनीयः। ननु तर्हि न भवत्येतद्व्रतं गृहिणां, रविवारादिषु गृहिणां निषेधात् इति। नैतदपि, नायं निषेध इत्यसकृदुक्तत्वात् किन्तूपवासविधिनैकवाक्यतया पर्य्युदासो निषेधफलः। स च वारादिकालपर्य्युदासो वारादिवर्ज्जिते काले कुर्य्यात् गृहिपर्य्युदासो वा गृहिव्यतिरिक्तः कुर्य्यादिति। तत्र नित्यैकादशीव्रते रविवारादिवर्ज्जनेन उपवासविधानस्य वर्णितत्वात् रविवारादिषु च नक्तादिना तस्य कर्त्तव्यत्वात्। "उपवासनिषेधे तु भक्ष्यं किञ्चित्" इति, "नक्तं हविष्यान्नम्" इति च "एकभक्तेन नक्तेन" इत्यादिना च स्वहस्तितत्वात्। काम्ये पुनरुपवासस्यैव विधानात् कथं वारादिपर्य्युदासः। न ह्यस्ति सम्भवो वत्सरमुपवसेत् रविवारादिषु नोपवसेत्। किञ्च गृहिणां

---

* यावज्जीवमिति क-पुस्तके पाठः।

त्वस्त*दिनवर्ज्जनेन† उपवासविधानं वानप्रस्थादेश्चावर्ज्जनेनेति वैरूप्यम् । अतएव गृहिण: पर्य्युदास: गृहिव्यतिरिक्त: कुर्य्यादिति नित्ये कालपर्य्युदासार्थत्वात् काम्ये पर्य्युदासार्थत्वानुपपत्ते:‡ । एकत्वाद्वचनस्य ।

अथ गृहिपर्य्युदासार्थमेव वचनमस्तु यथा ।

"आदित्येऽहनि संक्रान्तौ ग्रहणे चन्द्रसूर्य्ययो: ।
उपवासो न कर्त्तव्यो गृहिणा पुत्रिणा तथा ॥"

न हि तत्र रविवारपर्य्युदास: तेषु रविवारादिषु उपवसेदित्यनुपपत्ते: किन्तु गृहीतर: कुर्य्यादिति । तद्वदत्रापीति । नैतत् उपवासविधौ तर्हि रविवारादेरपर्य्युदासत्वात् तेषु नक्तादिविधिर्न स्यात् । तथाच "उपवासनिषेधे तु भक्ष्य"मिति नोपपद्येत ।

तथा अपराण्यपि वचनानि ।

"कृष्णपक्षेऽथ संक्रान्त्यां ग्रहणे चापि पुत्रवान् ।
उपवासं न कुर्व्वीत स्मृतं तत्राप्यनोदनम् ॥
इन्दुक्षयेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे ।
पारणञ्चोपवासञ्च न कुर्य्यात् पुत्रवान् गृही ॥§
(मधुमासे वृषे चैव संक्रान्त्यां राहुसूतके ।
उपवासं न कुर्व्वीत यदीच्छेच्छ्रेय आत्मन: ॥

---

* त्वष्टेति ख-पुस्तके पाठ: ।

† अस्तदिनवर्ज्जनेन इत्यत्र अस्तशब्देन पर्य्युदस्तरूपोऽर्थ: प्रतिपाद्यते इति प्रतिभाति ।

‡ गृहिपर्य्युदासानुपपत्तेरिति ख-पुस्तके पाठ: ।

§ उपवासं न कुर्व्वीत यदीच्छेत्सन्ततिं ध्रुवामिति ख-पुस्तके पाठ: ।

रविवारेऽर्कसंक्रान्त्यामेकादश्यां सितेतरे।

पारणञ्चोपवासञ्च न कुर्य्यात् पुत्त्रवान् गृही॥)*

तत्रापि न ग्रहणादिनिषेधो गृहिपर्य्युदासार्थः। असितैकादश्यादिषूत्तरकालपर्य्युदासार्थः कथं स्यात्।

तथा।

"वृद्धिं कृत्वा तु षण्मासान् नोपवासो विधीयते"

इति पठन्ति। एतच्च प्रथमपरिणयनविषयमित्युक्तं निबन्धैः। प्रकृतमनुसरामः। तस्मादेकादश्युपवासव्रतं संवत्सरादिसाध्यं शुक्रवारादिष्वपि गृहिणा कार्य्यम्।

यदपि वराहवचनम्।

"एकादश्यां निराहारो यो भुङ्क्ते द्वादशीदिने।

कृष्णे वा यदि वा शुक्ले तद्व्रतं वैष्णवं महत्॥"

महत्त्वमाह।

"यदीच्छेद्विष्णुना वासं सुतसम्पदमात्मनः।

एकादश्यां न भुञ्जीत पक्षयोरुभयोरपि॥"

ननु यदीच्छेदिति इच्छाकर्म्मतया विष्णुसहवासादितया प्रत्येकमवगमात् एकैकस्यैव फलवत्त्वम्। ततोभयैकादशीव्रतं सकृद्वा वत्सरं वा यावज्जीवं वा कृतं फलसाधनतया विधीयते। तत्र सकृद्वार्षिकौ विष्णुविरोधात् न सम्भवतः। यावज्जीवप्रयोगफलत्वेन विष्णुलोकप्राप्तेरुक्तत्वात्। सकृत्करणादेव तत्सिद्धौ

* (—) अनयो रेखयोरन्तर्गतमधिकं श्लोकद्वयं क-पुस्तके नोपलभ्यते।

यावज्जीवविधानानुपपत्तेः । (न च यावज्जीवप्रयोगसाध्यत्वं विष्णुना सहवासस्य सकृत्प्रयोगफलत्वञ्च पुत्रादेरिति सम्भवति न कुर्व्वीतेति सकृदुच्चरितेन तुल्यरूपकर्म्मविधानानुपपत्तेः)* । अथ यावज्जीवप्रयोगोऽपि पारलौकिकपुत्राद्यर्थिनां सम्भवत्येव । नैतदेवम्† । यावज्जीवप्रयोगादेव परमपुरुषार्थस्य विष्णुसहवासस्य सिद्धौ न कश्चिदपि प्रेक्षावान् पारलौकिकपुत्राद्यर्थी स्यात्, तदर्थं वा कर्म्म कुर्य्यात् । उच्यते,—अतएव तर्हि विष्णुविरोधात् न भुञ्जीतेत्यावृत्तं बोद्धव्यम् । मुनिना तु सकृदुच्चारणं लाघवार्थं कृतम् । तत्र पुत्राद्यर्थिनः सकृद्विधानात् आवृत्तिकल्पना प्रमाणाभावात् । विष्णुसहवासार्थिनस्तु यावज्जीवविधानमिति न विरोधः ।

तथा विष्णुधर्म्मोत्तरम् ।

"एकादश्यां यदा राम आदित्यस्य दिनं भवेत् ।
उपोष्या सा महापुण्या पुत्रपौत्रविवर्द्धिनी ॥"

पुत्रपौत्रविवर्द्धनहेतुत्वाद्गृहिणैव तत्र कर्त्तव्यम्‡ । अतो नानेन रविवारादिनिषेधस्यैकवाक्यता, नित्यव्रतविधिना एकवाक्यतया कालपर्य्युदासार्थत्वात् । एतद्विध्येकवाक्यत्वे च गृहिपर्य्युदासार्थत्वापत्तेः ।

---

* (—) अनयो रेखयोरन्तर्गतः पाठः ख-पुस्तके नोपलभ्यते ।

† नैतदपीति ख-पुस्तके पाठः ।

‡ बोद्धव्यमिति क-पुस्तके पाठः ।

तथा भविष्ये ।

"एकादशी द्वादशी च तत्रोपोष्य क्रतोः फलम् ।
अहोरात्रेण चैकेन ब्रह्महत्यां व्यपोहति ॥"

अत्रापि न च वारादिपर्य्युदासः अवश्याङ्गीकर्त्तव्यनित्यविधिना एकवाक्यतया निराकाङ्क्षस्य नानेनाप्येकवाक्यता अस्यापि निराकाङ्क्षत्वात् सामान्यश्रुतिसङ्कोचापत्तेः । यच्च योग्लोकेन—"पुत्रपौत्रविवर्द्धिनी," "सुतसम्पदमात्मनः" इत्यादिकमनुवादमात्रं वर्णितम्, तदसङ्गतम् । अधिकारिविशेषणापेक्षयाऽर्थवादिकफलस्वीकारस्य रात्रिसत्राधिकरणोक्तत्वात् । ब्रह्महत्याव्यपोहनस्यापि—"ब्रह्महा द्वादशरात्रमुपवसेत्" इति हीनतमब्राह्मणवधविषये रहःप्रायश्चित्ते सम्भवत्येव इति अमीमांसकवचनं हेयम् ।* ननु रविवारादिषु नित्यस्य नक्तादिना समाप्यत्वात् यावज्जीविककाम्योपवासव्रते† कृते न प्रसङ्गान्नित्यसिद्धिरतो नित्यस्यातिक्रमः स्यात् इति, नैतत् । "नैवाद्वादशिको भवेत्" इति, अव्रतिना न भाव्यमिति तस्यार्थः । तच्च सम्पन्नम्‡ । "उपवासनिषेधे तु" इति च उपवासाकरणे नक्तादिकमुपवासकार्य्ये विहितम्, तत्र चोपवासस्य निषिद्धस्य समाप्तत्वात् कुतो न नित्यसिद्धिः । यावज्जीवकाम्योपवासविधौ विधिविरोधादेव काम्याकरणे नित्यस्य कर्त्तव्यता नान्यदा । काम्यमेव विष्णु-

* यथोक्तमेवानुसन्धेयम् इत्यधिकः पाठः क-पुस्तके दृश्यते ।

† यावज्जीविकेऽपि काम्योपवासे इति क-पुस्तके पाठः ।

‡ सम्पूर्णमिति क-पुस्तके पाठः ।

सायुज्यफलकम् (नित्यातिक्रमजनितपापक्षयं विना न सुफलप्रसवाय प्रभवति)* अतस्तत्कुरुत इति न विरोधः । अथ यदा पूर्व्वदिने पूर्णापि परदिने निःसृता, द्वादशी तु न निःसृता तदा पूर्व्वदिने गृहिभिः कार्य्या यतिभिश्चोत्तरा ।

यदाह प्रचेताः ।

"एकादशी प्रवृद्धा चेच्छुक्ले कृष्णे विशेषतः ।
तत्रोत्तरां यतिः कुर्य्यात् पूर्व्वामुपवसेद्गृही ॥"

विशेषत एकादशी विवृद्धा न द्वादशी, नापि दशमी इत्यर्थः । अविशेषत इति पाठे नञः कल्पनानर्थक्यञ्च । यतिपदं गृहस्थेतरपरम् । यदा द्वादश्यपि वर्द्धते तदा स एवाह ।

"पूर्णाप्येकादशी त्याज्या वर्द्धते द्वितयं यदि ।
द्वादश्यां पारणालाभे पूर्व्वैव परिरच्यते ॥"

पारणालाभ इति पारणायोग्यद्वादश्यप्राप्तावित्यर्थः । वर्द्धते द्वितयमेकादशीद्वादश्यौ न तु दशम्येकादश्यौ । पूर्णापि त्याज्येत्यनुपपत्तेः । सर्व्वैरपि पूर्व्वैव ।

तथा ब्रह्मपुराणम् ।

"एका लिप्तासमायुक्ता यदि वृद्धिपरा भवेत् ।
तथाप्येकादशी नास्ति दशम्या वाप्यसङ्गता ॥"

अस्यार्थः । एकादशीलिप्तामात्रसंयुक्ता द्वादशी परदिने पारणोचिता द्वादशी वृद्धिपरा वर्त्तते, तदा दशम्याऽसंयुक्ता पूर्णापी-

---

* (—) अनयो रेखयोरन्तः क-पुस्तके "नित्यातिक्रमजनितपापचयविलक्षणसुफलप्रसवाय प्रभवति" इत्येवमेव पाठः समुपलभ्यते ।

त्यर्थः । सा नास्ति एकादशीकार्य्यं न कुरुते, किन्तु एकादशी-लिप्तायुक्तैव द्वादशी उपोष्या इत्यर्थः । यत्र तु पूर्व्वदिने दशमी-युक्तैकादशी, परदिने च एकादशीद्वादशी, अपरदिने द्वादशी न वर्त्तते ।

तत्राह ब्रह्माण्डपुराणम् ।

"एकादशी द्वादशी च परतो द्वादशी न चेत् ।
तदा क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥
कलाप्येकादशी यत्र परतो द्वादशी न चेत् ।
तत्र क्रतुशतं पुण्यं त्रयोदश्यान्तु पारणे ॥
एकादशीकलायुक्तामुपोष्य द्वादशीं नरः ।
त्रयोदश्यान्तु यो भुङ्क्ते विष्णुसायुज्यमृच्छति ॥"

क्रतुशतपुण्यप्राप्तिश्च सर्व्वाश्रमिणां सम्भवति । पापक्षयार्थमपि क्रतूनां विहितत्वात् । पारणायोग्यद्वादशीनिर्गमे तु त्रयोदश्यां पारणे दोषमाह ।

ब्रह्माण्डपुराणम् ।

"एकादशीमुपोष्यैव द्वादश्यां पारणं स्मृतम् ।
त्रयोदश्यां न तत्कुर्य्याद्द्वादशद्वादशीक्षयात् ॥"

अथ स्कान्दपुराणम् ।

"उपोष्यैकादशीं यस्तु त्रयोदश्यान्तु पारणम् ।
करोति तस्य नश्यन्ति द्वादश्यो द्वादशैव तु ॥"

द्वादशीविनाशाभिधानेन द्वादशीव्रतमेवैतत् तदेकादश्युपोषणेन इत्युक्तम् । अतएव एकादशी पितॄणान्तु द्वादशी चक्रपाणिन

इति पञ्चरात्रवचनम् । द्वादशीनाशदोषश्रुतिश्च सर्व्वाश्रमिणां सम्भवति, पापक्षयार्थमपि द्वादशीनां विष्णुना विहितानां सर्व्वै-रेव कृतानां नाशसम्भवात् ।

अथ दशमीयुक्तानां निषेधवचनानि ।

तत्र वराहपुराणे ।

"दशम्यां नारभेन्नैव त्रयोदश्यां समापयेत् ।"

उदयोपक्रमकलायां ह्युपवासस्यारम्भः । उदयान्तरारम्भसमाप्तिः । तेनाद्यकलासम्बन्धेऽपि नोपवस्तव्यमिति अस्यार्थः ।

स्कन्दपुराणे ।

"दशम्यैकादशी विद्धा गान्धारी तामुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्ज्जयेत् ॥
मुहूर्त्तेनापि संयुक्ता दशम्यैकादशी तु या ।
तामुपोष्य नरो मोहात्सुखे धर्म्मे विमुच्यते ॥"

कूर्म्मपुराणे ।

दशम्येकादशी यत्र तत्र सन्निहितो हरः ।
एकादशीद्वादशी यत्र तत्र सन्निहितो हरिः ॥
दशमीशेषसंयुक्तामुपोष्यैकादशीं किल ।
संवत्सरकृताच्चैव सुखाद्धर्म्माच्च हीयते ॥
दशमीशेषसंयुक्ता गान्धारी तामुपोषिता ।
तस्याः पुत्रशतं नष्टं तस्मात्तां परिवर्ज्जयेत् ॥

शेषोऽन्त्यविनाडिका।

लिखन्ति।

"दशम्यनुगता हन्ति द्वादशद्वादशीफलम्।
धर्म्मापत्यधनायूंषि त्रयोदश्यान्तु पारणम्॥"

तथा।

"कलयापि च संस्पृष्टां दशम्यैकादशीं त्यजेत्।"

नारदपुराणस्य मार्कण्डेयविष्णुसंवादे।

"यैः कृता दशमीमिश्रा जड़वाक्याच्च मानवैः।
ते गता निरये घोरे युगानेकोनसप्ततिम्॥"

तथा वैश्यभिक्षुसंवादे।

"दशमीमिश्रिता वैश्य भवेदेकादशी तिथिः।
आसुरी च भवेदेषा तिथिरेव न संशयः॥
स्नानं दानं जपो होमः स्वाध्यायः पितृतर्पणम्।
अस्यान्तिथावुपोषित्वा वृथा भवति तत्क्षणात्॥
अपत्यनाशमाप्नोति महानरकदायिनी।
धनहानिर्भवेद्वैश्य न कर्त्तव्या कथञ्चन॥
या शुद्धा द्वादशी ग्राह्या त्रयोदश्यान्तु पारणम्॥"

तथा मार्कण्डेयविष्णुसंवादे।

"अरुणोदयवेलायां दशमी तिष्ठते यदि।
तथाप्येकादशीं हित्वा द्वादशीं समुपावसेत्॥
रविचक्रार्द्धमात्रापि दशमी श्रूयते यदि।
शुद्धापि द्वादशी ग्राह्या त्रयोदश्शान्तु पारणम्॥

कलार्द्धेनापि विद्धा या भवेदेकादशी यदा।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपावसेत्* ॥"

तथा सौरधर्म्मोत्तरे† ।

"एकादशीमुपवसेद्‡द्वादशीमथवापि तु।
विमिश्रां वापि कुर्व्वीत न दशम्या युतां क्वचित् ॥"

अनेनोपवासस्य कालत्रयमुक्तम्। केवलैकादशी केवलैव द्वादशी विमिश्रा वा, अनयोरेवोपवास इत्यर्थः। तत्र यदि द्वादशी उदयकाले§ दशमीयुक्ताप्येकादशी गृह्यते तदा केवलद्वादश्युपवासविधायकवचनं निर्व्विषयं¶ स्यात्।

भविष्यपुराणम्।

"एकादशीं दशायुक्तां वर्द्धमानां विवर्ज्जयेत्।
पक्षहानौ स्थिते सोमे लङ्घयेद्दशमीयुताम् ॥
एकादशी दशायुक्ता परतोऽपि न वर्द्धते।
यतिभिर्गृहिभिश्चैव सैवोपास्या सदा तिथिः‖ ॥"

दशा दशमी। द्वादशीदिने एकादशीकलार्द्धमात्रस्यापि अनिर्गमे सति दशम्यापि विद्धा एकादशी उपोष्या इति प्रतीयते शास्त्रार्थः। स तु सौरधर्म्मोत्तरकूर्म्मपुराणादिविरुद्धः।

---

* समुपोषयेदिति क-पुस्तके पाठः।

† तथा धर्म्मोत्तरे इति क-पुस्तके पाठः।

‡ एकादशीमुपोष्येत इति ख-पुस्तके पाठान्तरं, क-पुस्तके तु अयमेव पाठः।

§ द्वादशीदिवसनिर्गमे उदयकाले इति क-पुस्तके पाठः।

¶ उपवासवचनं निर्व्विषयमिति ख-पुस्तके पाठः।

‖ तदा तिथिरिति ख-पुस्तके पाठः।

यदाह सौरधर्म्मोत्तरे ।

"एकादशीमुपोष्येत द्वादशीमथवा पुनः ।

विमिश्रा वापि कर्त्तव्या न दशम्या युता क्वचित् ॥"

कूर्म्मपुराणे ।

"एकादशीमुपोष्येत द्वादशीमथवापि च ।

विमिश्रां वापि कुर्व्वीत न दशम्या युतां क्वचित् ॥

कुर्य्यादलाभे संयुक्तां नालाभेऽपि प्रवेशिनीम् ।

उपोष्या द्वादशी तत्र त्रयोदश्यान्तु पारणम् ॥

उदयात्प्राग्दशम्यास्तु शेषः संयोग उच्यते ।

उपरिष्टात्प्रवेशस्तु तस्मात्संवर्ज्जयेत्सदा ॥"

अस्यार्थः । द्वादश्यां कलार्द्धमात्रैकादश्या अनिर्गमे यदि दशमी नोदयं स्पृशति तदा सा संयुक्ता उच्यते । सैवोपोष्या । अथोदयं स्पृशति सा प्रवेशिनीपदवाच्या । न पुनरेकादश्यामलाभात् प्रवेशिनीमुपवसेत् । तदिदमुक्तं "नालाभेऽपि प्रवेशिनी"मिति । एकादशीमुपवसेत् । द्वादशीं वा केवलाम् । विमिश्रामेकादशीं द्वादशीञ्चेति पक्षत्रयम्* ।

तथा सौरधर्म्मोत्तरे । सूत उवाच ।

"कीदृशस्तु भवेद्वेधो योगो विप्रेन्द्र कीदृशः ।

योगवेधौ समाचक्ष्व ययोर्व्वेष्टमुपोषणम् ॥"

व्यास उवाच ।

---

* विमिश्रामेकादशीद्वादशीयुग्मपक्षे उदयलाभ इति ख-पुस्तके पाठः ।

"या तिथिः स्पृशते राजन् प्रातर्वक्त्रावलोकिनी।
स वेध इति विज्ञेयो योगः सूर्य्योदयी मतः* ॥"

सूर्य्योदयात्प्राक् अन्योऽन्यमुखावलोकनरूपं† प्रातःकालं यदि दशमी स्पृशति न तूदयं स वेध इति भाषितम्। यस्य पूर्व्ववचनेन "शेषः संयोग" इत्युक्तम्, तदा "तूपरिष्टात् प्रवेशस्तु" इत्युक्तम्। योगसंयोगयोः परिभाषितत्वादेवास्य भेदात् परस्परविरोधो न वाच्यः। तदयं सङ्क्षेपार्थः। सूर्य्योदयकाले दशमीस्पृष्टा एकादशी न कदाचिदप्युपोष्या।

"दशम्यैकादशीं युक्तां प्रमादाद्यद्युपोषयेत्।
संवत्सरकृतं पुण्यं तस्य नश्यति तत्क्षणात् ॥"

किन्त्वेकादशी निःसरतु न निःसरतु वा द्वादश्येव उपोष्या। यदा तु वक्त्रावलोकनकालमात्रं दशमी स्पृशति नोदयं, परदिने च एकादशी न निःसरति, तदा एकादशीं वेधवतीमुपवसेत्। "दशमीयुक्ता" "दशम्या" इत्यादिकमपि अस्मिन्नेव विषये बोद्धव्यम्।

अतएव।

"कलार्द्धेनापि विद्धा स्याद्दशम्यैकादशी तु या।
तदा ह्येकादशीं मुक्त्वा द्वादशीं समुपावसेत् ॥"

तथा वराहपुराणम्।

"एकादशी विलुप्ता चेत्परतो द्वादशी स्थिता।

---

* सूर्य्योदयं मत इति ख-पुस्तके पाठः।

† अन्योऽन्यमुखावलोकनं प्रातःकालमिति ख-पुस्तके पाठः।

उपोष्या द्वादशी तत्र यदीच्छेत्परमं पदम् ॥
द्वादश्यामुपवासन्तु ये वै कुर्व्वन्ति ते नराः ।
वत्स मामेव पश्यन्ति मम व्रतपरायणाः ॥"

उदयकालस्य दशम्याक्रान्तत्वादुदययोगविलोपादेकादशी विलुप्ता उच्यते। परत्राप्युदयकाले द्वादशी स्थिता नैकादशीत्यर्थः। न तु दैवादकरणविषयं पूर्व्ववचने मुक्तेति श्रुतेः।

तथा।

"द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणम्।
निषिद्धमपि कर्त्तव्यमाज्ञेयं पारमेश्वरी ॥"

एकादश्यामुपवासे त्रयोदश्यां पारणं निषिद्धमनुजानाति।

तथा।

"यदाक्रान्ता दशम्या तु एकादश्यासमन्ततः।
तदा ह्येकादशीं त्यक्त्वा द्वादशीं समुपावसेत्* ॥"

एकादशीसमन्वितो दिवसो यदा दशम्याक्रान्तः स्पृष्ट इत्यर्थः।

तथा।

"एकादशी यत्र लुप्ता परतो द्वादशी भवेत्।
उपोष्या द्वादशी तत्र यदीच्छेत्परमां गतिम् ॥"

पूर्व्वदिने दशमी विद्धा क्षीणा परत्र च लुप्ता नास्ति किन्तु द्वादश्येव परं तत्र उपोष्या द्वादशीत्यर्थः।

तत्रैवाह।

---

* द्वादश्यामभ्युपोषयेदिति क-पुस्तके पाठः।

"त्रयोदश्यान्तु शुद्धायां पारणे पृथिवीफलम्* ।
शतमभ्यधिकं वापि नरः प्राप्नोत्यसंशयम् ।
एकादशी यदा न स्यादुपोष्या द्वादशी तदा ॥"

यदा दिनद्वयेऽप्युदयकाले न स्यादेवेत्यर्थः† ।

यत्तु भविष्यपुराणम् ।

"एकादशीं दशायुक्तां वर्द्धमाने विवर्ज्जयेत् ।
पक्षहानौ स्थिते सोमे लङ्घयेद्दशमीयुताम् ॥
एकादशी दशायुक्ता परतोऽपि न वर्द्धते ।
गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः ॥"

तदुदयात्प्राक् दशमीयोगविषयम् । असमाधेयकेवलद्वादश्युपवासविरोधात् ।

यदा तु तिथित्रयं यथा सौरधर्म्मोत्तरे ।

"एकादशी द्वादशी च तच्छेषे च त्रयोदशी ।
त्रिःस्पृशा सा तिथिः प्रोक्ता सर्व्वपापहरा स्मृता ।
उपवासः कृतस्तत्र महापातकनाशनः ॥"

तदेतद्वनस्थादीनाम् । गृहिणां निषिद्धत्वात् ।

तथाहि मत्स्यपुराणम् ।

"दिनक्षयेऽर्कसंक्रान्त्यां ग्रहणे चन्द्रसूर्य्ययोः ।
उपवासं न कुर्व्वीत पुत्रपौत्रसमन्वितः ॥"

---

* पृथ्वु चेत् फलमिति क-पुस्तके पाठः ।

† न स्यादेवेति असम्भवादिति ख-पुस्तके पाठः ।

दिनक्षयलक्षणमाह कूर्म्मपुराणे ।

"द्वौ तिथ्यन्तावेकवारे यस्मिन् स स्याद्दिनक्षयः ।
स्नानं दानं जपो होमो नोपवासो गृहाश्रमे ॥"

नक्तमाह भविष्ये ।

"मुहूर्त्तोनं दिनं केचित्प्रवदन्ति मनीषिणः ।
नक्षत्रदर्शनान्नक्तमहं मन्ये गणाधिप ॥"

सौरे मुहूर्त्तोनं दिनं नक्तमन्यत्र तु सर्व्वत्र नक्षत्रदर्शनम् ।

अथ स्कन्दपुराणम् ।

"दशम्येकादशीविद्धा क्षयमेकादशी गता ।
नक्तं तत्र प्रकुर्व्वीत नोपवासो विधीयते ॥"

विद्धेति उदयात्प्राग्वेधोऽभिमतः । उदयसम्बन्धे सति द्वादश्यामुपवासविधानात् । "क्षयमेकादशी गते"ति दशमीतः क्षयमेकादशी गता । उदयात्पूर्व्वकालं वक्तावलोकनकालं न स्पृशति अतएव क्षयं गता । उदयपूर्व्वावस्थानेऽपि द्वादश्यामुपवासविधानात् ।

तथा ।

"एकादशी द्वादशी च तच्छेषे च त्रयोदशी ।
स्नानं दानं जपं होमं कृत्वा ब्राह्मणवाचनम्* ॥
निर्व्वर्त्त्य द्वादशीकर्म्म ततो नक्तेन वर्त्तयेत् ।
दिनक्षये तु सम्प्राप्ते नोपोषनियमौ स्मृतौ ।
उपोषे पुत्त्रनाशः स्यान्नियमे तु धनक्षयः ॥"

* ब्राह्मणतर्पणमिति ख-पुस्तके पाठः ।

गृहीतं द्वादशीव्रतं न त्याज्यम्।

तदाह वराहपुराणे।

"द्वादश्यामुपवासन्तु ये वै कुर्व्वन्ति ते नराः*।
वत्स मामेव पश्यन्ति मम भक्तिपरायणाः॥
पूर्व्वसङ्कल्पितं यत्तु व्रतं सनियमव्रतैः।
तत्कर्त्तव्यं नरैस्तद्वद्दानाध्ययनवर्ज्जितम्॥
बहुकालिकसङ्कल्पो गृहीतश्च पुरा यदि।
(सूतके मृतके चैव व्रतं तन्नैव दुष्यति)†॥
सूतके मृतके चैव हर्षे वा समुपस्थिते।
परचक्रागमे रोगे न त्याज्यं द्वादशीव्रतम्॥
सूतके मृतके स्नात्वा प्रणम्य मनसा हरिम्।
एकादश्यां न भुञ्जीत व्रतमेवं न लुप्यते॥
द्वादश्याञ्च तथा भुक्त्वा मृतकान्ते जनार्द्दनम्।
पूजयित्वा विधानेन भोजयेद्द्विजोत्तमान्॥
पूर्व्वोक्ते तु व्रते चीर्णे‡ यथोक्तफलभाग्भवेत्।
व्रतभङ्गान्महद्दुःखं प्राप्नोति नरकं तथा॥
तस्मात्प्रमादे दुःखे वा सूतके मृतकेऽपि वा।
स्नात्वा कायव्रतं कुर्य्याद्दानार्च्चनविवर्ज्जनम्॥"

---

* मानवा इति क-पुस्तके पाठः।

† (—) अनयो रेखयोरन्तःस्थः पाठः क-पुस्तके नोपलभ्यते।

‡ तथार्हेन्तु व्रते चीर्णे इति ख-पुस्तके पाठः।

उपवासाशक्तौ पुनराह ।

असामर्थ्ये शरीरस्य व्रते च समुपस्थिते ।
कारयेद्धर्म्मपत्नीं वा पुत्त्रं वा विनयान्वितम् ॥

धर्म्मपत्नीं धार्म्मिकीं,* यस्यां निभृतेन† भोजनादिकं नाशङ्क्यते । (‡विनयान्वितत्वमपि पुत्त्रस्यैतदर्थमेवोक्तम् ।

तथा ।

भार्य्या भर्त्तुर्व्रतं कुर्य्याद्भार्य्यायास्तु पतिस्तथा ।
असामर्थ्ये तयोस्ताभ्यां व्रतभङ्गो न जायते)‡ ॥

एतच्च पीड़ायामपि§ फलेच्छायामवाप्ते वा फले काम्यमपि अवश्यं समापनीयम् । अवधिं यावन्निवर्त्तितव्यम् । "यथोक्त-फलभाग्भवेत्" इति वचनात् । "गृहीतञ्च पुरा यदि" इति श्रुतेः । नित्यस्य अगृहीतस्यापि कर्त्तव्यत्वात् "यदी"ति नोप-पद्यते । नित्येऽपि सूतकमृतकयोः प्रतिप्रसवः सम्भवत्येव अन्यथा-शुचेरनधिकारात् ।

अथ वराहपुराणे ।

"एकादश्यान्तु नक्तेन नरः कुर्य्याद्यथाविधि ।
मार्गशीर्षशुक्लपक्षादारभ्याब्दं विचक्षणः ॥
तद्व्रतं धनदस्येदं क्षतं वित्तं प्रयच्छति ।

---

* धार्म्मिकामिति क-पुस्तके पाठः ।

† नियमेन इति क-पुस्तके पाठः ।

‡ (—) अनयो रेखयोरन्तःस्थः पाठः क-पुस्तके नोपलभ्यते ।

§ पीतायामपीति ख-पुस्तके पाठान्तरम्, गृहीतायामपीति क-पुस्तके पाठः ।

तस्य ब्रह्मा ददौ प्रीतस्तिथिमेकादशीं प्रभुः ॥
तस्यामनग्निपक्वाशी भवेत्सुनियतः शुचिः।
तस्यासौ धनदो देवस्तुष्टो वित्तं प्रयच्छति ॥"

एकमेवेदमब्दव्रतं नक्तमनग्निपक्वाशनम्।

सर्व्वत्रैव च नक्तभोजने।

"हविष्यभोजनं स्नानं सत्यमाहारलाघवम्।
अग्निकार्य्यमधःशय्यां नक्तभोजी षडाचरेत् ॥"

इति भविष्योक्तं वेदितव्यम्।

अथ इतिकर्त्तव्यता उच्यते।

तत्र स्मृतिसमुच्चये।

"सायमाद्यन्तयोरह्नोः सायम्प्रातश्च मध्यमे।
धर्म्मोपवासे कुर्व्वीत नैव भक्तचतुष्टयम् ॥"

दिनद्वयेऽपि सकृद्भोजनपरम्। न तु सायम्प्रातस्त्वं विवक्षितम्। विवक्षायामुपवासदिनेऽपि विवक्षा स्यात्। तथा सति उभयक्षणपरित्यागेन भोजनेऽपि लोकसिद्धोपवासादन्य एव शास्त्रपरिभाषितः स्यात्। "नैव भक्तचतुष्टय"मिति निषेधे चातुर्भक्तेऽवगते सायमादिविशेषणविवक्षायां वाक्यभेदापत्तेः।

तथाऽपरम्।

"कांस्यं माषं मसूरञ्च चणकं कोरदूषकम्।
शाकं मधु परान्नञ्च वर्ज्जयेदुपवसन् स्त्रियः ॥"

अथ तद्दिवसीयं त्याज्यमुच्यते ।

"असत्यभाषणं द्यूतं दिवास्वप्नञ्च मैथुनम् ।
एकादश्यां न कुर्व्वीत उपवासपरो नरः ॥
उपवासे तथा श्राद्धे न खादेद्दन्तधावनम् ।
दन्तानां काष्ठसंयोगो हन्ति सप्त कुलानि वै ॥
स्त्रीणां सम्प्रेक्षणात् स्पर्शात्ताभिः सङ्कथनादपि ।
विपद्यते ब्रह्मचर्य्यं न दारेष्वृतुसङ्गमात् ॥"

"सम्प्रेक्षणं" सम्यक् प्रकर्षेण ईक्षणम् अनुरागादित्यर्थः ।

"स्मरणं कीर्त्तितं केलिः* प्रेक्षणं गुह्यभाषणम् ।
सङ्कल्पोऽध्यवसायश्च कार्य्यनिर्वृत्तिरेव च ।
एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः ॥"

एतदन्यथाभूतं न ब्रह्मचर्य्यविरोधकम् ।

"असकृज्जलपानाच्च ताम्बूलस्य च भक्षणात् ।
उपवासः प्रदुष्येत† दिवास्वप्नाच्च मैथुनात् ॥"

तथा ।

"पतितपापपाषण्डसम्भाषावधूततापसानृतस्तेयद्रोहादिकं वर्ज्जयेत् ।"

"पाषण्ड"श्चाण्डालादिः । आदिपदं पापहेतुमात्रपरम् ।

---

* कीर्त्तनञ्चैव इति क-पुस्तके पाठः ।

† उपवासः प्रणश्येत इति क-पुस्तके पाठः ।

अतएव ।

"उपावृत्तस्य पापेभ्यो यस्तु वासो गुणैः सह ।
उपवासः स विज्ञेयः सर्व्वभोगविवर्ज्जितः ॥"

"उपावृत्तः" निवृत्तः । "गुणा"श्च अष्टौ आत्मनः ।

तथाह बुधः ।

"दया सर्व्वेषु भूतेषु क्षान्तिरनसूया शौचमनायासो मङ्गल-
मकार्पण्यमस्पृहेति कुर्य्यात् ।"

एवमेवाष्टौ आत्मगुणा इत्युपक्रम्य गौतमः । तान् विविनक्ति बृहस्पतिः ।

"परे वा बन्धुवर्गे वा मित्रे द्वेष्टरि वा सदा ।
आत्मवद्वर्त्तितव्यं हि दयैषा परिकीर्त्तिता ॥
बाह्ये चाध्यात्मिके चैव दुःखे चोत्पादिते तथा ।
न कुप्यति न वा हन्ति सा क्षमा परिकीर्त्तिता ॥
न गुणान् गुणिनो हन्ति स्तौति मन्दगुणानपि ।
नान्यदोषेषु रमते सानसूया प्रकीर्त्तिता ॥
अभक्ष्यपरिहारस्तु संसर्गश्चाप्यनिन्दितैः ।
स्वधर्म्मे च व्यवस्थानं शौचमेतत्प्रकीर्त्तितम् ॥
शरीरं पीड्यते येन अशुभेनापि कर्म्मणा ।
अत्यन्तं तन्न कर्त्तव्यमनायासः स उच्यते ॥
प्रशस्ताचरणं नित्यमप्रशस्तविवर्ज्जनम् ।
एतद्धि मङ्गलम्प्रोक्तमृषिभिस्तत्त्वदर्शिभिः ॥
स्तोकादपि प्रदातव्यमदीनेनान्तरात्मना ।

अहन्यहनि यत्किञ्चिदकार्पण्यं हि तत्स्मृतम् ॥
यथोत्पन्नेन सन्तोषः कर्त्तव्यो ह्यल्पवस्तुना ।
परस्याचिन्तयित्वार्थं साऽस्पृहा परिकीर्त्तिता ॥"

एतेऽष्टौ गुणाः ।

"पुष्पालङ्कारवस्त्राणि गन्धधूपानुलेपनम् ।
उपवासे च दुष्येत दन्तधावनमञ्जनम् ॥"

चकारान्नक्तादिष्वपि ।

"क्षमा सत्यं दया दानं शौचमिन्द्रियनिग्रहः ।
देवपूजाग्निहवनं सन्तोषोऽस्तेयमेव वा ।
सर्व्वव्रतेष्वयं धर्म्मः सामान्यो दशधा स्मृतः ॥"

पौराणिकान्येतानि वचनानि ।

यत्तु भविष्यवचनं योग्लोकेन लिखितम् ।

"भक्ष्यं भोज्यं तथा लेह्यमोदनन्तु प्रकीर्त्तितम् ।
पेयञ्चानोदनं प्रोक्तं तस्मात्तत्परिवर्ज्जयेत् ॥
पयः पीत्वा ततो गव्यं स्नातव्यं कुरुनन्दन ।
नान्नं भोज्यं भवेत्तस्मादनोदनमिति स्मृतिः ॥"

तदनोदनासप्तमीव्रतस्य । तद्वचनं कथमत्र संबध्यतां प्रकरणविरोधात् । किञ्चानेन गव्यपयःपानस्य अनोदनत्वेन व्याख्यातत्वात् एकादश्यां चानोदनक्षीरपानयोर्भेदेनोक्तत्वात् नात्र एवंविधमनोदनम् । किन्तु ओदनं भक्तं ततोऽन्यदनोदनमिति यथाप्रचारमेव उक्तम् । अतो योग्लोकमतं हेयम् ।

तथाऽपरं वराहपुराणे ।

"एकादश्यां सिते पक्षे यदर्क्षन्तु पुनर्व्वसुः ।
नाम्ना सा विजया ख्याता तिथीनामुत्तमा तिथिः ॥
यो ददाति तिलप्रस्थं त्रिकालं वत्सरं नरः ।
उपवासञ्च यस्तस्यां करोत्येतत्समं स्मृतम् ॥
तस्यां जगत्पतिर्देवः* सर्व्वदेवेश्वरो हरिः ।
प्रत्यक्षतां प्रयात्याशु तदानन्तफलं स्मृतम् ॥
एकादश्यां सिते पक्षे पुष्यर्क्षं यत्र सत्तम ।
तिथौ भवति सा प्रोक्ता विष्णुना पापनाशनी ॥
तस्यामाराध्य गोविन्दं जगतामीश्वरं परम् ।
सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ॥
यश्चोपवासं कुरुते तिथौ तस्यां द्विजोत्तम ।
सर्व्वपापविनिर्मुक्तो विष्णुलोके महीयते ॥
दानं यद्दीयते किञ्चित्तमुद्दिश्य जनार्द्दनम् ।
होमो वा क्रियते तस्यामक्षयं कथितं फलम् ॥"

अथ विष्णुधर्म्मोत्तरे ।

"एकादश्यां सिते पक्षे पुष्यर्क्षं यत्र सत्तम ।
द्वादश्यां वा तदाशेषपापक्षयकरं स्मृतम् ॥"

---

* जगत्पतिः कृष्ण इति ख-पुस्तके पाठः ।

अथ सङ्कल्पः ।

तत्र* शान्तिपर्व्वणि ।

"गृहीत्वौदुम्बरं पात्रं वारिपूर्णमुदङ्मुखः ।
उपवासन्तु गृह्णीयाद्यदा सङ्कल्पयेद्बुधः ॥
देवतास्तस्य तुष्यन्ति कामिकन्तस्य सिध्यति ।
अन्यथा तु वृथा मर्त्त्याः क्लिश्यन्ति स्वल्पबुद्धयः ॥"

सङ्कल्पवाक्यं वाराहे ।

"एकादश्यां निराहारो भूत्वा चैव परेऽहनि ।
भोक्ष्येऽहं पुण्डरीकाक्ष शरणं मे भवाच्युत ॥"

सङ्कल्पग्रहणञ्च प्रातरेव सर्व्वत्र विशेषवचनं विना ।

"प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिकम् ।
अह्नश्च पञ्चमो† भागः प्रातश्च घटिकात्रयम् ॥"

नैमित्तिकैकभक्तनक्तादीनाम्‡ उपवासकार्य्ये विधानात् सोमधर्म्माणामिव फलचमसप्राप्तेः अत्रापि मन्त्रस्य प्राप्तस्योहेन प्रयोगः कार्य्यः। अतएव एकभक्तादिपूर्व्वापरदिनयोरेकभक्तादिको धर्म्मः कार्य्यः। यद्वा द्वादशीव्रतं खल्वेतद्गुणवतो वासुदेवस्यार्च्चनं होमो जप इत्यादि प्रधानं धर्म्मः। तच्च कृतोपवासनक्तादेः कदाचिद्वर्त्तमानोपवासादिर्विधीयते। उपवासादिकन्तु संस्का-

---

* अत्र इति ख-पुस्तके पाठः ।

† अह्नः पञ्चतमो भाग इति क-पुस्तके पाठः ।

‡ नैमित्तिकैकभक्तादीनामिति ख-पुस्तके पाठः ।

रकं लिङ्गात्। अङ्गभूतोपवासप्रकाशको मन्त्रो नक्तादिपक्षे निवर्त्तते। व्रीहिमन्त्र इव यावके प्रयोगे*। अतोऽस्याप्रयोग एव।

यच्च योग्लोकेन लिखितम्।

"एकभक्तेन यो मर्त्त्य उपवासव्रतञ्चरेत्।
उपोष्य नक्तेन विभो चत्वारः फलसंयुताः॥"

इत्यादिषु उपवासपदप्रयोगो "मासमग्निहोत्रं जुहोती"तिवत् नाम्ना धर्म्मातिदेशात् प्राप्तस्य मन्त्रस्य ऊहेन प्रयोगः। सौर्य्य-चराविव "देवस्य त्वा" मन्त्रस्य इत्यन्तम्। तदसङ्गतम्। अङ्गा-रकचतुर्थीनक्ते एकभक्ते व्रतान्तरीयेऽपि व्रतान्तरीयोपवासनाम्ना यदि धर्म्मातिदेशस्तदा एकादशीनक्तादिव्रतस्य किमायातम्। व्रतानां भिन्नत्वात् अङ्गारकचतुर्थीव्रतादिष्वेवास्य प्रयोगः स्यात्। किञ्च तदापि फलतिलानोदनपवनपयःपञ्चगव्या†हारादिषूप-वासपदस्य दर्शितत्वात् कथमस्य सर्व्वव्यापिता। किञ्च उप-वासपदस्य नानातिथिविहितोपवाससाधारणत्वात् किंनामीय-धर्म्मातिदेशकत्वम्। अथैकादशीव्रततया विशेषः। तदा तदेव चोदनालिङ्गमतिदेशकं नाम्नाऽसाधारणस्यैवातिदेशत्वात्‡। किञ्च उपवासपदस्य सर्व्वव्रतेष्वेव

"उपावृत्तस्य पापेभ्यो वासो यस्तु गुणैः सह"

---

* अत्र च निरङ्गयवपृष्टस्येति अधिकः पाठः ख-पुस्तके दृश्यते।

† फलजलतिलानोदनयवपयःपञ्चगव्येति क-पुस्तके पाठः।

‡ नानासाधारणस्यैवातिदेशत्वादिति ख-पुस्तके पाठः।

इत्युक्तवचनेन यौगिकत्वस्य शास्त्रकारैरुक्तत्वात्। "यौगिकञ्च नाम नातिदेशकं यत्रातिदेशं विनापि प्रवृत्तिनिमित्तं लभ्यते" इत्युक्तं सप्तमे प्रापणीयपदस्यानतिदेशकत्वं वदता। अतो हेय-मेव योग्लोकवचनम्।

अथापरा एकादशी।

तत्र ब्रह्माण्डपुराणम्।

"पुनर्व्वसौ देवगुरौ निशाकरे
निशेशवारे*ऽमरपूज्यकेऽथवा।
कुम्भे रवौ मध्यगते वृहस्पतौ
एकादशी स्यात् खलु पापनाशिनी॥
जप्यञ्च तप्यञ्च तथा कृतं हुतं†
यत्किञ्चिदस्यां किल धर्म्मसञ्चितम्।
अनन्तपुण्यानि भवन्ति तस्य वै
सूर्य्यग्रहात्कोट्यधिकं फलन्तथा॥
क्षारोदके चाप्यवगाह्य यो नरः
सम्पूज्य कृष्णं रजनीमुपोषितः।
एतेन पापं दशजन्मभिः कृतं
जहीत सा तस्य समग्रमाशु यत्‡॥"

---

* विशेषवारे इति क-पुस्तके पाठः। † तपो भूतञ्चेति क-पुस्तके पाठः।

‡ जह्यात मातस्य समग्रमाशु यदिति क-पुस्तके पाठः।

अस्यार्थः । पुनर्व्वसौ यदा चन्द्रबृहस्पती यदा वारो ह्यनयोरन्यतरस्य भवेत् कुम्भे रविः स्यात् सौरस्तु फाल्गुनः । पुनर्व्वसौ कर्कट एव संस्थिते सौरे फाल्गुने बृहस्पतौ चन्द्रे च पुनर्व्वसौ नक्षत्रे कर्कटे च बृहस्पतौ शुक्ला चैकादशी पापनाशिनीत्युच्यते ।

दुर्व्विमर्षत्रिदोषेण ग्रस्तमेकादशीव्रतम् ।
मृतसञ्जीवनीं विद्यामादाय परिरक्षितम् ॥

इत्येकादशीकल्पः समाप्तः ।

## अथ द्वादशी ।

तत्र भविष्योत्तरे ।

"मासि भाद्रपदे शुक्ला द्वादशी श्रवणान्विता ।
महती द्वादशी ज्ञेया उपवासमहाफला ॥
सङ्गमे सरितां पुण्ये द्वादशीं तामुपोषितः ।
अचिरादेव चाप्नोति द्वादशद्वादशीफलम् ॥
बुधवारेण संयुक्ता सैव चेद्द्वादशी भवेत् ।
अत्यन्तमहती* तस्यां सर्व्वं कृतमथाक्षयम् ॥
अर्च्चयित्वाऽच्युतं तस्यां लभेत्पुण्यं दशाब्दिकम् ।
फलं दत्तं हुतानाञ्च तस्यां लक्षगुणं भवेत् ॥"

सैव चेदिति भाद्रपदीया शुक्ला ।

---

* अत्यन्तं महतीति ख-पुस्तके पाठः ।

तथा वृहद्विष्णुधर्म्मे ।

"उपवासासमर्थानां शुक्लपक्षे द्विजोत्तम ।
एका या द्वादशी पुण्या तां वदस्व ममानघ ॥"

मार्कण्डेय उवाच ।

"या हि भाद्रपदे शुक्ले" इत्यादिकं "कृतमथाक्षय"मित्यन्तं पूर्व्वेण समानम् । अधिकन्तु—

"द्वादशी श्रवणोपेता यदा भवति पार्थिव ।
सङ्गमे तु तदा स्नात्वा सन्धितिस्नानजं* फलम् ॥
सोपवासः समाप्नोति नात्र कार्य्या विचारणा ।
वारिधानीं ततो दत्त्वा वारिपूर्णां द्विजाय च ॥
सान्नां वस्त्रयुतां राजञ्छत्रोपानहसंयुताम् ।
स्कन्दलोक†मवाप्नोति कुलमुद्धरते स्वकम्‡ ॥
स्कन्दं§ समासाद्य चिरञ्च भोगान्
भुक्त्वा महेन्द्रोपमदेवतुल्यान् ।
मानुष्यमासाद्य भवेदरोगी
धनान्वितो धर्म्मपरो मनस्वी ॥"

"सन्धितिः" श्रीपर्व्वतसन्निहिता पुण्या नदी भण्यते ।

---

* सन्नतिस्नानजमिति क-पुस्तके पाठः, सन्नितिरिति च ख-पुस्तके पाठान्तरम् ।

† स्वर्गलोकमिति क-पुस्तके पाठः ।

‡ कुलमुद्धरते सुखमिति क-पुस्तके पाठः ।

§ स्वर्गमिति क-पुस्तके पाठः ।

अथ विष्णुधर्म्मे* ।

"यदा तु शुक्लद्वादश्यां नक्षत्रं श्रवणं भवेत् ।
तदा सा तु महापुण्या द्वादशी विजया स्मृता ॥
तस्यां स्नातः सर्व्वतीर्थे स्नातो भवति मानवः ।
सम्पूज्य वर्षपूजायाः सकलं फलमश्नुते ॥
एकजप्यात्सहस्रस्य जप्तस्याप्नोति यत्फलम् ।
दानं सहस्रगुणितं तथा वै विप्रभोजनम् ।
होमस्तत्रोपवासश्च सहस्राख्यफलप्रदः ॥"

सहस्रसंख्यस्य यत्फलं तदेकसंख्येनैव भवति ।

तथा विष्णुरहस्ये ।

"श्रवणेन समायुक्ता मासि भाद्रपदे सिता ।
द्वादशी सा महापुण्या नाम्ना तु विजया स्मृता ॥
तस्यां स्नातो विधानेन सर्व्वतीर्थफलं लभेत् ।
अर्च्चयित्वाऽच्युतं भक्त्या लभेत्पुण्यं दशाब्दिकम् ॥
ऋचो यजूंषि सामानि जप्यं वा वैष्णवं जपेत्† ।
फल दत्तहुतानाञ्च तस्यां लक्षगुणं भवेत् ॥
द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणम् ।
निषिद्धमपि कर्त्तव्यमाज्ञेयं पारमेश्वरी ॥
विजयां सुमहापुण्यां नियतः समुपावसन् ।
आदाय पुरुषान् सप्त विष्णुलोकं व्रजेन्नरः ॥"

---

* विष्णुधर्म्मोत्तरे इति क-पुस्तके पाठः ।

† जप्यमावैष्णवं लभेदिति ख-पुस्तके पाठः ।

तत्र भगवद्वासुदेवार्च्चनं श्रवणयोगकाल एव कार्य्यम्। "यदा द्वादशी श्रवणायुता," "यदा द्वादश्यां श्रवणा भवेत्" इत्यादि-वचनैर्योगसमस्यैव* पूजार्थं विधानात्। कथमेतदन्यकाले कर्म्मा-चरणम्†।

यत्तु स्मृतिसमुच्चयवचनम्।

"द्वादशी श्रवणायुक्ता कृत्स्ना पुण्यतमा तिथिः।
न तु सा तेन संयुक्ता तावत्येव प्रशस्यते॥"

तेनापि यावती तावती तावत्प्रशस्तैव। न तु तावत्येव, किन्तु उपवासार्थं कृत्स्नैव पूज्या। न पुनरर्द्धरात्रयोगेऽपि श्रवणायुक्त-काल एव स्नानादिकं रात्रियोगस्यासुरत्वादसति वचने।

अथ मासान्तरेऽपि श्रावणशेषे आश्विनादौ वा यदा श्रवणयुक्ता द्वादशी तदर्थमाह पुराणे।

"श्रवणेन सिता यत्र लभ्यते द्वादशी क्वचित्।
उपोष्यैकादशीं तत्र द्वादश्यामर्च्चयेद्धरिम्॥"

तथा मत्स्यपुराणे।

"द्वादश्यां शुक्लपक्षे तु नक्षत्रं श्रवणं यदि।
उपोष्यैकादशीं तत्र द्वादश्यामर्च्चयेद्धरिम्॥"

नात्र "भाद्र" इति। यत्र क्वचिदिति भाद्रव्यतिरेकेणापीत्याह। तदाश्विन एव सम्भवति श्रावणे वा नान्येषु। तथाविधायाञ्चैका-दश्यामुपोष्य द्वादश्यामर्च्चनविधानम्। भाद्रपदे तु भवन्ती सैवो-

---

* योगसिद्धस्यैवेति ख-पुस्तके पाठः।

† कथमेतद्वान्यकाले कर्म्माचरणमिति ख-पुस्तके पाठः।

पोष्या। "तां विजयां समुपावसन्" इति "द्वादश्यामुपवासोऽत्र" इत्यादिवचनैः द्वादश्यामेव उपवासविधानात्। तस्मात् "मासान्तरीयद्वादशीश्रवणायोगे एकादश्यामुपोष्य द्वादश्यामर्च्चनादिकं कार्य्यम्। भाद्रपदे तु द्वादश्यामेवोपवासोऽर्च्चनादिकञ्च। अतो यद्गृहीताऽगृहीतैकादशीव्रतवैष्णवपुरुषभेदेन वर्णनं" तदनादेयम्, काल्पनिकत्वादस्य। एकादश्युपवासविधौ क्वचिदिति भाद्रानादरेण प्राप्त्यनभिधानात्, भविष्योत्तरवचनविरोधाच्च।

"एकादशीमुपोष्यैव द्वादशीमप्युपोषयेत्।
न चात्र व्रतलोपः स्यादुभयोर्द्देवता हरिः॥"

गृहीतैकादशीव्रतानाञ्चेद्द्वादश्यामेकादशीव्रतमविरुद्धं* पूजाहोमजपादिकमनुष्ठेयम्। तदा नास्ति द्वितीयोपवासप्रसक्तिः। अगृहीतैकादशीव्रतस्यापि द्वादश्यामेव उपवासविधानात् तस्यापि नोपवासद्वयमतो निर्विषयमिदं वचनं स्यात्। अस्मन्मते तु भाद्रीयश्रवणद्वादशीपक्षे तस्यामेव उपवासविधौ गृहीतैकादशीव्रतानां विष्णुधर्म्मोत्तरवचनेन।

"पारणान्तं व्रतं ज्ञेयं व्रतान्ते विप्रभोजनम्।
असमाप्ते व्रते पूर्व्वे नैव कुर्य्याद्व्रतान्तरम्॥"

इति विरोधस्तं समाधातुमाह "उभयोर्द्देवता हरिः" इति। तस्माद्यथोक्तैनैव व्यवस्था।

अतएव विष्णुपुराणे।

---

* एकादशीव्रतविरुद्धमिति क-पुस्तके पाठः।

"याः काश्चित्तिथयः प्रोक्ताः पुण्या नक्षत्रयोगतः।
तास्वेव तद्व्रतं कुर्य्याच्छ्रवणद्वादशीं विना॥"

मासान्तरीयश्रवणद्वादश्या*मेकादश्यामेव उपोषणम्। भाद्रपदे तु तस्यामेव। तिथ्यन्तरे तु सर्व्वदा तद्दिन एवेति भेदः।

## अथ विष्णुशृङ्खलकम्।

तत्र विष्णुधर्म्मोत्तरे।

"एकादशी द्वादशी च वैष्णव्यमिति तत्र चेत्।
विष्णुशृङ्खलकं नाम विष्णुसायुज्यकृद्भवेत्।
तस्मिन्नुपोष्य विधिवद्गच्छेच्छ्वेतपुरं ध्रुवम्॥"

तथा विष्णुधर्म्मोत्तरामृते।

"द्वादशी श्रवणायुक्ता स्पृशेदेकादशीं यदि।
स एव वैष्णवो योगो विष्णुशृङ्खलसंज्ञितः॥
तस्मिन्नुपोष्य विधिवन्नरः सङ्क्षीणकल्मषः।
प्राप्नोत्यनुत्तमामृद्धिं पुनरावृत्तिदुर्लभाम्॥"

तस्मिन्नुपोष्य विष्णुमर्च्चयेत् इत्यर्थः। श्रवणद्वादश्यादिषु च उपवासनिषेधो नास्ति गृहिणाम्।

"तन्निमित्तोपवासस्य निषेधोऽयमुदाहृतः।"

इति वचनात् न्यायाद्वा उपवासो निषिध्यत इत्यपेक्षायां रवि-

---

* श्रवणद्वादशीमिति ख-पुस्तके पाठः।

वारादिना स्वनिमित्तकोपवासस्यैव* बुद्धौ सन्निधापितत्वात् ।
एकादश्यान्तु

"उपवासनिषेधे तु भक्ष्यं किञ्चित्प्रकल्पयेत्"

इति वचनात् तत्रापि निषेधः। श्रवणद्वादश्यादिषु तु नास्ति तथा विधानमिति सर्व्वं सुस्थम् ।

यथोक्तं योग्लोकेन ।

"तिथिभान्ते च पारणमित्यविशेषाद्द्वादशीं विहायैव पारणं कर्त्तव्यम्"

इति तदसङ्गतम् । रोहिण्यष्टम्यां तद्विधानात् ।

अत्र तु ।

"द्वादश्यामुपवासोऽत्र त्रयोदश्यान्तु पारणम्"

इति वचनादेव द्वादशीपरित्यागः । न तु "तिथिभान्ते च" इति वचनात् नक्षत्रम् । तत्र त्याज्यमेव ।

इति श्रवणद्वादशी ।

अथ पुराणे ।

"एकादश्यां द्वादश्यान्तु प्रतिपच्चन्तु यो नरः ।
दीपं ददाति कृष्णाय तस्यापि शृणु यत्फलम् ॥
सुवर्णमणिमुक्ताढ्यं मनोज्ञमतिशोभनम् ।
रत्नमालाकुलं रम्यं विमानं सोऽधिगच्छति ॥
द्वादश्यां यस्तिलैरर्च्चेत्पद्मनाभं हि नित्यशः ।
विष्णुलोकमवाप्नोति पुमान् स्त्री वा न संशयः ॥

* स्वनिमित्तकस्यैव इति ख-पुस्तके पाठः ।

अर्च्चयेत्पुण्डरीकाक्षमेवं संवत्सरं नृप ।
जातिस्मरत्वमाप्नोति विन्द्याद्बहुसुवर्णकम् ॥”

तथाऽपरा लिङ्गपुराणे ।

“वृश्चिके विजया नाम द्वादशी सप्तमी तथा ।
महाषष्ठी च सा ज्ञेया यस्यां शेते हुताशनः ॥
द्वादश्यां विजयाख्यायामाधाय विधिवन्नरः ।
कारयित्वा हरेर्यज्ञमादद्याद्वादशीव्रतम् ॥”

“द्वादशीव्रत”मिति एकादश्युपवासपूर्व्वं द्वादश्यामर्च्चनं भगवतो वासुदेवस्य । तच्च सांवत्सरिकं यावज्जीवं वा वृश्चिके मार्गशीर्षे प्रारब्धव्यम् । अत्र शुक्लपक्षग्रहणं देवलात् ।

अथ विष्णुधर्म्मे* ।

“माघ्यान्तु समतीतायां श्रवणेन तु संयुता ।
द्वादशी या भवेत् कृष्णा प्रोक्ता सा तिलद्वादशी ॥
तिलैर्होमस्तिलैः स्नानं नैवेद्यं तिलमोदकैः ।
दीपश्च तिलतैलेन तथा देयन्तिलोदकम् ।
तिलाश्च देया विप्रेभ्यस्तस्मिन्नहनि पार्थिव ॥
यथा तिथिर्वै श्रवणेन युक्ता
माघस्य मासस्य मया तवोक्ता ।
कार्य्या तथेयं नृपते प्रयत्नात्
योगे पवित्रे सरितोर्द्वयस्य ॥”

---

* विष्णुधर्म्मोत्तरे इति क-पुस्तके पाठः ।

तथा ।

"मूलर्चगे शशधरे माघे मासि प्रजापते ।
एकादश्यां कृष्णपक्षे सोपवासो जितेन्द्रियः ॥
द्वादश्यां षट्तिलाचारं कृत्वा पापात्प्रमुच्यते ।
तिलोद्वर्त्ती तिलस्नायी तिलहोमी तिलोदकी ।
तिलदाता च भोक्ता च षट्तिली पापनाशनी ॥
सकृत्तु षट्तिलीं कृत्वा सर्व्वपापैः प्रमुच्यते ।
त्रिंशद्वर्षसहस्राणि स्वर्गलोके महीयते ॥"

तथा ।

"चैत्रे मासि सिते पक्षे द्वादश्यान्तु विशेषतः ।
विष्णुं विष्णुगृहे दृष्ट्वा न भूयः पुरुषो भवेत् ॥"

विष्णुगृहं ताम्रलिप्तनगरम् । यद्वा "लौहदण्डे तथा विष्णु-"मित्यनेन यदुक्तम् ।

अथ ज्योतिःशास्त्रे ।

"पञ्चाननस्थौ गुरुभूमिपुत्त्रौ
मेषे रविः स्याद्यदि शुक्लपक्षे ।
मासाभिधाना करभेण युक्ता
तिथिर्व्यतीपात इतीह योगः ॥
तस्मिन् हि गोभूमिहिरण्यवस्त्र-
दानेन सर्व्वं परिहाय पापम् ।
सुरत्वमिन्द्रत्वमनामयत्वं
मर्त्त्याधिपत्यं लभते मनुष्यः ॥"

"पञ्चाननः" सिंहः, "मासाभिधाना" द्वादशी, "करभं" हस्ता-
नक्षत्रम् ।

"यस्तिष्ठत्येकपादेन वायुभक्षो जितेन्द्रियः ।
वर्षाणामयुतं सप्त कुरुक्षेत्रे यशस्विनि ॥
ज्यैष्ठे मासि सिते पक्षे द्वादश्यान्तु विशेषतः ।
पुरुषोत्तममासाद्य ततोऽधिकतरो भवेत् ॥"

अथ कूर्म्मपुराणे ।

"कांस्यं मत्स्यं* सुरां क्षौद्रं लोभं वितथभाषणम् ।
व्यायामञ्च व्यवायञ्च दिवास्वप्नमथाञ्जनम् ॥
शिलापिष्टं मसूरञ्च द्वादशैतानि वैष्णवः ।
द्वादश्यां वर्ज्जयन्नित्यं सर्व्वपापैः प्रमुच्यते ॥"

अथ विष्णुः ।

"पौष्यामतीतायां कृष्णपक्षद्वादश्यां सोपवासः तिलैः स्नातः तिलोदकं दत्त्वा तिलैर्वासुदेवमभ्यर्च्य तानेव हुत्वा सर्व्व-पापेभ्यः पूतो भवति ।"

तथा ।

"फाल्गुनामलपक्षस्य† पुष्यर्क्षे द्वादशी यदि ।
गोविन्दद्वादशी नाम महापातकनाशनी ॥"

---

* मांसमिति ख-पुस्तके पाठः ।

† फाल्गुनीमलमासस्येति क-पुस्तके पाठः ।

## अथ त्रयोदशी।

तत्र स्कन्दपुराणे।

"चैत्रशुक्लत्रयोदश्यां मदनं चन्दनात्मकम्।
कृत्वा सम्पूज्य यत्नेन वीजयेद्व्यजनेन तु।
ततः सन्धुक्षितः कामः पुत्रपौत्रसमृद्धिदः॥"

अथ देवीपुराणे।

"कामदेवस्त्रयोदश्यां पूजनीयो यथाविधि।
रतिप्रीतिसमायुक्तो ह्यशोकमणिभूषितः॥
कुम्भे वा सितवस्त्रे वा लेख्यः पत्रफलादिभिः।
खण्डशर्करनैवेद्यैः सौभाग्यमतुलं लभेत्* ॥"

दमनकैः पूजा प्रक्रमात्† ।

## अथ चतुर्दशी।

ईश्वर उवाच।

"मधुमासे तु सम्प्राप्ते शुक्लपक्षे चतुर्दशी।
प्रोक्ता दमनभञ्जीति सिद्धिदा तु महोत्सवा॥
पूजयिष्यन्ति ये मर्त्यास्तदङ्गमूलपल्लवैः।
ते यास्यन्ति परं स्थानं दमनस्य प्रभावतः॥

---

* सौगन्धिककुसुमैः फलैः इति क-पुस्तके पाठः।

† अयं पाठः क-पुस्तके नोपलब्धः।

न पालयन्ति ये पर्व्व दामनं* मानवाधमाः ।
तेषां पुण्यफलं दत्तं मया ते चैत्रमासिकम् ॥”

मधुमासपदेन सौरपरिग्रहः† ।

(चैत्रे सितचतुर्द्दश्यां भवेत्काममहोत्सवः ।
जुगुप्सितोक्तिभिस्तत्र गीतवाद्यादिभिर्नृणाम् ।
भगवांस्तुष्यते कामः पुत्रपौत्रसमृद्धिदः ॥)‡

तथा ।

“भाद्रे सितचतुर्द्दश्यामनन्तं पूजयेद्धरिम् ।
कृत्वा दर्भमयञ्चैव वारिधानीसमन्वितम् ।
पुष्पधूपादिभिर्देवमनन्तं काममाप्नुयात् ॥”

अथ पौराणिकाः पठन्ति ।

“वृश्चिके शुक्लपक्षे तु या पाषाणचतुर्द्दशी ।
तस्यामाराधयेद्देवीं नक्तं पाषाणभक्षणैः ॥”

पाषाणाकारपिष्टै§रित्यर्थः ।

अथ देवीपुराणम् ।

“नवमी शुक्लपक्षस्य कृष्णस्यैकादशी तथा ।
दुर्गैव हि भवत्येषा पूर्णिमा च चतुर्द्दशी ॥”

---

* ये पर्व्वं दमनमिति क-पुस्तके पाठः ।

† निर्व्विवादः सौरपरिग्रह इति ख-पुस्तके पाठः ।

‡ (—) अनयो रेखयोरन्तर्गतः पाठः ख-पुस्तके नोपलब्धः ।

§ पाषाणाकारपिष्टकमिति ख-पुस्तके पाठः ।

अथ पौराणिकाः पठन्ति ।

"चैत्रकृष्णचतुर्द्दश्यामङ्गारकदिनं भवेत् ।
पिशाचत्वं पुनर्न स्याद्गङ्गायां स्नानभोजनात् ॥
चैत्रकृष्णचतुर्द्दश्यां यः स्नायाच्छिवसन्निधौ ।
गङ्गायाञ्चेद्विशेषेण न स प्रेतोऽभिजायते ॥"

"धवलितकलसन्यस्ता रक्तपताकान्विता स्नुही भवने ।
चैत्रासितभूतदिने पापरुजं दूरतो धत्ते ॥"

"आषाढ़े मासि भूताहे शिवं सम्पूज्य मानवः ।
सर्व्वपापविनिर्मुक्तः शिवलोके महीयते ॥"

भूताहः कृष्णचतुर्द्दशी ।

"कार्त्तिके भौमवारेण चित्राकृष्णचतुर्द्दशी ।
अस्यामाराधितः स्थाणुर्नयेच्छिवपुरं ध्रुवम् ॥"

"चित्राकृष्णचतुर्द्दश्यां तुलायां संस्थिते रवौ ।
नासौ प्रेतत्वमाप्नोति यस्य रुद्रालये स्थितिः ॥
कृष्णचित्रागता भूता असिता वा तु कार्त्तिके ।
वसिष्ठ जाह्नवीस्नानात्सर्व्वं हरति दुष्कृतम् ॥"

पूर्व्वत्रापि* स्नानादिति सम्बध्यते ।

"यां काञ्चित्सरितं प्राप्य कृष्णपक्षे चतुर्द्दशीम् ।
यमुनायां विशेषेण नियतस्तर्पयेत्पुमान् ॥
यमाय धर्म्मराजाय मृत्यवे चान्तकाय च ।
वैवस्वताय कालाय सर्व्वभूतक्षयाय च ॥

---

* सर्व्वत्रापीति क-पुस्तके पाठः ।

दण्ढोदराय* दण्डाय प्रेताधिपतये नमः ।
पाशिने चित्रगुप्ताय रौद्रायौदुम्बराय च ॥
एकैकस्य तिलान्मिश्रान्दद्यात्त्रींस्त्रीञ्जलाञ्जलीन् ।
संवत्सरकृतं पापं तत्क्षणादेव मुञ्चति ॥”

अथ देवीपुराणे ॥

“तथा कृष्णचतुर्द्दश्यां भौमाह्ने पितृतर्पणम् ।”

अत्र कृत्वा संवत्सरकृतं पापं नश्यति इत्यनुषज्यते । तच्च फलातिशयार्थम् । तद्वारं विनापि फलश्रुतेः ।

तथा विष्णुः ।

“सर्व्वां चतुर्द्दशीं स्नात्वा धर्म्मराजं पूजयित्वा† पापेभ्यः पूतो भवति” इति ।

“(कार्त्तिके कृष्णपक्षे तु चतुर्द्दश्यां दिनोदये ।
अवश्यमेव कर्त्तव्यं स्नानं नरकभीरुभिः ॥
अपामार्गपल्लवांस्तु भ्रामयेच्छिरसोपरि ।
ततश्च तर्पणं कार्य्यं धर्म्मराजस्य नामभिः ॥”

यमाय इत्यादि प्रागुक्तैः ।

“नरकाय प्रदातव्यो दीपः सम्पूज्य देवताः ।
ब्रह्मविष्णुशिवादीनामालयेषु विशेषतः)‡ ॥”

---

* दध्नोदनाय इति ख-पुस्तके पाठः ।

† धर्म्मराजानं पूजयित्वा इति ख-पुस्तके पाठः ।

‡ (—) अनयोश्चिह्नयोरन्तर्गतः पाठः क-पुस्तके नोपलभ्यते ।

## अथ तिथिविप्रतिपत्तिः ।

अथ तिथिकार्य्ये बहुधा विप्रतिपत्तिर्मनीषिणां यस्मात् ।
वृद्धिसमत्वच्छेदैः सम्प्रति तामिह निराकुर्म्मः ॥

प्रतिपदाद्यमावास्यान्तास्तिथयः स्नानदानव्रतादिकर्म्मसु तत्तद्वचनविहिताः । तत्र सम्पूर्णायान्तिथौ निर्विरोधमनुष्ठानम् । वृद्धिह्रासादिना तु दिनद्वयेऽपि लाभात्, सकृच्च तन्निमित्तस्य कर्म्मणः कर्त्तव्यत्वात्, स्नानदानव्रतादिकं कुत्र क्रियतां, किमुदयगामिन्याम् अस्तगामिन्यां वा । प्राथम्याद्यत्र वा भूयसी तिथिः, लुप्यतां वा व्रतादिकम् । इत्यादिनानाविधसन्देहवचनानि श्रूयन्ते ।

तथाहि देवलः ।

"यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया स्नानदानव्रतादिषु ॥
यां तिथिं समनुप्राप्य अस्तं याति हि भास्करः ।
सा तिथिः सकला ज्ञेया स्नानदानव्रतादिषु ॥"

तथाच बौधायनः ।

"उदयन्नेव सविता यां तिथिं प्रतिपद्यते ।
सा तिथिः सकला ज्ञेया दानाध्ययनकर्म्मसु ॥"

तत्र व्यवस्थामाह वृद्धमनुः ।

"ययास्तं सविता याति पितरस्तामुपासते ।
तिथिं तेभ्योऽपराह्णो हि स्वयं दत्तः स्वयम्भुवा ॥

दैवे कर्म्मणि सम्प्राप्ते यस्यामभ्युदितो रविः ।
सा तिथिः सकला ज्ञेया विपरीता तु पैतृके ॥"

"विपरीता" अस्तगामिनी । तेन उदयगामिनी दैवकर्म्मणि, अस्तगामिनी च पित्रे ।

तथाच श्रुतिः ।

"पूर्व्वाह्णो वै देवानां मध्यन्दिनं मनुष्याणामपराह्णः पितॄणाम् । तस्मादपराह्णे ददाती"ति ।

तथा ।

"वर्द्धमानस्य पक्षस्य उदया पूज्यते तिथिः ।
यदा पक्षः क्षयं याति तदा स्यादापराह्णिकी ॥"

बौधायनस्य ।

"वर्द्धमानस्य पक्षस्य उदया पूज्यते तिथिः ।
सा तिथिस्तदहोरात्रं छेदे त्वस्तमयं प्रति ॥"

"छेदः" क्षयः । एतदपि देवपितृकार्य्यपरम् । प्रायेण तिथिवृद्धिः शुक्लपक्षे, क्षयः कृष्णपक्ष एव भवति । तयोः पक्षयोर्देवपितृकार्य्यसम्बन्धात् तत्परत्वमेव । दैवकार्य्यं प्रति उदयसम्बन्धिनी, पित्रे च अस्तसम्बन्धिनी इति । दैवस्य पूर्व्वाह्णे पित्र्यस्य चापराह्णे विधानात् । प्रायेण च उदयास्तसम्बन्धितिथिद्वये तयोः प्राप्तेरिदमुक्तम् । न तूदयास्तमयसम्बन्ध एव विवक्षितः, अदृष्टकल्पनापत्तेः । साकल्यन्तु सकला यथा ग्राह्या तथेयमसकलापीत्यर्थः । तिथ्यन्तरस्यापि तिथ्यन्तररूपतया साकल्यवर्णने, उदयसम्बन्धिन्यामपि अपराह्णस्य, अस्त-

सम्बन्धिन्यामपि पूर्व्वाह्णस्य तिथ्यन्तरप्राप्तस्यापि साकल्याभिधानेन तथैव प्राप्तत्वात् । तत्राप्यर्थमुदयसम्बन्धेनैव दैवेऽस्तसम्बन्धेन च पित्र्ये वेति वचनमदृष्टार्थं स्यात् । एकश्रुतिमूलत्वेनोपपत्तौ न मूलान्तरकल्पना भवेत् ।

एवञ्च ।

"शुक्लपक्षे तिथिर्ग्राह्या यस्यामभ्युदितो रविः ।
कृष्णपक्षे तु सा ज्ञेया यस्यामस्तमितो रविः ॥"

इत्यस्मिन्नेवार्थे वर्णनीयम् । शुक्लपक्षपदञ्च दैवकार्य्यपरम् । कृष्ण-पक्षपदं पितृकार्य्यपरम् । तयोः कार्य्ययोरुभयपक्षे विधानतः सम्बन्धावगमात् ।

तथाच श्रुतिः ।

"पूर्व्वः पक्षो देवानाम् । अपरः पक्षः पितॄणाम् ।"

तथा स्मृतिः ।

"उदगयने पुण्याहे पूर्व्वपक्षेषु दैवानि ।" इति ।

पूर्व्वपक्षविवक्षायां श्रुत्यन्तरकल्पनापत्तेः लक्षणैव श्रेयसी । नन्वेवं दैवकार्य्यस्य सर्व्वत्र पूर्व्वाह्णे विधानात् पितृकार्य्यस्य च अपराह्ण-नियमात् युग्मविधानं निर्व्विषयमापद्येत ।

तथाच परिशिष्टम् ।

"युग्माग्निकृतभूतानि षण्मुन्योर्वसुरन्ध्रयोः ।
रुद्रेण द्वादशीयुक्ता चतुर्द्दश्याथ पूर्णिमा ॥
प्रतिपदाऽप्यमावास्या तिथ्योर्युग्मं महाफलम् ।
एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुराकृतम् ॥"

द्वितीयातृतीये, चतुर्थीपञ्चम्यौ, षष्ठीसप्तम्यौ, अष्टमीनवम्यौ, एकादशीद्वादश्यौ, चतुर्द्दशीपौर्णमास्यौ, प्रतिपदमावास्ये, इति युग्मम्।

तथा स्मृतिः।

"एकादश्यष्टमी षष्ठी पौर्णमासीचतुर्द्दशी।
अमावास्या द्वितीया च उपोष्यास्ताः परान्विताः॥"

पौर्णमास्याः पूर्व्वभूता* चतुर्द्दशी पौर्णमासीचतुर्द्दशी समस्तेनोच्यते। पूर्व्वतिथिसम्बन्धेनोच्यते शुक्ला इत्यर्थः। न तु पौर्णमासीपदं प्रथमान्तं, प्रतिपद्युक्तायाः पौर्णमास्या निषेधात्।

यथा।

"षष्ठेरकादश्यमावास्या पूर्व्वविद्धा तथाष्टमी।
पूर्णिमा परविद्धा च नोपोष्यं तिथिपञ्चकम्॥"

सप्तमी परविद्धेति केचित्पठन्ति। तथा "चतुर्द्दश्याथ पूर्णिमे"ति अनन्तरदर्शितवचनबाधाद्†यथोक्तोऽर्थः‡।

तथा युग्मवचनम्।

"षष्ठ्यष्टम्यप्यमावास्या कृष्णपक्षे त्रयोदशी।
एताः परयुताः पूज्याः पराः पूर्व्वयुतास्तथा॥
अमावास्याष्टमी षष्ठी शुक्ला चैव चतुर्द्दशी।
एताः परयुताः कार्य्याः पराः पूर्व्वेण संयुताः॥"

---

* परभूता इति क-पुस्तके पाठः।

† अनन्तरवचनाच्चेति क-पुस्तके पाठः।

‡ यथोक्त एव वचनार्थः इति क-पुस्तके पाठः।

षष्ठी च अष्टमी च पक्षद्वयसम्बन्धिन्यौ विशेषानुपादानात्*। शुक्ल-चतुर्द्दशी अमावास्या त्रयोदशी च कृष्णा एतास्तिथयः पराभिः† पौर्णमासीप्रतिपच्चतुर्द्दशीभिः संयुक्ताः पूज्याः, कस्माद्गमित्यर्थः। यया च परभूतया युता पूर्व्वा तिथिः पूज्या, तथैव पूर्व्वया युक्ता परापि पूज्या। "शेषाः पूर्व्वेण संयुता" इति केचित्पठन्ति, तदापि पूर्व्वोक्तार्थः। परभूता एव शेषपदेन उपादेयाः पूर्व्वोक्तात्। परिशिष्टमात्रग्रहणे शुक्लत्रयोदशी कृष्णप्रतिपद्दशमीना-मपि पूर्व्वसंयोगात् पूज्यतापत्तेः। न चैतदिष्टं वृद्धिह्रासवचनस्य निर्विषयत्वापत्तेः।

तथा शङ्करगीतायाम्।

"एकादश्यष्टमी षष्ठी द्वितीया च चतुर्थिका।
चतुर्द्दश्यप्यमावास्या उपोष्याः स्युः परान्विताः॥"

एकादश्यादिचतुर्थीपर्य्यन्ताः पक्षद्वयस्य विशेषाभावात्। चतु-र्द्दशी तु शुक्ला, परवचने शुक्लेत्युपादानात्।

## अथ व्यस्तवचनानि।

तत्र स्कन्दपुराणम्‡।

"षष्ठ्येकादश्यमावास्या पूर्व्वविद्धा तथाष्टमी§।
सप्तमी परविद्धा च नोपोष्यं तिथिपञ्चकम्॥

---

* विशेषानुपादानादिति ख-पुस्तके पाठः।

† सप्तमी नवमी इत्यधिकः पाठः ख-पुस्तके दृश्यते।

‡ तत्रेत्यंशः ख-पुस्तके नोपलभ्यते।

§ भूतविद्धा तथाष्टमी इति क-पुस्तके पाठः।

तथा ।

"नागविद्धा तु या षष्ठी सप्तम्या च तथाष्टमी ।
दशम्यैकादशी विद्धा त्रयोदश्या चतुर्द्दशी ॥
भूतविद्धाऽप्यमावास्या न ग्राह्या मुनिपुङ्गवाः ।
उत्तरोत्तरविद्धास्ताः कर्त्तव्याः काठकी श्रुतिः ॥"

परिशिष्टस्य "न ग्राह्या" इति दैवपित्र्यादिकार्य्यविषये*। न तु तिथिमात्रोद्देशेन विहिततैलमांसादिनिषेधेऽपीति वक्ष्यामः ।

"नागविद्धा तु या षष्ठी रुद्रविद्धो दिवाकरः ।
कामविद्धो भवेद्विष्णुरपूज्यास्ते तु वासराः ॥"

जावालिः ।

"नागविद्धा तु या षष्ठी भानुविद्धो महेश्वरः ।
चतुर्द्दशी कामविद्धास्तिस्रस्ता मलिनाः स्मृताः ॥"

शिवधर्म्मस्य नागः पञ्चमी, भूतः कृष्णचतुर्द्दशी, रुद्रः अष्टमी, दिवाकरः सप्तमी, कामः त्रयोदशी, विष्णुः द्वादशी ।

तथा ।

"नागविद्धा च या षष्ठी शिवविद्धा च सप्तमी ।
दशम्येकादशीविद्धा न तत्रोपवसेद्बुधः ॥"

शिवः अष्टमी । तत्राल्पवेधेनापि व्यस्ततामाह

स्मृतिसमुच्चये ।

"घटिकार्द्धं विभागं वा चान्यो दूषयते तिथिम् ।
पञ्चगव्यघटं पूर्णं सुराया विन्दुको यथा ॥"

---

* दैवपित्र्यादिविषये इति क-पुस्तके पाठः ।

तत्र "एतद्युग्मं महाफल"मिति स्तुतिर्युग्मविधानार्थम् "एतद्व्यस्तं महादोष"मिति निन्दापि विधेः स्तुत्यर्थ*मेव, एकवाक्यत्वात्। यथा "न गिरा गिरा इति ब्रूया"दिति गिरापदनिन्दा "ऐरं कृत्वोद्गेय"मिति इरापदविधानार्था एकवाक्यत्वात्।

तदस्य युग्मविधेः को विषयः? अत्रोच्यते, युग्मस्य तावन्न विधिः, तस्यासम्भवादेव। न ह्येकस्मिन् क्षणे तिथिद्वयसमावेशः सम्भवी यो विधेयः। परस्परपरिहारेण तिथीनामवस्थितेः। नापि तिथिद्वयमन्यतरकार्य्यत्वेनावगते कर्म्मणि द्वयोर्विधानासम्भवात्। एकस्याप्राप्तत्वादन्यस्यापि चाप्राप्तत्वात् पदावृत्तिवैरूप्यापत्तेः। अन्यकार्य्यतया चानूदिते तदवबोधादन्यविधेरसम्भवात्। किञ्च उभयकार्य्ये उभयं नित्यवद्वा विधीयते, द्विखण्डतानिमित्तेन वा। न तावन्नित्यवत् सर्व्वदैव सप्तमीकार्य्यस्य षष्ठ्यां षष्ठीकार्य्यस्य सप्तम्यामापत्तेः उभयोरेवापि विधानमनर्थकं स्यात्। निमित्तेन चेत् तदा द्विखण्डतिथौ सप्तमीकार्य्यं नियमेन षष्ठीक्षण एवापद्येत। सप्तमीक्षणे तु कृतमपि अकृतकल्पं भवेत्। राजन्यवैश्यकर्त्तव्यतानिमित्तेन विहिते फलचमसे, सोमेन क्रियमाण इव ज्योतिष्टोमः। ततः सप्तमीसम्बन्धः प्रयत्नेन त्याज्य एव स्यात्। न च सप्तम्यामपि पुनर्विधानान्न बाध इति वाच्यम्। यतः षष्ठीसप्तमीरूपस्य कालद्वयस्य विधानात् प्रयोगाङ्गत्वाच्च कालस्य कृत्स्नप्रयोग एव षष्ठीक्षणे सप्तमीक्षणे वा स्यात्।

---

* विधेः स्तुत्यर्था एकवाक्यत्वादिति क-पुस्तके पाठः।

उभयोस्तस्य निष्पत्तौ नैकत्रापि क्रतौ भवेत्।
समुच्चितयवव्रीहिमयेनैव क्रतौ यजिः॥

युग्मतानिमित्तः सप्तमीकार्य्ये षष्ठीविधिर्भवन् स्नानदानादिष्वेव भवेत्। नाहोरात्रैकसाध्योपवासादौ तावत्कालव्याप्ततया तदन्वयानर्हत्वात्। तेन वार्षिकोपवासादेः प्रविलोप एव स्यात्। सप्तम्यामपि तावत्कालव्यापित्वाभावात्। अतएव युग्मविधेर्गुणफलाधिकार इत्यपि न सम्भवति। द्विखण्डतिथौ मूलाधिकारस्य कालाभावेनाप्रवृत्तौ तदुपजीविनो गुणफलाधिकारस्याप्रवृत्तेः। कथञ्चिद्वा स्नानदानाद्यधिकारस्य प्रवृत्तौ गुणफलाधिकारे सम्भवति अपि मूलाधिकारस्य व्यस्ततिथावप्यनुष्ठानं दुर्व्वारं स्यात्। मूलाधिकारे युग्मस्य गोदोहनस्येवानङ्गत्वात्। अथ द्विखण्डता निमित्तेन पूर्व्वस्मिन्नेव कर्म्मणि सहितावस्थं तिथिद्वयं विधीयते। तन्न स्नानदानादिकस्यान्यतरतिथिक्षणे कृतस्य अकृतकल्पत्वापत्तेः। मिश्रितयोरेव साधनत्वेन विधानात्। न च तत्तत्तिथिविहितस्य कर्म्मणः तिथियुग्मे उपसंहार इति वाच्यं पुण्यतिथावकरणप्रसक्तेः। किञ्च उपवासव्रतादौ अस्तकालपर्य्यन्तव्यापिन्यामपि षष्ठ्यां षष्ठीसप्तम्योर्युग्मस्याविशेषात् तत्रापि सप्तमीकार्य्यविधानं स्यात्। परदिनोदयास्तसम्बन्धिन्यां न स्यात् रात्रौ व्यस्तत्वात्। न च दिवेति विशेषः श्रूयते। सत्यपि च श्रवणे निमित्तविशेषणस्य वाक्यभेदभयेन हविरुभयत्ववत् विवक्षानर्हत्वात्। न च सप्तम्यादिषु तत्तत्फलार्थं विहितमेव तिथियुग्मं महाफलार्थं विधीयते, तिथ्योर्युग्मं महाफलमिति

वचनात् इति वाच्यम्। पूर्व्ववत्पूर्व्वाधिकारस्य व्यस्तेऽपि अविरोधापत्तेः। व्यस्तस्य निषिद्धत्वान्नेति चेन्न निषेधानुपपत्तेः। महाफले कर्म्मणि युग्मविधानादेव व्यस्तनिषेधस्य दर्शादिविधिनेव पञ्चम्यादिनिषेधस्य प्राप्तेर्विधानानुपपत्तेः।

नापि व्यस्ताव्यस्तसाधारणतिथिमात्रविहितेऽल्पफले कर्म्मणि निषेधविधिः। व्यस्तप्राप्त्युपजीवित्वान्निषेधस्य विधिनिषेधयोर्विकल्पापत्तेः। अव्यस्ते च नित्यवत्तिथिविधानात् व्यस्ते च वैकल्पिकत्वात् विधिवैरूप्यापत्तेः।

ततश्च व्यस्तेतरसप्तम्यादिषु व्रतादिकं कुर्य्यादिति पर्य्युदासो वाच्यः। तथाच एकस्मिन्नहनि अष्टम्याः सप्तमीविद्धत्वे दिनान्तरे वा अनिर्गमेऽष्टमीकार्य्यं परिलुप्यते। एवं सप्तम्यादिष्वपि बोद्धव्यम्।

किञ्च रात्रावपि व्यस्तत्वे* सप्तम्या अष्टमीयोगे व्यस्तत्वे पर्य्युदस्तत्वात् तत्रापि विहितं कर्म्म लुप्यते। पूर्व्वदिने वा स्यात् रात्रौ, तस्मादहोरात्रसाध्यापेक्षा। उपवासो हि अहोरात्रसाध्यः न सप्तम्यादितिथिसाध्यः।

अयं निषेधो नच पर्य्युदासः। किन्तु युग्मविधौ व्यस्तनिन्दा युग्मस्तवनशेषः तदेकवाक्यत्वात्।

तेनायमर्थः। यत् खलु सामान्येन सप्तम्यादौ प्रातरादिसमन्वयमनादृत्य स्नानदानादिकं विहितं दिवा च तत्कार्य्यम्।

---

* व्यस्ताव्यस्तत्वे इति क-पुस्तके पाठः।

रात्रेरासुरीत्वेन विशेषविहितेतरकर्म्मागोचरत्वेनानिमित्तत्वात्। दिनद्वये च कर्म्मयोग्यतत्तत्तिथ्यवयवप्राप्तौ तत् कुत्र क्रियत इत्यपेक्षायां द्विखण्डतानिमित्तेन युग्मविधिना अवयवविशेषो नियम्यते। अतो नानपेक्षितविधिः। न च सप्तम्यादिबाधः। न च रात्रियुग्मप्रसक्तिः। नापि प्राप्तत्वाद्विध्यसम्भवः। द्विखण्डतानिमित्तत्वादवयवविशेषप्रतिनियमस्य। तथोपवासादिष्वपि। अहोरात्राभोजनमुपवासो न तु सप्तम्यामभोजनम्।

न हि प्रहरद्वयोपरि सप्तमीप्रथमक्षणात् प्रभृति दिनान्तरेऽपि सप्तमीकालपर्य्यन्ताभोजने पूर्व्वदिने षष्ठीकालेऽपरदिने चाष्टमीकाले भुक्तवान् "उपवासी पुरुषोऽयम्" इति व्यपदिश्यते।

अतएव षष्टिनाड्यवच्छिन्नमप्यभोजनं नोपवासः। यत्रापि अहोरात्रव्यापिनी सप्तमी तत्रापि न स्वेन रूपेणान्वयः पूर्व्वोक्तव्यभिचारात्। "सप्तम्यामुपवसेत्" इति सप्तमीत्वेनोपवासानर्हत्वात्। स्वसम्बन्धाहोरात्रं तया लक्ष्यते। "देवताभ्यो हविर्विभजेत्" इत्यत्र तण्डुलश्रुतिरिव हविर्लक्षणार्था तण्डुलत्वेन देवतासम्बन्धविरहात्।

यत एव सप्तमीत्वेन नोपवासान्वयः अतएव षष्ठीसप्तमीयुग्मदिने कृतोपवासस्य पारणार्थं सप्तमीविगमप्रत्यवेक्षाऽपि व्यामोह एव। "तिथिभान्ते च पारणम्" इति च रोहिण्यष्टम्येकवाक्यतापन्नं वाक्यं नान्यत्र सम्बध्यते।

तदेवं सप्तम्यां दिनद्वयसम्बन्धिन्यां कुत्राहोरात्रे उपवासः कार्य्य इत्यपेक्षायां वार्षिकोपवासव्रतेषु च अन्यतराहोरात्रानु-

प्रवेशस्यावश्यकत्वात् युग्मसम्बन्ध्यहोरात्रविशेषनियमः क्रियते युग्मविधिना । तेन तस्याहोरात्रस्य सप्तम्याद्यनाक्रान्तोऽप्यवयवस्तिथिः सहायभावेन विधीयते । न पुनरन्या षष्ठ्यादिका तत्कार्य्ये । दिनक्षये उपवासाद्यभावप्रसक्तेः ।

तथाहि ।

"द्वौ तिथ्यन्तावेकवारे यत्र स स्याद्दिनक्षयः ।"*

तत्र षष्ठीसप्तमीदिने रात्रिशेषे भाविन्यामष्टम्यां सप्तमीकार्य्ये विधानाभावात् विशेषतस्तु व्यस्तायां निन्दितत्वात् । एवमन्यत्रापि बोद्धव्यम् ।

अतएव "सा तिथिस्तदहोरात्र"मित्यहोरात्रस्य तादृप्यं बोधयति । युग्मतिथिस्तु तदहोरात्रोपलक्षणम् ।

तेन तदहोरात्रावयवस्य षष्ठ्यादिरूपत्वे सत्यपि न तद्विधानप्रयोजकं किन्त्वहोरात्रावयवत्वम् । अपेक्षायामपि कुत्राहोरात्र इत्यहोरात्रविषयत्वात् । अन्यतिथ्युपलक्षिताहोरात्रमेव नियम्यते ।

अतः षष्ठीसप्तम्योरन्योऽन्यकार्य्यत्वे विधानमिति योग्लोकादीनां मतमपास्तम्† ।

ततश्च स्नानदानादौ युग्माहोरात्रीया सप्तम्यादिका ग्राह्या इति तिथ्योर्युग्मवचनम् । युग्मदिनस्य या षष्ठी या च सप्तमी

---

* "स्नानं दानं जपो होमो नोपवासो दिनक्षये" इत्यर्द्धमधिकं ख-पुस्तके नोपलभ्यते ।

† पराहतमिति ख-पुस्तके पाठः ।

सा स्वकार्य्यस्नानदानाद्यर्थं ग्राह्या महाफलत्वेन सैव स्तूयते। व्यस्तदिनसम्बन्धिनी निन्द्यते।

अहोरात्रसाध्ये तु व्रतोपवासादौ अतद्रूपस्याप्यहोरात्रावयवस्य साकल्यवचनेन तत्कार्य्यकरतया तद्रूपत्वविधिः। तेन न तत्तिथिबाधः तत्साधनतानिर्व्वाहाय विधानात्।

सोमसाधनभावानुग्रहाय यथा तत्सदृशपूतीकनियमेऽपि न तद्बाधः। ऊह्यमानपदस्य वा मन्त्रसहायभावेन ग्रहणेऽपि न मन्त्रबाधः तदर्थमेव तत्परिग्रहात्।

एतेन एतदपि सिध्यति उपवासाद्यङ्गभूतमपि स्नानदानादिकं यन्मुख्यकाले शक्यकरणं तत्तत्रैव कार्य्यम् अशक्तावेवान्यानुप्रवेशात्।

उपवासादिकन्तु तद्रूपापन्नेन अहोरात्रेण निर्व्वर्त्त्यं विततत्वात् कर्म्मणः। तेनोभयतिथिरूपं तदहोरात्रं न तु तिथ्योरन्योऽन्यरूपत्वम्।

अतः स्वयं कार्य्यं कुर्व्वाणस्य* या या द्वितीयाद्यास्तासु कर्म्मैकदेशाशक्तौ तदहोरात्राऽवयवानुप्रवेशः न तु शक्तावपि।

अतएव "यदुपपद्यते तत्र न परापेक्षा" इति न्यायविद्वशाहारात्। तस्माद्यन्नियतप्रातरादिक्षणमात्रसाध्यं स्नानदानादिप्रधानं कर्म्म तन्मुख्यकाल एव करणीयम् क्षणान्तरे क्रियायां तत्तत्तिथिव्यापाराभावात्।

---

* स्वयं कुर्व्वाणस्य इति क-पुस्तके पाठः।

तत्र* सहायतानिरपेक्षेण क्षणान्तरेणैव तत्करणात्। तस्मा-द्वितत एव कर्म्मणि सहायग्रहणम्।

तथाच निगमः†।

"द्वितीयादिकयुग्मानां पूज्यता नियमादिषु।
एकोद्दिष्टादिवृद्ध्यादौ ह्रस्वक्षासादिचोदना॥"

आदिपदमुपवासादिविततकर्म्मपरम्।

अतएव भविष्यपुराणम्।

"व्रतोपवासनियमे घटिकैकापि या भवेत्।
सा तिथिः सकला ज्ञेया पित्रर्थे चापराह्णिकी॥"

पूर्व्वोपन्यस्तवचनेषु।

"उपोष्यास्ताः परान्विताः"
"उपोष्याः स्युः परान्विताः।"

तथा निषेधे।

"नोपोष्यं तिथिपञ्चकम्"
"न तत्रोपवसेद्बुधः"

इत्याद्युपवासविषयावेव विधिनिषेधौ प्रतीयेते। उपवासपदं विततकर्म्मोपलक्षणम्। तेन वितत एव कर्म्मणि अन्यानुप्रवेशः।

यत्पुनः स्नानादौ साकल्यवचनं तस्यायमर्थः। उदयास्तसम्ब-

---

* ख-पुस्तके तत्रेत्यत्र "कुत्र" इति पाठो दृश्यते।

† नियम इति ख-पुस्तके पाठः।

न्धिनी यथा स्नानदानादौ गृह्यते, तथेयमसकलापि सकलेव प्रत्येतव्या कार्य्याय* ।

अन्यमतेऽपि न परमार्थतः साकल्यं किन्तु तत्कार्य्यकरतिथ्यन्तरेण गौणमेव साकल्यम् । कालबाधस्त्वधिकः† ।

अस्मन्मते तु बाधो नास्तीति तदेव युक्तम् ।

यत्पुनः प्रातरादिकालविशेषेषु‡ सप्तम्यादिषु विहितं§ कर्म्म, यत्रैव प्रातरादयो लभ्यन्ते तत्रैव तत्कार्य्यं न तत्र युग्मविधिः सन्देहाभावात् । सति तस्मिन् वचनस्य प्रवृत्तेः ।

तेन ।

"सूर्य्यग्रहणतुल्या हि शुक्ला माघस्य सप्तमी ।
अरुणोदयवेलायान्तस्यां स्नानं महाफलम् ॥"

इत्यादिना विहिते कथं युग्मविधिः । सप्तमीबाधापत्तेः । युग्मवचनस्य अविषयत्वात् ।

न च व्यस्तदिनेऽपि बहुदोषश्रुतेः कथं तत्परिग्रह इति वाच्यम् यतो दोषमात्रख्यापनपरं तावन्न वचनम् सिद्धरूपार्थपर्य्यवसानानुपपत्तेः निषेध इह न सम्भवतीति उक्तमेव । तस्माद्व्यस्तनिन्दया युग्मविधिविशेषः तदेकवाक्यत्वात् । स च यत्रैव विधिस्तत्रैव व्यस्तनिन्दा इत्येवं कृत्वा ज्ञेयमिति ।

---

* कार्य्यार्थं प्रत्येतव्या इति क-पुस्तके पाठः ।

† अकालबाधस्त्वधिक इति ख-पुस्तके पाठः ।

‡ चणविशेषे इति क-पुस्तके पाठः ।

§ सप्तम्यां विहितमिति क-पुस्तके पाठः ।

अनेन यत्रैव श्रुताविरापदविधिस्तत्रैव "यद्गिरा गिरा इति ब्रूयात् आत्मानमेव तदुद्गाता गिरे"दिति निन्दा नाध्ययनकर्म्मण्यपि । तत्रापि सति सन्देहे तदपनयनार्थो विधिः तत्रैव च व्यस्तनिन्दापि ।

सन्देहश्च दिनद्वयेऽपि विहितकालाभावात् । नियतप्रातरादिक्षणस्य तु कर्म्मणः एकत्रैव तत्प्राप्तौ कुतः सन्देहः । कुतस्तराञ्च तदपनयनार्थो विधिः । कुतस्तराञ्च तत्र व्यस्तनिन्दा ।

अतश्च षष्ठीक्षणे सप्तम्यामरुणोदययोगाभावे कथं तत्कालविहितकर्म्मणः स्नानादेः प्रसक्तिः ।

किञ्च योऽपि मन्यते युग्मविधानाद्द्वयोरेवान्योऽन्यकार्य्यविधिरिति तस्यापि मते सप्तम्यामरुणोदययोगे सति यत्तस्यां कार्य्यं तत् षष्ठ्यामिति वाच्यम् । सप्तम्याश्चारुणोदययोगाभावे तत्र कर्त्तव्यतैव न शास्त्रेण ख्यापिता कथं षष्ठ्यां तद्विधिः तस्मिन्नहनि सप्तमीकर्त्तव्यस्य तत्र विधिः ।

अथ साकल्याभिधानेन षष्ठीक्षणेऽपि सप्तमीत्युच्यते ननु तत्र प्रमाणविरोधात् अथ षष्ठ्या एव योऽरुणोदययोगः स एव सप्तम्या अपीति ।

तन्न तस्यापि प्रमाणविरोधात् । तुल्यकार्य्यत्वमात्रख्यापनपरत्वाच्च शास्त्रस्य, अन्ययोगस्य अन्ययोगपरत्वानुपपत्तेः ।

किञ्च युग्मत्वे सति एकस्या एव योगः अन्यस्या अपि योग इत्युच्यते तदा अष्टमीनवमीयुग्मदिने नवम्या अपि अर्द्धरात्रयोगे रोहिण्यष्टमी स्यात् । एकादशीद्वादशीयुग्मदिने एकादशीमात्रस्य

अरुणायोगे अरुणाद्द्वादशी स्यात्। इत्यादि बहुतरमनिष्टमलौकिकमापद्येत।

किञ्च युग्मतिथौ यदा अन्योऽन्यकार्य्यपरत्वं विधीयते तदा* युग्मदिनस्य षष्ठी सप्तमीकार्य्ये विधीयते, पञ्चमीयुक्ता तु व्यस्ततया न तत्कार्य्यकरीति निन्द्यते। एवं सप्तम्यपि युग्मदिवसीया षष्ठीकार्य्याय विधीयते, व्यस्ता च निन्द्यते। तेन अन्यकार्य्येऽन्यविधौ व्यस्तनिन्दानुवादोऽयमिति स्वकार्य्ये निन्दाभावात् परदिने अष्टमीयुक्ता च निन्दितेति† कथमरुणोदययुक्तायाः परित्यागः।

अस्मन्मते तु युग्मवचनमुभयत्र प्राप्तौ तद्दिवसीयतत्तिथिग्रहणार्थं तत्रैव च व्यस्तनिन्दापि। तत्रैव साकल्यवचनमुपवासादौ वितते कर्म्मणि अहोरात्रस्य सहायभावेन कार्य्यतो गौणं ताद्रूप्यं ज्ञापयितुं न तिथ्योरन्योऽन्यकार्य्यार्थम्। तेनैकदिवसीयारुणोदययोगे न युग्मविधिः। न च व्यस्तनिन्दा न च साकल्यविधिरिति तथाविधमहाफलमाकलयतां काल एवायमुपस्थितः।

अतएवोक्तं दीक्षितेन "उभयत्र प्राप्तौ विपर्य्यस्तनिषेधावसरः" इति।

तथापरमुक्तम् "यच्च क्षणमात्रसाध्यं स्नानदानादिकमुभयत्र लभ्यते तत्र सन्देहे दैवं कर्म्म कया कार्य्यमित्यस्य प्रसरतो व्यवस्थितये परिशिष्टम् 'युग्माग्नीति'। अस्यायमर्थः। दैवं कर्म्म

* यथा इति ख-पुस्तके पाठः।

† न निन्दितेति ख-पुस्तके पाठः।

कया कार्य्यमित्युदययोगिन्यां दैवकर्म्मविधायकं युग्मतिथिपरतिथौ प्रसक्तं व्यावर्त्तते । ततश्च दैवमपि उपवासादि तत्तत्तिथावस्त-सम्बन्धिन्यामेव कर्त्तव्यम् । नतु तद्युग्मत्वात् परतिथिकमपि दैवं परतिथिः पूर्व्वाह्णगे कार्य्यमित्यर्थः पूर्व्वप्रतीतकालबाधा-पत्तेः ।"

तथा शङ्खधरेणाप्युक्तम् "तस्माद्यथाकालमुपक्रान्तेनैव अतो यद्यस्यां तिथौ विहितम् तत्तस्यामेव कर्त्तव्यम् । यानि पुनः 'सा तिथिः सकला ज्ञेया' इत्यादीनि तानि उपवासादिष्वहो-रात्रसाध्येषु योज्यानी"ति ।

तथा जितेन्द्रियेणाप्युक्तम् "यत् पुनरल्पकालीनमेव कृत्यं स्वकाले समापयितुं शक्यते, तत्रोत्कर्षहेतोः कर्म्मैवैतत्यस्य* असामर्थ्यस्याभावात् मुख्यकालएव कर्म्मानुष्ठान"मित्यन्तम् ।

तथा च धवलेनाप्युक्तम् "कर्म्मणि हि सप्तमी कारकतया उपदिष्टा, तच्च तां विनानुष्ठीयमानम् अयथावत्कृतमकृतम्भवेत् न हि यागो विहितव्रीहिमन्तरेण अविहितमुद्गादिना अनु-ष्ठीयमानः† सिद्धो भवती"त्यन्तम् ।

अम्बुकेनापि "तिथ्योर्युग्मं महाफलम् । एतद्व्यस्तं महाघोरं हन्ति पुण्यं पुरातन"मिति वचनं तदुपवासविषयमिष्टव्यमित्युक्ता "माघस्य सप्तम्यां कोटिस्नानम् अष्टमीविद्धायामेव शिष्टाः समा-चरन्ती"त्युक्तम् ।

---

* सामर्थ्यस्य इति ख-पुस्तके पाठः ।

† अविहितमुद्गानुष्ठीयमान इति ख पुस्तके पाठः ।

तथापरम् "युग्मतिथीनामुपवासविषयावेव विधिनिषेधौ दृश्येते" इत्युक्त्वा "उपोष्याः स्युः परान्विता" इति विधिः नतु तत्र उपवसेदिति निषेधश्च उपन्यस्तः।

वृहद्योग्लोकग्रन्थे च "यदा प्रथमदिने षष्ठीसप्तमीयुग्मम् उत्तरदिने वर्द्धमाना त्रिमुहूर्त्तव्यापिनी, तदा उत्तरदिनएव कोटिस्नानम्। अथ चीयमाणा तदा षण्मुहूर्त्तापि न कार्य्या" इत्युक्त्वा "नतु तदा पूर्व्वदिनएव स्नान"मिति तेनाप्युक्तम्।

स्वल्पयोग्लोकेन तूक्तम् "षष्ठीसप्तमीयुग्मे षष्ठीकाले सूर्य्य-कोष्युदयसम्बन्धादुत्तरकालीनास्तमयसम्बन्धिन्याः साकल्याभिधा-नात् सप्तम्याः षष्ठीकाले सप्तमीस्नानफलप्राप्तिर्न पुनरुत्तरदिने। युग्मव्यस्ततादोषश्रुतेः अष्टमीसम्बन्धस्य चातिनिन्दितत्वात् सप्तमी ग्रहीतव्या" इत्यन्तम्।

तच्च वहुतरप्रकारं दूषितमेव। तस्मात् सकलप्रामाणिक-सम्मतम् अष्टमीविद्धायामेव सप्तम्यामरुणोदययोगात् स्नानं नतु षष्ठीसप्तमीयुग्मदिने। इति युग्मविधेरर्थो दर्शितः। एवं स्व-कार्य्याय युग्मदिनस्य सप्तमी ग्राह्येति नतु सप्तमीमेव वाधते।

यदि पुनः पूर्व्वदिनेऽपि अरुणोदयवेलायां सप्तमी लभ्यते तथा अष्टमीदिनेऽपि तदा अत्रापि व्यस्तनिन्दया तत्प्रतियोगिकं पूर्व्वसप्तमीग्रहणं विध्यर्थः सन्देहे सति वचनस्य प्रवृत्तेः।

तेन निर्द्दिष्टयुग्मतिथीनां दिनद्वयप्राप्तौ पूर्व्वा तिथिः परदिने प्राप्तापरा च पूर्व्वदिने इति युग्मवचनस्यार्थः। नतु तत्तत्तिथि-वाधार्थं तत्।

"सा तिथिः सकला ज्ञेया" इत्यादिकन्तु अहोरात्रसाध्योपवासादिविततकर्म्मविषयम् ।

अतएव यत्र एकस्मिन्नेव अहनि तिथिः सा च व्यस्ता तत्र तामपि अनुजानाति ।

यथा ।

"एकादशी दशायुक्ता परतोऽपि न वर्द्धते ।
गृहिभिर्यतिभिश्चैव सैवोपोष्या सदा तिथिः ॥"

तथा ।

"घटिकैकाप्यमावास्या प्रतिपत्तु न चेत्तदा ।
भूतविद्धापि सा कार्य्या दैवे पित्रेत्र च कर्म्मणि ॥"

एकत्र प्राप्तौ व्यस्तामनुजानन् उभयत्र प्राप्तौ व्यस्तनिन्देति सुव्यक्तं दर्शयति ।

एवं वारयोगेन तिथेः पूज्यत्वेऽपि एकत्रैव दिने वारयोगसम्भवात् कुत्र तत्क्रियेति सन्देहाभावात् तत्रापि युग्मवचनस्याप्रवृत्तेर्व्यस्तनिन्दापि नास्ति इति व्यस्ततिथित्वेऽपि वारयोगादेव पूज्यता ।

यथोक्तन्यायमूलत्वे सम्भवति प्रत्येकं श्रुतिमूलत्वकल्पनापत्तेः वारयोगाच्च पूज्यत्वम् ।

यथा देवीपुराणे ।

"यदा शुक्लचतुर्थ्यान्तु वारो भौमस्य वै भवेत् ।
तदा सा सुखदा ज्ञेया सुखानामिति कीर्त्तिता ॥
स्नानदानादिकं कर्म्म सर्व्वमक्षयमुच्यते ॥"

तथा शाम्बपुराणे ।

"शुक्ला वा यदि वा कृष्णा षष्ठी वा सप्तमी च या ।
रविवारेण संयुक्ता तिथिः पुण्यतमा स्मृता ॥"

तथा भविष्यपुराणे ।

"शुक्लपक्षस्य सप्तम्यां सूर्य्यवारो भवेद्यदि ।
सप्तमी विजया नाम तत्र दत्तं महाफलम् ॥
अमा वै सोमवारेण रविवारेण सप्तमी ।
चतुर्थी भौमवारेण अक्षयादपि चाक्षयम्* ॥"

तथाच व्यासः ।

"अमावस्यां यदा वारो भवेद्भूमिसुतस्य वै ।
गोसहस्रफलं दद्यात् स्नानमात्रेण जाह्नवी ॥
सिनीवाली कुहूर्वापि यदि सोमदिने भवेत् ।
गोसहस्रफलं दद्यात् स्नानं यन्मौनिना कृतम् ॥"

चतुर्द्दशीयुता सिनीवाली व्यस्ततिथिः । सापि वारयोगात्पुण्येति वदन् उभयत्र प्राप्तौ व्यस्तस्याग्रहणम् अप्राप्तौ व्यस्तस्यापि ग्रहणम् इति सन्देहनिर्णयार्थमेव युग्मवचनं द्रढ़यति ।

एवं नक्षत्रयोगेऽपि द्रष्टव्यम् ।

यथा भविष्योत्तरे ।

"सिंहराशिगते सूर्य्ये गगने जलदाकुले ।
मासि भाद्रपदेऽष्टम्यां कृष्णपक्षेऽर्द्धरात्रके ॥

---

* अक्षयादपि चाक्षया इति क-पुस्तके पाठः ।

शशाङ्के वृषराशिस्थे नक्षत्रे रोहिणीयुते ।
वसुदेवेन देवक्यामहं जातो जनाः स्वयम् ॥
एकेनैवोपवासेन कृतेन कुरुनन्दन ।
सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ॥"

तथा भविष्यपुराणविष्णुपुराणयोः ।

"रोहिण्यामर्द्धरात्रेण यदा कृष्णाष्टमी भवेत् ।
तस्यामभ्यर्च्चनं शौरेर्हन्ति पापं त्रिजन्मजम् ॥
प्राजापत्यर्क्षसंयुक्ता कृष्णा नभसि चाष्टमी ।
सोपवासो हरेः पूजां कृत्वा तत्र न सीदति ॥
अर्द्धरात्रेण योगोऽयं तारापत्युदये तथा ।
रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी ॥
अर्द्धरात्रादधश्चोर्द्ध्वं कलयाऽपि यदा भवेत् ।
तत्र जातो जगन्नाथः कौस्तुभी हरिरीश्वरः ॥
कार्य्या विद्धापि सप्तम्या रोहिणीसहिताष्टमी ।
तत्रोपवासं कुर्व्वीत तिथिभान्ते च पारणम् ॥
अष्टम्यामथ रोहिण्यां न कुर्य्यात्पारणं क्वचित् ।
हन्यात्पुराकृतं पुण्यमुपवासार्ज्जितं फलम् ॥
तिथिस्त्वयोदशं हन्ति नक्षत्रञ्च चतुर्द्दशम् ।
तस्मात्प्रयत्नतः कार्य्यं तिथिभान्ते च पारणम् ॥"

अयममीषामर्थः ।

"सिंहराशिगत" इति "भाद्रपद" इति सौराभिधायिपद-द्वयानुरोधेन "नभसि चाष्टमी"ति नभःपदं चान्द्रश्रावणपरम् ।

तेन सिंहस्थे रवौ चान्द्रे नभसि "च"काराच्चान्द्रेऽपि भाद्र-पदे प्राजापत्येन रोहिणीनक्षत्रेण युक्ताऽष्टमी यदाऽर्द्धरात्रे भवति स खलु भगवतो वासुदेवस्य जन्मक्षणः।

तेन तस्याहोरात्रस्य पुण्यतमत्वात् तथा ब्रह्माण्डपुराणम्।

"अभिजिन्नाम नक्षत्रं जयन्ती नाम सर्व्वदा।
मुहूर्त्तो विजयो नाम यत्र जातो जनार्द्दनः॥
सोपवासो हरेः पूजां यत्र कृत्वा न सीदति।"

रोहिणीशर्व्वरीमुहूर्त्त एव भगवतः कृष्णरूपावतारस्य सकल-त्रैलोक्यविजयिनः कारणभावात् तेऽपि जयत्यर्थयोगादभिजि-ज्जयन्तीविजयनामानो भवन्ति।

मुहूर्त्तश्चार्द्धरात्रमध्यक्षणपूर्व्वापरदण्डद्वयम्। "तत्रे"ति एवं-विधत्रितयमेलककाले सोपवासो वर्त्तमानोपवासविशिष्टः भग-वन्तं हरिमभ्यर्च्च्य न सीदति।

अस्यार्थमाह विष्णुरहस्ये।

"मुहूर्त्तमप्यहोरात्रे यस्मिन् युक्तोपलभ्यते।
अष्टम्या रोहिणी सर्व्वां तां सुपुण्यामुपावसेत्॥
जयन्त्यामुपवासन्तु कृत्वा योऽर्च्चयते हरिम्।
तस्य जन्मशतोद्भूतं पापं नाशयतेऽच्युतः॥
कौमारे यौवने बाल्ये वार्द्धके यदुपार्ज्जितम्।
तत्पापं शमयेत्कृष्णस्तिथावस्यां सुपूजितः॥
स्नानं दानं जपो होमः स्वाध्यायोऽभ्यर्च्चनं हरेः।
तत्सहस्रगुणं पुण्यं जयन्त्यां यत्कृतं भवेत्॥

धनधान्यवती पुण्या सर्व्वपापहरा शुभा ।
समुपोष्या जनैर्यत्नात् जयन्ती नाम चाष्टमी ॥
जयन्त्यामुपवासश्च महापातकनाशनः ।
स कार्य्यः सुमहाभक्त्या पूजनीयश्च केशवः ॥”

तदेवमादिभिर्वचनैरपि अर्द्धरात्रे रोहिण्यष्टम्योर्योगे जयन्तीपदप्रयोगात् “तस्य जन्मशतोद्भूत*”मित्यादिभ्यश्च जयन्त्या एव महाफलश्रुतेः जयन्तीशर्व्वरीति च† भगवज्जन्मनिमित्तत्वात् तिथिनक्षत्रमुहूर्त्तानां मेलके सत्येव जयन्तीपदवाच्यता ।

न पुनरर्द्धरात्रात्मकमुहूर्त्तमन्तरेण क्षणान्तरेणाष्टमीरोहिणीयोगादपि जयन्तीति वक्तुं शक्यते शास्त्रमूलत्वादेतत्प्रयोगस्य ।

यच्च “मुहूर्त्तमप्यहोरात्र” इत्यादि वचनं तदपि विजयनाम्नो मुहूर्त्तस्यैव प्रतीतेः तत्रैव तु मुहूर्त्तयोगो न तु कृत्स्नाहोरात्रएकदेशमुहूर्त्तान्तररोहिणीयोगे जयन्तीशर्व्वरी भवतीत्यर्थः ।

“रोहिणीसहिता कृष्णा मासि भाद्रपदेऽष्टमी ।
अर्द्धरात्रादधश्चोर्द्धं कलयापि च‡ सा भवेत् ॥” इति ।

अस्यापि अयमेवार्थः ।

यद्यपि दिवाप्रभृतिवर्त्तमानायामष्टम्यां कलान्यूनार्द्धरात्रादपि प्रभृति रोहिणीनक्षत्रं भवति, कलाधिकार्द्धरात्रपर्य्यन्तं वा

---

* जन्मशतोद्भूतमिति क-पुस्तके पाठः ।

† जयन्तीनाम शर्व्वरीति ख-पुस्तके पाठः ।

‡ कलयापि यदा भवेत् इति क पुस्तके पाठः ।

रोहिणी भवति, तदापि रोहिण्यष्टमी भवति। एवं हि सति अर्द्धरात्रयोगोऽवश्यं भवति। अर्द्धरात्रयोगपरत्वमस्यापि वचनस्य न पुनरेकदैव विवक्षितम्। "कलयापि वा" इत्यनादराभिधानात् अदृष्टार्थतापत्तेः।

ननु भवत्वर्द्धरात्रयोगविवक्षा "तारापत्युदये तथे"ति किमर्थमुपन्यस्तम् अष्टम्यामर्द्धरात्र एव चन्द्रोदयात्। नैतदष्टम्यामर्द्धरात्रे चन्द्रोदयस्यानियतत्वात्। तत्र प्रथममध्यमशेषभागभेदेन उदयस्य अर्द्धरात्रादधस्तोर्द्धञ्च सम्भवात् तदर्थमुक्तम्।

अर्द्धरात्रस्य यद्यष्टमीरोहिणीयोगो व्याप्नोति तदासौ पुण्यतमः काल इत्यर्थः।

दिवा च सप्तमीयोगो न दोषमावहति। अतएव "कार्य्या विद्धापि सप्तम्या" इत्यादि। न तावद्गस्तनिन्दा युग्मविधिशेषत्वात्तस्याः। न चाष्टमीनवमीयुग्मविधानं परभूतायाएव नवम्या रोहिणीयोगे रोहिण्यष्टम्यापत्तेः।

तेन सङ्कल्पादिग्रहणे सप्तमीमपि तत्सहायतयाऽनुजानाति इति न कश्चिद्दोषः।

यद्वा "कार्य्या विद्धापि सप्तम्या" इति न्यायप्राप्तानुवादोऽयम् अहोरात्रैकसाध्ये ह्युपवासेऽहोरात्ररूपपुण्यकालानुपपत्तेः सर्व्वत्र पुण्यकालस्य स्वसम्बन्ध्यहोरात्रलक्षकत्वम्। तदीयस्य प्रातःसङ्कल्पकालः तेन सप्तमीकृत्तिकयोः प्रातःसम्बन्धेऽपि सङ्कल्पस्याविरोधः। अन्यथा रात्रौ प्रहरत्रयोपरि रोहिण्यष्टम्योरुपक्रमे उपवासः न स्यात् रात्रावष्टम्या व्यस्तत्वात्। शास्त्रेण मृग-

शिरसोऽप्यनुज्ञानात्। नवम्या अपि दिवायुग्म एवाभ्यनुज्ञानात्।

सप्तम्याश्चाल्परात्रिव्यापिन्यां प्रधानीभूत एव सप्तम्यामुपवासो न स्यात् रात्रावष्टम्या व्याप्तत्वात्। पूर्व्वोक्तन्यायादेव उपवासाविरोधो वाच्यः। सुतरां तदङ्गभूतसङ्कल्पाविरोधः।

"अतः सङ्कल्पकालाविरोधे सति" इति अमीमांसकवचनं हेयम्। "प्रातः सङ्कल्पयेद्विद्वान्" इति श्रुत्याविशेषेण प्रातर्विधानात् तत्परित्यागेन कालान्तरसङ्कल्पकरणमप्यशास्त्रीयम्। पूजायाश्च दिवापि कर्त्तव्यतया निबन्धृभिर्लिखितत्वात् "तस्यामभ्यर्च्चनमित्यादिभिश्च रात्रौ विहितत्वात् उभययोगिनी अष्टमी ग्राह्या।

"दिवारात्रौ व्रतं यच्च एकमेव तिथौ स्मृतम्।
तस्यामुभययोगिन्यामाचरेत् तद्व्रतं व्रती॥"

इति पद्मपुराणवचनात्।

अतः समस्तदिनव्यापिसप्तम्यां व्रतमिदं कार्य्यमिति न रमणीयकम्* अनन्तरितवचनविरोधात्।

ननु न्यूनार्द्धरात्रात्प्रभृति नक्षत्रसम्बन्धे दिनान्तरेऽपि तावत्कालव्यापित्वात् तिथिभान्ते च पारणविधे रात्रौ पारणं प्रसज्येत। सत्यं वचनान्न दोषः।

---

* व्रतमित्यनवद्यमिति क-पुस्तके पाठः।

ननु ।

"सायमाद्यन्तयोरह्नोः सायं प्रातश्च मध्यमे ।
धर्म्योपवासे कुर्व्वीत नैव भक्तचतुष्टयम् ॥"

इति सायंभोजनं निषिद्धम् ।

सत्यं भक्तचतुष्टयं न कुर्व्वीत इति भक्तचतुष्टयप्रवृत्तिमतोऽधिकारे सिद्धे न सायमादिकं विशेषणं विवक्षितं वाक्यभेदापत्तेः हविरुभयत्ववत् ।

अतएव पद्मपुराणे ।

"अह्नोराद्यन्तयोर्भक्तमेकैकं मध्यतो द्वयम् ।
चतुर्भक्तनिषेधोऽयमुपवासः प्रकीर्त्तितः ॥"

तत्र "सायम्" इत्यनुक्तवान् ।

यदि वा नायं निषेधः किन्तु उपवासपूर्व्वपरयोर्दिनयोः सकृद्भोजनं व्रताङ्गतया विधीयते लाघवात् । पक्षद्वयेऽपि द्वितीयभोजनप्रायःप्राप्तसायंसम्बन्धानुवादः ।

अतः ।

"युक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।"

इतिवत् महानिशापरित्यागेन द्वितीयाहोरात्रस्य प्रदोषप्रहरे रात्रिशेषे वा पारणां करिष्यति ।

ननु तिथिभान्ते च पारणमिति पारणकर्त्तव्यतापरं येन तदन्तएव विधिः । किं तर्हि ? नक्षत्रे च तिथौ च वर्त्तमाने न कुर्य्यादिति तात्पर्य्यं तत्रैव दोषश्रुतेः । रागप्राप्तभोजनानुवादेन वा तिथिनक्षत्रेतरकाले कुर्य्यादिति विधिः । स च

रात्रिशेषभोजनेऽपि अविरुद्धः। तृतीय एवाहनि पारणं करिष्यतेऽपरेऽहनीतिवन्नियमाभावात्।

"अष्टम्यामथ रोहिण्यां न कुर्य्यात्पारणां क्वचित्।"

इत्यनेन एकवाक्यत्वात्।

तिथिभान्ते च पारणमिति नान्यत्र प्रवर्त्तते। अतः सप्तम्याद्युपवासे परदिने सप्तमीनिर्गमप्रत्यवेक्षणमनालम्बनमेव।

रोहिण्यष्टम्याञ्चोपवासे वारादिदोषो नास्ति सामान्यनिषेधस्य वारादिनिमित्तोपवासविषयत्वात्, विशेषनिषेधस्य एकादश्येकवाक्यत्वात्, रोहिण्यष्टमीव्रते च विशेषनिषेधस्यादर्शनात्।

तस्माद्यदाऽर्द्धरात्रे सौरभाद्रेऽष्टमी कृष्णा रोहिण्या संयुता, तदैव देवस्य* जन्मदिनम्।

"तत्रार्च्चनमुपवासं
कृत्वा मुच्येत सकलपापेभ्यः।
तदहनि सप्तम्यन्तौ
तिथिनक्षत्रे न दोषकरे†॥

तथा शुक्लत्रयोदशीकृष्णप्रतिपदुभयपक्षदशमीनां युग्माभावात्‡ वृद्धिह्रासादिना पूज्यत्वं स्थितम्।

---

* वासुदेवस्य इति क-पुस्तके पाठः।

† न दोषकरौ इति क-पुस्तके पाठः।

‡ युग्मत्वाभावादिति ख-पुस्तके पाठः।

तथा बौधायनः ।

"खर्व्वो दर्पस्तथा हिंसा त्रिविधं तिथिलक्षणम् ।
खर्व्वदर्पौ परौ ग्राह्यौ हिंसा स्यात्पूर्व्वकालिकी ॥"

खर्व्वः समता, यतः प्रभृति पूर्व्वदिने प्रारब्धा परदिने च तावत्येव समाप्तिः । दर्पो वृद्धिः, परदिनेऽधिककालेन समाप्तिः । हिंसा क्षयः, परदिने न्यूनकालेन समाप्तिः ।

तथा ।

"वर्द्धमानस्य पक्षस्य उदया गृह्यते तिथिः ।
यदा पक्षः क्षयं याति तदा स्यादापराह्णिकी ॥"

तथा ।

"वर्द्धमानस्य पक्षस्य उदया पूज्यते तिथिः ।
सा तिथिस्तदहोरात्रं छेदे त्वस्तमनक्रमति ॥"

तिथिवृद्धिह्रासाभ्यामेव परं पक्षस्य वृद्धिह्रासाविति तथोक्तम् ।

तथा स्मृतिसमुच्चयवचनम् ।

"षण्मुहूर्त्ता न कर्त्तव्या या तिथिः क्षयगामिनी ।
त्रिमुहूर्त्तापि कर्त्तव्या या तिथिर्वृद्धिगामिनी ॥"

तथा ।

"यस्यां तिथावभ्युदियात् सूर्य्यस्तु त्रिमुहूर्त्तकः ।
यागदानजपादिभ्यः* फलेप्सुस्तामुपक्रमेत् ॥"

तदेवमादिवचनानां युग्मतिथिपूज्यताविधिविरोधात् यथोक्त-तिथित्रयविषयत्वं स्थितम् ।

---

* यागदानफलादिभ्यः इति ख-पुस्तके पाठः ।

सम्भ्रमेण तु।

"शुक्लपक्षे तिथिर्ग्राह्या* यस्यामभ्युदितो रविः।
कृष्णपक्षे तिथिर्ग्राह्या† यस्यामस्तमितो रविः॥"

इति पठित्वा।

"वर्द्धमानेन्दुपक्षस्य उदया पूज्यते तिथिः।
यदा चन्द्रः क्षयं याति तदा स्यादापराह्णिकी॥
सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः।
वर्द्धमानेन्दुपक्षे स्याद्भानौ त्वस्तमनम्यति॥"

इति पठितम्।

वर्द्धमान इन्दुर्यस्मिन् पक्षे स वर्द्धमानेन्दुपक्षः शुक्लः। अन्यस्तु कृष्णः। तेनानयोरपि शुक्लकृष्णपक्षवचनत्वात् दैवपित्र्यकार्य्यपरत्वम्। दैवस्य पूर्व्वाह्णे पित्र्यस्य चापराह्णे विधानात्।

यत्तु विष्णुधर्म्मोत्तरवचनम्।

"सा तिथिस्तदहोरात्रं यस्यामभ्युदितो रविः।
तया कर्म्माणि कुर्व्वीत ह्रासवृद्धी न कारणम्॥"

तद्युग्मतिथिविषयमेव।

अयुग्मविषयत्वे वृद्धिह्रासादिवचनं निर्व्विषयं स्यात्। तेन दशम्यां तिथौ समत्वे वृद्धौ वा परदिने पूज्यता। क्षये पूर्व्वदिने। तत्र समत्वे वृद्धौ वा यदि पूर्व्वदिनएव हस्तायोगः भौमवारः

---

* ज्ञेया इति ख-पुस्तके पाठः।

† तु सा ज्ञेया इति ख-पुस्तके पाठः।

क्षीयमाणायां वा परदिने तदा सैव दशहरा तिथिरिति लोकानाम्प्रतिपत्तिः अस्मदुक्तन्यायानुसारेणैव ।

तस्मादुभयदिने प्राप्तौ कुत्र क्रिया इति सन्देहे युग्मतिथिषु युग्मवचनं अयुग्मासु* तु वृद्धिह्रासादिवचनम् । एकत्र प्राप्तौ द्वयमपि निवर्त्तते । एकत्रैव नक्षत्रादिदर्शनाच्च कर्त्तव्यस्य कुत्रेति सन्देहाभावात् । तदस्तु प्रकृतमनुसरामः ।

अरुणोदयकालीना सप्तमी अष्टमीविद्धापि स्नानार्घदानार्थं ग्राह्या इति सिद्धम् ।

यच्च दैवमेव कियद्दिवा कियच्च रात्रौ कर्त्तव्यम् यथा मनोरथद्वितीयायां दिवा वासुदेवार्चनं रात्रौ चन्द्रोदयेऽर्घदानम् नक्तं तु भोजनादिकम् ।

यथा विष्णुधर्म्मे ।

"देवमभ्यर्च्य पुष्पैश्च धूपदीपानुलेपनैः ।
उद्यतश्चैव बालेन्दोर्दद्यादर्घं समाहितः ॥
नक्तं भुञ्जीत च नरो यावत्तिष्ठति चन्द्रमाः ।
अस्तं गते न भुञ्जीत व्रतलोपभयान्नरः ॥"

अस्तं गते चन्द्रे इत्यर्थः ।

यथाच पद्मपुराणम् ।

"दिवा रात्रौ व्रतं यच्च एवमेव तिथौ स्मृतम् ।
तस्यासुभययोगिन्यामाचरेत्तद्व्रतं व्रती ॥"

अत्र च प्रतिपद्युक्तापि द्वितीया कर्म्मार्थं दिवा च रात्रौ च यदा

---

* अयुग्मार्यासु इति क-पुस्तके पाठः ।

लभ्यते तदा न युग्मादरः कार्य्यः । द्वितीयातृतीयायुग्मदिने तत्कर्म्मोचितद्वितीयाकालस्याभावादित्यर्थः ।

यत्पुनरस्य वचनस्य योग्लोकीयं व्याख्यानं—"यत्र षष्ठीदिने रात्रिशेषे सप्तमी परदिनेऽपि रात्रिशेषं स्पृशति तत्र उदयास्त-सम्बन्धिन्याः प्रशस्तत्वात्तदहोरात्रसम्बन्धिन्येव ग्राह्या युग्मभावस्य क्रियानर्हस्य अल्पस्यासङ्करत्वात् । न च पूर्व्वरात्रौ रात्रि-सम्बन्धि कर्त्तुमुचितम् दिवा कर्त्तव्योत्तरकालीनत्वात् रात्रिकर्त्त-व्यस्य क्रमबाधापत्तेः । उदयास्तमयसम्बन्धस्य पूज्यताहेतो-रनतिक्रमणीयत्वा"दित्यन्तम्, तदसम्बद्धम् । यत्तावदुक्तम् उद-यास्तमयसम्बन्धिन्याः पूज्यत्वमिति तत्तथाविधवचनाभावादनुप-पन्नम् ।

यत्तु देवलवचनम् ।

"यां तिथिं समनुप्राप्य उदयं याति भास्करः ।
सा तिथिः सकला ज्ञेया स्नानदानव्रतादिषु ॥
यां तिथिं समनुप्राप्य अस्तं याति दिवाकरः ।
सा तिथिः सकला ज्ञेया स्नानदानादिकर्म्मसु ॥"

तस्यापि युग्मतिथीनां साकल्यप्रतिपादनद्वारेण उभयोरुभय-कार्य्यविधानार्थत्वेन भवतैव व्याख्यातत्वात् ।

अस्मन्मते तु वितते कर्म्मणि अहोरात्रस्य तद्रूप्यज्ञापन-परत्वात् न च तस्मिन्नर्थे प्रमाणता ।

न च वचनमप्येतदुदयास्तमयसम्बन्धिनी तिथिः पूज्या इत्यभिदधाति । किञ्च यदा षष्ठीदिनेऽस्तमयात्परतः सप्तमी,

दिनान्तरे चास्तमयसम्बन्धिनी सप्तम्येव तदा दिवारात्रौ यद्वृत्तं तत्र षष्ठीसप्तमीभ्यां समाप्यं, रात्रियुग्मे युग्मभावासम्भवात्। न च परदिने रात्रौ अष्टमीकाले सप्तमीकार्य्यापत्तेः।

अथ रात्रियुग्मेऽपि युग्मवचनं प्रवर्त्तते, नैतदपि उदयास्त-सम्बन्धिन्यामेव युग्मपरतिथौ तत्कार्य्यं न स्यात्। तिथ्यन्तरेण रात्रौ व्यस्तत्वात्। न भवतु इति चेन्न भवताम्मते साकल्यवचनेन उदयसम्बन्धिन्याः कार्य्येषु अस्तसम्बन्धितिथिविधानात्। उदय-सम्बन्धविरहिण्याः कार्य्ये अन्यतिथिविधानाभावात् कार्य्या-निष्पत्तेः।

अस्मन्मते तु दिवायुग्मे सति युग्मतिथिविधेः तच्छेषत्वाच्च दिवाव्यस्तनिन्दायाः, दिवायुग्मभावे तु तस्मिन्नेवाहनि उदयास्त-व्यापितिथिप्राप्तौ सन्देहाभावात् युग्मतिथिविधानस्याप्रवृत्तौ रात्रिव्यस्तत्वेऽपि अनिन्दितत्वात्, अनिन्दिततिथेश्च "सा तिथि-स्तदहोरात्र"मिति साकल्यप्रतिपादनात् उदयास्तमययोगिन्यां सकलकर्म्मसिद्धेर्न विरोधः। यदपि रात्रावेव देवार्च्चनचन्द्रार्घ-दाननक्तभोजनप्रधानभूतं कर्म्म कर्त्तव्यम् तत्र निशासम्बन्धिनी तिथिर्ग्राह्या तत्रापि न युग्मग्रहणञ्चोदितम्। एवं न्यायप्राप्त-मेवार्थं स्मरति जाबालिः।*

"अहःसु तिथयः पुण्याः कर्म्मानुष्ठानतो दिवा।
नक्तादिव्रतयोगे तु रात्रियोगो विशिष्यते॥"

---

* याबालिः इति ख-पुस्तके पाठः।

अस्यार्थः । दिवाकर्म्मानुष्ठाने कर्त्तव्येऽनुष्ठानाय च अहःसु यास्तिथयः ताः पुण्याः कर्म्मार्थं ग्राह्याः । अनुष्ठानत इति सप्तम्यास्तसिल् चतुर्थी वा । "नक्तादिव्रतयोगे त्वि"ति निशा-साध्यकर्म्मोपलक्षणम् । तत्र निशायोग एव युग्माद्विशिष्यते चतुर्थ्यां नक्तसाध्यस्य युग्मग्रहणे पञ्चम्यां तत्कृतं स्यात् तृतीया-दिवसे च रात्रौ चतुर्थीग्रहणे स्वकाल एव व्रतं स्यात् इत्ययं पक्षो युग्माद्विशिष्यते ।

यच्च स्वल्पयोग्लोकेनाचोक्तम् युग्मादरस्योक्तत्वात् युग्मव्यति-क्रमे दोषश्रुतेः ततश्चैकादश्यामुपवासे देवपूजाऽग्निहवनं ब्राह्मण-तर्पणानुष्ठानम् अविरोधाद्दिवारात्रौ प्रसक्तं तदर्थमाह "दिवा च तिथयः पुण्याः" तथा नक्तमपि मुहूर्त्तोनदिने विहितमस्ति नक्षत्रदर्शने च तत्र "रात्रियोगो विशिष्यते" इति ।

वृहद्योग्लोकेनाप्युक्तम् "युग्मव्यतिक्रमदोषश्रुतेः अयुग्म-दशम्यादितिथिष्वेतदवगन्तव्यम् । अथवा एकदिवसीयभीम-द्वादश्यादिव्रतेष्वहोरात्रसाध्येषु न युग्मादर*इति व्यतिक्रमे दोष-श्रुते"रित्यन्तं तदयुक्तम् दिनद्वयेऽपि कर्म्मयोग्यकालप्राप्तौ सन्देह-निर्णयार्थत्वाद्युग्मवचनस्य तत्रैव व्यस्तनिन्दार्थवादस्य वर्णितत्वात् किमिदं प्रतिक्षणममीमांसकवचनं "व्यतिक्रमे दोषश्रुते"रिति ।

यच्च दिवारात्रौ पूजादिकर्म्मप्रसक्तौ दिवाविधिरिति तन्न "अहःसुदिवे"तिपदयोरन्यतरानर्थक्यात् ।

---

* न युग्मादरस्योक्तत्वादिति ख-पुस्तके पाठः ।

यच्च रात्रिनक्तप्राशस्त्यार्थम् उत्तरार्द्धवर्णनं तदपि नोपपद्यते आदिपदानर्थक्यात्।

यच्चायुग्मतिथिविषयत्वमुक्तं तदप्यसङ्गतम् तत्रापि वृद्धि-ह्रासादिववर्जनेन प्रतितिथीनां युग्मवचनेनैव अन्यतरदिने पूज्य-तावधारणात् तद्विरोधात् कथं तत्राप्रवेशोऽस्य। तथैतद्वच-नानुरोधेन वृद्धिह्रासादिकमनादृत्य निशायोगिन्या नक्तादि-व्रतेषु ग्रहणं, नैतत् युग्मतिथिष्वपि तद्वचनादरेण अस्य प्रवृत्ति-सम्भवात्।

किञ्च विहिततिथिकालानुरोधेन ह्येतद्वचनं तत्र युग्म-तिथावेतद्वचनस्याप्रवृत्तौ तत्कालविधिबाधा स्यात् इति तदनु-ग्रहणार्थं सर्व्वतिथिष्वेव "अहःसु तिथयः पुण्या" इत्यादि वचनं प्रवर्त्तते।

यच्च एकदिवसीयभीमद्वादश्यादिविषयत्वमस्य वचनस्योक्तं तत्र युग्मातिक्रम इति तदप्यसङ्गतम् युग्मसाकल्यवचनद्वय-प्रवृत्तेः* कथं भीमद्वादशीं परित्यजति तत्रापि तयोरविशेषात्। "तस्मादहःसु तिथयः पुण्या" इत्यादेः पूर्व्वोक्तएव अर्थः।

यदप्युक्तं योग्लोकेन "आरब्धवार्षिकादिव्रतेषु युग्मानति-क्रमेण कर्म्मानुष्ठान"मिति तदप्यहृदयं व्याख्यातम्।

यद्येवं वदतोऽयमभिप्रायः—दीर्घकालीनसंवत्सरादिसाध्ये-ष्वेव युग्मविधिर्नान्यत्रेति, तदैकदिवसीयस्नानदानव्रतादिषु

* वचनद्वयबलप्रवृत्तिरिति ख-पुस्तके पाठः।

युग्मविधेरप्रवृत्तेः माघीसप्तमीप्रभृतिषु* कथं युग्मादरं भणसि । अथाविशेषेणास्य सर्व्वत्र प्रवृत्तिः तर्हि वार्षिकादिव्रतेषु युग्मानतिक्रमेण कर्म्मानुष्ठानं वक्तव्यं कथं सर्व्वत्रैवानतिक्रमणीयत्वात् ।

तथा यदपरमुक्तम् "षष्ठ्यादियुग्मेषु प्रातरादिकाले वा व्रतग्रहणं सङ्कल्पः प्रातःप्राप्तौ प्राशस्त्य"मिति तदपि अप्रामाणिकम् । "प्रातः सङ्कल्पयेद्विद्वानुपवासव्रतादिषु" । इति प्रातरेव सङ्कल्पविधानात्, विहितञ्चेत् तदा प्राशस्त्यम् इति कथम् ?

न च भीमद्वादश्यादौ कालान्तरेऽपि सङ्कल्पश्रुतेः न प्रातर्नियम इति वाच्यं "प्रातः सङ्कल्पये"दिति सामान्यविधेः विशेषविहितकालान्तरानवरुद्धविषयत्वात् पदाहवनीयवत् । न च भीमद्वादश्यादिष्विव अत्रापि प्रातरितरकालश्रुतिः ।

तस्माद्द्योग्लोकवचनम् आलोच्यमानं निरालम्बनं भवतीति । तथा वारेण सूर्य्यसंक्रमणेन नक्षत्रयोगेन वा पुण्यत्वं न युग्ममपेक्षते ।

तथा भविष्ये ।

"शुक्लपक्षस्य सप्तम्यां यदा सङ्क्रमते रविः ।
महाजया तदा स्याद्वै सप्तमी भास्करप्रिया ॥
स्नानं दानं तथा होमः पितृदेवादिपूजनम् ।
सर्व्वं कोटिगुणं प्रोक्तं भास्करस्य वचो यथा ॥
शुक्लपक्षस्य सप्तम्यां यदर्च्चन्त्यर्को भवेत् ।

* एवमेव क्वचिदपि पुस्तकेषु पाठः ।

तदा सा स्यान्महापुण्या सप्तमी पापनाशिनी ॥

तस्यां सम्पूज्य देवेशं चित्रभानुं दिवाकरम् ।

सप्तजन्मकृतात्पापान्मुच्यते नात्र संशयः ॥”

करो हस्तः ।

तत्र वारसङ्क्रमणयोरेकदिवसीयत्वेन संशयाभावान्न युग्मवचनम् । नक्षत्रस्याप्येकदिनसम्बन्धे एवमेव । दिनद्वयसम्बन्धे तु सति सन्देहे स्नानादौ युग्मविधिः । व्रतादौ त्वन्यथा । यथा विष्णुधर्म्मोत्तरे ।

“उपोषितव्यं नक्षत्रं येनास्तं याति भास्करः ।

यत्र वा युज्यते राम निशीथे शशिना सह ॥”

रात्रौ नक्षत्रस्य वीर्य्यवत्त्वात् ।

न च “घटिकार्द्धं त्रिभागं वा” इति अल्पवेधेऽपि व्यस्तस्य निन्दितत्वात् ।

“नागो द्वादशनाड़ीभिर्दिक् पञ्चदशभिस्तथा ।

भूताष्टदशनाड़ीभिर्दूषयन्त्युत्तरां तिथिम् ॥”

“नागः” पञ्चमी । “दिक्” दशमी । “भूता” कृष्णचतुर्द्दशी ।

न च “घटिकार्द्ध”मिति वचनं परतिथिदूषकपञ्चम्यादित्रयव्यतिरिक्ततिथिविषयमित्यपि वाच्यम् ।

“मुहूर्त्तेनापि संयुक्ता दशम्यैकादशी तु या ।

तामुपोष्य नरो मोहात्सुखे धर्म्मे च मुच्यते ॥” इति

कूर्म्मपुराणस्य दशम्या मुहूर्त्तमात्रयोगेनापि अपूज्यत्वदर्शनात् । अत्र कस्यचित्समाधानम् “अल्पवेधेनापूज्यत्वे द्वादशनाड़िकादि-

वेधवचनं दोषभूयस्त्वार्थम्। व्यस्तनिषेधे हि सति दोषाल्पत्व-महत्त्वाभिधानं युक्तम्।"

स च प्रागेव दूषितः। किन्तु युग्मविधिशेषोऽयमनुवाद-इत्युक्तम्। स्वल्पयोग्लोकेन तिथिवृद्धिह्रासादिनिर्णय इत्युक्तम्। "घटिकार्द्धं त्रिभागं वा" इति निन्दानुवादोऽयम्। अन्यथा "नागो द्वादशनाड़ीभि"रित्याद्यनर्थकं स्यात् इति पुनरमावास्या-प्रक्रमे दर्शितम्।

"स्वल्पकालिकोऽपि वेधः वेध एव। यथा "घटिकार्द्ध"मिति लिखित्वा उक्तम् "यत्तु नागो द्वादशनाड़ीभिरिति तद्दोषभूयस्त्व-ख्यापनार्थं सर्व्वत्र वेधमानस्य श्रुतत्वादिति।" तत्पूर्व्वापरवि-रोधादेव हेयम्। किमत्र दूषणान्तरेण।

किञ्च अल्पवेधेनापि विद्धाया अनङ्गत्वात् तत्रानुष्ठानप्रसक्त्य-भावात् निषेधानुपपत्तिः। कुतो द्वादशनाड़िकादिदोषभूय-स्त्वम्। अतोऽसङ्गतमेव वचनम्।

अन्धूकेनोक्तं "नागो द्वादशनाड़ीभि"रित्यादि दिव्यश्राद्ध-विषयम्।

तथाहि धर्म्मः।

"दैवानुद्दिश्य यच्छ्राद्धं क्रियते पितृतृप्तये।
हविष्येण विशिष्टेन द्वादश्यादिषु यत्नतः॥"

एतद्दिव्यश्राद्धम्।

तत्र।

"पूर्व्वाह्णे दैविकं श्राद्धमपराह्णे तु पैतृकम्।

एकोद्दिष्टन्तु मध्याह्ने वृद्धिश्राद्धन्तु साग्निकम्* ॥"
तेन द्वादशनाड़ीनां पूर्व्वोक्तभ्रंशहेतुत्वात् तद्विषयत्वमस्य† ।

ननु "श्राद्धमपराह्णे तु पैतृकं" तर्हि पञ्चदशाष्टादशनाड़िकावेधोपन्यासोऽनर्थकः । तत्राप्युक्तम्—निषेधदर्शनादेव षष्ठेरकादश्यमावास्यासु द्वादशपञ्चदशाष्टादशनाड़िकापर्य्यन्तं श्राद्धं कर्त्तव्यं निश्चीयत इति ।

अस्मिन्नपि पक्षे पूर्व्वोक्तबाधेन कल्पना सा च विषयाभावे भवति । अस्ति चास्य विषयः—तथाहि नक्तादिव्रतेषु रात्रियोगस्यादरणीयत्वं न युग्मस्येत्युक्तम् प्राक् । ततः पञ्चमीदशमीचतुर्द्दशीयुक्तापि षष्ठ्यादिका ग्राह्या इति स्थिते यदि द्वादशनाड़ीवेधः स्यात् तदा नक्तादिष्वपि त्याज्या इत्यर्थः ।

ननु तर्हि वार्षिकनक्तादिव्रतलोपः स्यात् पूर्व्वदिने नाड़िकाभिर्दूषितत्वात् परत्र च युग्मतिथौ रात्रिषु युग्माभावात् ।
सत्यमतएव व्रतारम्भकाले दूषणमिदम् । आरब्धे वार्षिकादिव्रते अवर्ज्जनीये तत्तन्नाड़िकावेधेऽपि विधिसामान्यादेव कर्त्तव्यत्वात् न तु तद्विषयत्वं द्वादशनाड़िकावेधदूषणस्य ।

सम्भ्रमेण तु "घटिकार्द्धमिति दूषणवचनं व्रतोपवासादौ, व्रतोपवासनियमे घटिकैका यदा भवेत् इति वचनात् । नागो द्वादशनाड़ीभिरित्यादिकन्तु स्नानादिदूषक"मित्युक्तम् ।

---

* वृद्धिश्राद्धन्तु नाग्निकं इति क-पुस्तके पाठः ।

† तद्विषयत्वमस्तु इति क-पुस्तके पाठः ।

अथ दुर्गोत्सवकार्य्यम्

चान्द्रमसेऽश्वयुजि साधितं पूर्व्वम् ।
आरोपार्च्चननिर्गम-
समयस्त्वालोच्यतामधुना ॥

तत्र भगवतीपुराणे ।

"कन्यायाः कृष्णपक्षे तु पूजयित्वार्द्रभे दिवा ।
नवम्यां बोधयेद्देवीं गीतवादित्रनिःस्वनैः ॥
शुक्लपक्षे चतुर्थ्यान्तु देवीकेशविमोचनम् ।
प्रातरेव तु पञ्चम्यां स्नापयेत्सुशुभैर्जलैः ॥"

कन्यायां चान्द्रभाद्रीयकन्यासम्बन्धिकृष्णपक्षे इत्यर्थः । अमलिम्लुचभाद्रपदकृष्णपक्षस्य कन्यासम्बन्धाव्यभिचारात् । न तु कन्याक्षण एव देवीप्रबोधनियमः । कृष्णपक्षीयदशम्यादिषु कन्यासंक्रान्तौ तत्पूर्व्वभूतायामेव नवम्यां देवीप्रबोधस्य नियतत्वात् । न च कन्याशेषपक्षनवम्यामेव कस्मान्न तत्क्रियते इति वाच्यम् द्विराषाढ़ं विनैव तुलायां दुर्गोत्थानापत्तेः* । न वा चान्द्रसौरे वा आश्विने तद्भवेत् ।

आह व्यासः ।

"आर्द्रायां बोधयेद्देवीं मूलेन तु प्रवेशयेत् ।
उत्तरेणार्च्चनं कृत्वा श्रवणेन विसर्ज्जयेत् ॥"

आहरणकर्म्मतया उपात्ता शाखैव "पूजयित्वा" इत्यत्रापि कर्म्मतया सम्बध्यते ।

---

* दुर्गोत्सवाविधानादिति क-पुस्तके पाठः ।

अथ लिङ्गपुराणम् ।

"सप्तम्यां पत्रिकापूजा अष्टम्याञ्चाप्युपोषणम् ।
पूजा च जागरश्चैव नवम्यां विधिवद्बलिः ॥
सम्प्रेषणं दशम्याञ्च क्रीड़ाकौतुकमङ्गलैः ।
नीराजनं दशम्यान्तु बहुवृद्धिफलं महत् ॥"

पत्रिका विल्वशाखा । तस्याः पूजा न तु तया पूजा । "मूलेन सफला"मित्यनेनैकवाक्यत्वात् । अनाहृतायाः पूजानुपपत्तेराहरणमपि सप्तम्यामेव कार्य्यम् कालान्तरस्यानुपादानात् ।

एवञ्च लिङ्गपुराणेन तिथिकल्पो दर्शितः व्यासेन तु नक्षत्रकल्पो मेलके तु उभयानुपालनमिति मेलकादरः। न तु सप्तमीमूलयोर्योगे पत्रिकाप्रवेश इति वचनमस्ति ।

न च वचनद्वयैकवाक्यतया अयमर्थो भवतु इति वाच्यम् प्रतिसंवत्सरं नियमेनाप्राप्तेः ।

अतएव भविष्यपुराणम् ।

"अथाश्वयुजके मासि शुक्लाष्टम्यां भवेद्यदि ।
नक्षत्रं परमं मूलं कन्यायां सविता तथा ॥
सर्व्वपापप्रशमनी महती नवमी स्मृता ।
अस्यां स्नानं जपो होमो दानञ्चाक्षयमुच्यते ॥"

"द्वादशामेकभक्तन्तु नक्तं कुर्य्यात्परेऽहनि ।
अयाचितं चतुर्द्दश्यामुपवासः परेऽहनि ।
एवं कृच्छ्रं चरेत्प्राज्ञो यावद्वै नवमी विभो ॥"

अथ देवीपुराणे ।

कन्यासंस्थे रवौ वत्स शुक्लामारभ्य नन्दिकाम् ।
अयाची त्वथ नक्ताशी एकाशी चाप्यनोदनः ॥
प्रातःस्नायी जितद्वन्द्वस्त्रिकालं शिवपूजकः ।

कन्यासंस्थे रवौ प्रारब्धे चान्द्रे इत्यर्थः । नन्दिका प्रतिपत् । शिव-पूजकः शिवा चण्डी तत्पूजकः ।

पूजास्थानमाह ।

"लिङ्गस्थां पूजयेद्देवीं स्थण्डिलस्थां तथैव च ।
पुस्तकस्थां तथा देवीं पार्श्वके प्रतिमासु च ।
चित्रे च त्रिशिखे खड्गे जलस्थाञ्चापि पूजयेत् ॥"

पञ्चदशाङ्गुलं खड्गं त्रिशिखञ्च त्रिशूलकम् ।

अथ भविष्ये ।

"मासे चाश्वयुजे वीर नवमी या नराधिप ।
सा महानवमी प्रोक्ता महापातकनाशनी ॥
तदा च नवरात्रन्तु उपवासपरायणः ।
पूजयेद्विधिवद्देवीं बिल्वपत्रैर्नराधिप ।
द्रोणपुष्पैस्तथा देवीं जातिपुष्पैश्च पूजयेत् ॥"

तथा भविष्योत्तरे व्यासः ।

"कन्यागते सवितरि शुक्लपक्षेऽष्टमी च या ।
मूलनक्षत्रसंयुक्ता सा महानवमी स्मृता ॥
अष्टम्याञ्च नवम्याञ्च जगन्मातरमम्बिकाम् ।
पूजयित्वा विधानेन विशोको मानवो भवेत् ॥"

मूलनक्षत्रयुक्ताष्टमीपरभूता महानवमी भवति तदा न सप्तम्यां

मूलयोगोऽस्ति। कदाचिच्च षष्ठ्यामेव मूलनक्षत्रं दृश्यते, तदा च नवम्यां श्रवणान्तपादप्राप्तिः।

यद्विषयमिदं ज्योतिःशास्त्रम्।

"आर्द्राद्यपादेऽश्वयुजि प्रसुप्ता
सम्बोधिता हैमवती सुराद्यैः।
मूलेऽर्च्चितोत्तिष्ठति सा नवम्यां
श्रुत्यन्तपादे जगतो हिताय॥"

तथा सत्यः।

"आर्द्रायां बोधयेद्देवीं मूलेनैव प्रपूजयेत्।
उत्तरेणार्च्चनं कृत्वा श्रवणेन विसर्ज्जयेत्॥
अन्तपादो दिवाभागे श्रवणस्य भवेद्यदि।
तदा सम्प्रेषणं देव्या दशम्यां शावरोत्सवः॥"

शवरवर्ण इव पर्णाद्यावृतकर्द्दमादिलिप्तशरीरो नानाविधासम्बद्ध-वल्गितनृत्यगीतवाद्यादिपरो भूत्वा इति शावरोत्सवपदार्थः।

"क्रीडाकौतुकमङ्गलै"रित्यस्यायमेवार्थः।

तथा।

"भगलिङ्गाभिधानैश्च भगलिङ्गप्रगीतकैः।
भगलिङ्गक्रियाभिश्च क्रीड़येयुरलं जनाः॥
परैर्नाक्षिप्यते यस्तु यः परं नाक्षिपत्यपि।
क्रुद्धा भगवती तस्य शापं दद्यात्सुदारुणम्॥"

तथा।

"अन्तपादो निशाभागे श्रवणस्य भवेद्यदा।

तदा देव्याः समुत्थानं नवम्यां दिनभागतः ॥”

अन्त्यपादस्य निशागतत्वे तदितरभागा यदि दिवाप्राप्तास्तदा नवम्यामपि समुत्थानम् । प्रेषिता हि गन्तुं सद्यस्तिष्ठतीति सम्प्रेषणं फलेन निर्द्दिष्टम् ।

तथा कात्यायनीश्लोकौ ।

“मूलेन प्रतिपूजयेद्भगवतीं
चण्डीं प्रचण्डाकृतिम्
अष्टम्यामुपवाससंयतधिया
कृत्वा नवम्यां बलिम् ।
नानापाशुकमज्जमांसरुधिरै-
र्भक्त्या समाराधयन्
नक्षत्रं श्रवणं तिथिञ्च दशमीं
सम्प्राप्य सम्प्रेषयेत् ॥ १ ॥
मूले श्रीफलशाद्वलैर्बहुफलैः
सौभाग्यलक्ष्मीहितैः
अष्टम्यां बहुपिष्टकैः सरुधिरै-
र्मांसैश्च शौर्य्यश्रिये ।
उत्थाने शयने च धूपकुसुमै-
र्गन्धैः सुवर्णैरुमा
पूज्या श्रीस्थिरकाङ्क्षिभिः* श्रवणके
वर्द्धापयेत्यन्त्रिकाम्† ॥” २ ॥

* श्रीस्थिरकारिभिरिति ख-पुस्तके पाठः । † वर्द्धापयेत्तां बुधः इति क-पुस्तके पाठः ।

अत्र पत्रिकाया विसर्ज्जनश्रुतिः तस्या एव पूज्यत्वं सुव्यक्तम् ।

अथ ज्योतिःशास्त्रम् ।

"ऋक्षत्रये तु मूलादौ नवम्यामाश्विने सिते ।
चण्डिकामुपहारैस्तु पूजयेद्राष्ट्रवृद्धये ॥"

तदेवं नक्षत्रकल्पस्य बहुभिरुक्तत्वात् तिथिनक्षत्रमेलकाभावे मूल-नक्षत्रादरेण प्रवेशः, श्रवणेन विसर्ज्जनम् ।

एतच्च माधवादिषट्केऽधिमासं विना कन्यायामेव चान्द्राश्विनलाभात् दुर्गोत्थानम् । षट्कमध्ये यत्र कुत्रचित् अधिमासे तुलायामुत्थानम् तत्रैव तदा चान्द्राश्विनलाभात् । तत्रानुत्थापने दोषश्रुतिः ।

ज्योतिःशास्त्रम् ।

"द्विराषाढ़े तु कन्यायामुत्थानं भवयोषितः ।
कुर्व्वतो हीयते राष्ट्रं पूजा च विफला भवेत् ॥
तस्यामेव दशम्याञ्च बलनीराजनं नृपः ।
कुर्य्याज्जागरमष्टम्यां नवम्यां विधिवद्बलिम् ॥
दशम्यां बलवृद्ध्यर्थं कुर्य्यान्नीराजनं नृपः ।
स्वात्यादितस्तृतीयादौ सप्ताहञ्चाश्विने सिते ।
रक्षां कृत्वा दशम्याञ्च शान्त्या नीराजयेद्बलम् ॥"

दुर्गाबलिदाननवम्यनन्तरदशम्येव नीराजनकालः । देवीसम्प्रेषणं तु तदहरेव दिनान्तरे वा इत्यनुपयुक्तम् । तस्य विशेषणत्वेन अश्रवणात् । तथा कार्त्तिकेऽपि नीराजनमाह

वराहः ।

"द्वादश्यामष्टम्यां कार्त्तिकशुक्लस्य पञ्चदश्यां वा ।
आश्वयुजे वा कुर्य्यान्नीराजनसंज्ञितां शान्तिम् ॥
नीराजने निवृत्ते यया दिशा खञ्जनं नृपो यान्तम् ।
पश्येत्तया तस्य चिप्रमरातिर्वशमुपैति ॥
खञ्जनको नामायं यो विहगस्तस्य दर्शने प्रथमे ।
प्रोक्तानि यानि मुनिभिः फलानि तानि प्रवच्यामि ॥
नृपतिरपि शुभं शुभप्रदेशे
खगमवलोक्य महीतले विदध्यात् ।
सुरभिकुसुमधूपयुक्तमर्घ्यं
शुभमभिनन्दितमेवमेति वृद्धिम् ॥"

"नृपतिरपि" इत्यपिशब्देन अनृपतिरपि दद्यादिति दर्शितम् ।

"देवदानवयक्षाणां नराणां पुष्टिवर्द्धनम् ।
दर्शनं तव भद्रस्य खञ्जरीट नमोऽस्तु ते ॥"

शुभखञ्जनमाह ।

"स्थूलोऽभ्युन्नतकण्ठः कृष्णगलो भद्रकारको भद्रः ।
आकण्ठमुखात्कृष्णः सम्पूर्णः पूरयत्याशाः ॥"

शुभदेशमाह ।

"अथ मधुसुरभिफलकुसुमतरुषु सलिलाशयेषु पुण्येषु ।
करितुरगभुजगमूर्ध्नि प्रासादोद्यानहर्म्येषु ॥
गोगोष्ठसत्समागमयज्ञोत्सवपार्थिवद्विजसमीपे ।
हस्तितुरङ्गमशालाच्छत्रध्वजचामराद्येषु ॥
हेमसमीपसिताम्बरकमलोत्पलपूजितोपलिप्तेषु ।

दधिपात्रधान्यकूटेषु च श्रियं खञ्जनः कुरुते ॥
पङ्के स्वादन्नाप्तिर्गोवत्ससम्पच्च गोमयेऽपि गते ।
शाद्वलगे वस्त्राप्तिः शकटस्थे देशविभ्रंशः ॥

अशुभलक्षणमाह ।

"कृष्णो गलेऽस्य विन्दुः
सितकरटान्तः स रिक्तकृद्रिक्तः ।
पीतो गोपीत इति
क्लेशकरः खञ्जनो दृष्टः ॥"

करटः कपोलः। "सितकरटान्त" इति करटयोः कपोलयोरन्तौ सितौ यस्य ।

शुभेऽपि देशकाले क्रियाप्राप्त्या अशुभतां याति* ।

तदाह ।

"गृहपटलेऽर्थभ्रंशः
श्वभ्रे बन्धोऽशुचौ भवति रोगः ।
पृष्ठे त्वजाविकानां
प्रियसङ्गममावहत्याशु ॥"

पृष्ठे त्वजाविकानामिति यद्यपि अशुभदेशप्रकरणे पठितम् तथापि सामर्थ्यात् शुभदेशप्रकरणेऽपि द्रष्टव्यम्। उत्तरत्रापि यदशुभदेशकालक्रियापेक्षं शुभकारि कथितम् तत्सामर्थ्यात् शुभकरं द्रष्टव्यम् ।

---

* यदि इति ख-पुस्तके पाठः ।

"महिषोष्ट्रगर्दभास्थि*-
श्मशानगृहकोण†शर्करादिस्थः।
प्राकारभस्मकेशेषु
चाशुभो मरणरुग्भयदः‡॥
पक्षौ धुन्वन्नशुभः
शुभः पिबन् वारिवाहस्थः।
सूर्य्योदये प्रशस्तो
नेष्टफलः खञ्जनोऽस्तमये॥"

वारिवाहः कुम्भादिः।

"मृतविकलभिन्नरोगितः
स्वतनुसमानफलप्रदः खगः।
धनकृदभिनिलीयमानको
वियति च बन्धुसमागमप्रदः॥"

"भिन्न" इति सूच्यादिविद्धः। "अभिनिलीयमानः" आकाशाद्भूमौ पतन्नित्यर्थः। शुभाशुभफलञ्च वत्सरपर्य्यन्तं भवति।

तथा।

अब्जेषु गोषु गजवाजिमहोरगेषु
वासुप्रदः कुशलदः शुचिशाद्वलेषु।

---

* गर्द्दभादि इति ख-पुस्तके पाठः।

† गृहकेश इति ख-पुस्तके पाठः।

‡ मरणरुगुदय इति ख-पुस्तके पाठः।

भस्मास्थिकाष्ठतुषकेशतृणेषु दृष्टो
दुःखं करोति खलु खञ्जनकोऽब्दमेकम् ॥

अशुभदर्शने प्रतिक्रिया ।

अशुभमपि विलोक्य खञ्जनं
द्विजगुरुसाधुसुरार्च्चने रतः ।
न नृपतिरशुभं समाप्नुयात्
न यदि दिनानि सप्त मांसभुक् ॥

षोड़श वचनानि वराहस्यैव ।

इति दुर्गोत्सवः ।

अथ मन्वन्तरा ।

अथ मत्स्यपुराणम् ।

"तथा मन्वन्तरादौ च श्राद्धं देयं विजानता ।
अश्वयुक्शुक्लनवमी द्वादशी कार्त्तिके तथा ॥
तृतीया चैव माघस्य तथा भाद्रपदस्य च ।
फाल्गुनस्याप्यमावास्या पौषस्यैकादशी सिता ॥
आषाढ़स्यापि दशमी माघमासस्य सप्तमी ।
श्रावणे चाष्टमी कृष्णा तथाषाढ़े च पूर्णिमा ॥
कार्त्तिकी फाल्गुनी चैत्री ज्यैष्ठी पञ्चदशी तथा ।
मन्वन्तरादयस्त्वेता दत्तस्याक्षयकारिकाः ॥"

अमावास्याष्टमीव्यतिरिक्ता द्वादश तिथयः शुक्लाः । अनेकधा

तथापदोच्चारणस्य शुक्लपक्षसम्बन्धार्थत्वात् उपक्रमोपसंहारयोश्च शुक्लकीर्त्तनात् । अमावस्यायामयोग्यत्वात् अष्टम्यां कृष्णेत्यभिधानात् न शुक्लान्वयः । इतरास्तु शुक्लाएव ग्राह्याः । कार्त्तिकीफाल्गुनीत्यत्र सिता पञ्चदशीति न पदद्वयस्यानुषङ्गः । पूर्व्वस्थितञ्च पूर्णिमापदमेवानुषज्यते । एवं बहूनां शुक्लात्वात् सन्दिग्धतिथिष्वपि शुक्लात्वग्रहणम् ।

इति मन्वन्तरादितिथयः ।

## अथ ग्रहणकालनिरूपणम् ।

तत्र मार्कण्डेयः ।

चन्द्रे वा यदि वा सूर्य्ये दृष्टे राहौ महाग्रहे ।
अक्षयं कथितं पुण्यं तथाप्यर्के विशेषतः ॥

व्यासः ।

सर्व्वं भूमिसमं दानं सर्व्वे व्याससमा द्विजाः ।
सर्व्वं गङ्गासमं तोयं राहुग्रस्ते दिवाकरे ॥
इन्दोर्लक्षगुणं प्रोक्तं रवेर्दशगुणं स्मृतम् ।
गङ्गातोये तु सम्प्राप्ते इन्दोः कोटी रवेर्दश ॥

चन्द्रग्रहाद्दशगुणं पुण्यं सूर्य्यग्रहणे स्नानदानादिषु इत्यनेन दर्शितम् ।

तत्रैव फलं विशिनष्टि ।

गवां कोटिसहस्रस्य सम्यग्दत्तस्य यत्फलम् ।

तत्फलं जाह्नवीतोये राहुग्रस्ते निशाकरे ॥
दिवाकरे पुनस्तद्दद्दशसङ्ख्यमुदाहृतम् ।

तथा महीगतसकलतीर्थपर्य्यटनानर्थक्यप्रतिपादनद्वारेण गङ्गा-स्नानादेव तत्तत्तीर्थस्नानफलमाह ।

चन्द्रसूर्य्यग्रहे चैव योऽवगाहेत जाह्नवीम् ।
स स्नातः सर्व्वतीर्थेषु किमर्थमटते महीम् ॥

तत्र मार्कण्डेयेन "उभयत्राप्यक्षयं पुण्य"मित्युक्ते "तत्राप्यर्के विशेषतः" इति विरुद्धम् । न ह्यक्षये फले विशेषः सम्भवति । तथा गवां दशकोटिसहस्रदानस्य यत्फलं तदेव सूर्य्यग्रहणे गङ्गास्नानमात्रादेव चेत् तदा कतिपयगोसहस्रदानमात्रापनेयानां पञ्चमहापातकानामपि क्षीणत्वात् प्रायश्चित्ताचरणम् स्नानानन्तरमेव व्यवहार्य्यता च स्यात् । तथा तावद्गोदानापनेयपापस्य सद्भावेऽक्षयफलस्याधिकारो वाच्यः तावत्यां पापसत्तायान्तु प्रमाणाभावात् कथ तदर्थिनामधिकारः तस्य च पापक्षय एव फलमात्रम् । ततश्च वचनानामतिशयपरत्वम् । चन्द्रग्रहाच्च सूर्य्यग्रहस्य दशगुणपुण्यातिशयः । गङ्गातोये च तदपि शतगुणमित्यादि ।

तथाऽयमपरोऽतिशयः ।

"सूर्य्यग्रहः सूर्य्यवारे यदा स्यात्पाण्डुनन्दन ।
चूड़ामणिः समाख्यातः सोमे सोमग्रहस्तथा ॥
अन्यदा तु यदा भानोरिन्दोर्वा ग्रहणं भवेत् ।
तत्फलं कोटिगुणितं ज्ञेयं चूड़ामणौ ग्रहे ॥"

तार्क्ष्यपुराणस्य। तथा स्मृतिसमुच्चये।

"सूर्य्यग्रहः सूर्य्यवारे सोमे सोमग्रहस्तथा।
चूड़ामणिरिति ख्यातस्तत्रानन्तफलं स्मृतम्॥
वारेष्वन्येषु यत्पुण्यं ग्रहणे चन्द्रसूर्य्ययोः।
तत्फलं कोटिगुणितं ग्रासे चूड़ामणौ स्मृतम्॥"

अनेन सूर्य्यग्रहणे चूड़ामणौ गङ्गास्नानादेव दशकोटिगुणितमिति कुतः पापसत्ता। इति चूड़ामणौ तु पापासम्भवेनैव नास्तीति स्यात्। तथा च तीर्थसम्बन्धादपि अतिशयः स्मर्य्यते।

तथा मत्स्यपुराणम्।

"गङ्गाकनखले पुण्ये प्रयागं पुष्करं तथा।
कुरुक्षेत्रं तथा पुण्यं राहुग्रस्ते दिवाकरे॥"

तथा च पठन्ति।

"कोटिजन्मकृतं पापं पुरुषोत्तमसन्निधौ।
कृत्वा सूर्य्यग्रहे स्नानं विमुच्यति महोदधौ॥
दशजन्मकृतं पापं स्नानान्नश्यति पुष्करे।
शतजन्मकृतं पापं गङ्गासागरसङ्गमे॥
जन्मनान्तु सहस्रेण यत्पापं समुपार्ज्जितम्।
तत्सर्व्वं सन्निहित्यायां राहुग्रस्ते दिवाकरे॥"

स्नानान्नश्यतीत्यनुपज्यते। तथा इतिकर्त्तव्यताधिक्यादपि पापक्षयस्यापि अतिशयः श्रूयते।

"यस्त्रिरात्रमुपोष्यैव ग्रहणे चन्द्रसूर्य्ययोः।
स्नात्वार्च्चयेत विधिवन्मोदते ब्रह्मणा सह॥

एकरात्रमुपोष्यैव स्नात्वा दत्त्वा च शक्तितः ।
कञ्चुकादिव सर्पस्य निष्कृतिः पापकोषतः ॥”

तथापस्तम्बः ।

अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः ।
कृतोपवासः शुध्येत्तु सर्व्वपापैः प्रमुच्यते ॥

अत्रापि कञ्चुकादिवेति सर्व्वैश्च पापैरिति विशेषाभावात् दिवारात्रानर्थक्यप्रसङ्गात् अतिशयमात्रपरं मन्तव्यम् । तथा मासविशेषेषु तीर्थविशेषसम्बन्धाद्ग्रहणस्य पुण्यत्वमुक्तम् ।

तथाहि देवीपुराणम् ।

“कार्त्तिके ग्रहणं पुण्यं गङ्गायमुनसङ्गमे ।
मार्गे तु ग्रहणं पुण्यं देविकायां महामुने ॥
पौषे तु नर्म्मदा पुण्या माघे सन्निहिता शुभा ।
फाल्गुने वरुणा पुण्या चैत्रे पुण्या सरस्वती ॥
वैशाखे तु महापुण्या चन्द्रभागा सरिद्वरा ।
ज्यैष्ठे तु कौषिकी पुण्या आषाढ़े तापिका नदी ॥
श्रावणे सिन्धुनामा च भाद्रे श्रेष्ठा च गण्डकी ।
आश्विने सरयूः श्रेष्ठा भूयः पुण्या तु नर्म्मदा ॥
गोदावरी महापुण्या चन्द्रे राहुसमन्विते ।
सूर्य्ये च शशिनि ग्रस्ते तमोरूपे महामते ॥
नर्म्मदातोयसंसर्गात् कृतकृत्यो भवेन्नरः ।
एवं गङ्गापि द्रष्टव्या तद्वदेव सरस्वती ॥”

नर्म्मदावत् गङ्गासरस्वत्योरपि तोयसम्पर्कात् कृतकृत्यो भवे-

दित्यर्थः । कृतकृत्यता च सकलपापक्षयात् । अपरं पापक्षयार्थं कृत्यं नास्तीत्यर्थः । एतदपि प्रचुरतरपापक्षयत्वेन वर्णनीयम् । अन्यथा सकलपापक्षयात् स्नानानन्तरमेव शरीरपातः स्यात् धर्म्माधर्म्मनिबन्धनत्वात् मानुषशरीरस्य धर्म्ममात्रफलोपभोगत्वाभावात् । ततश्च पापियत्तावधारणानुपपत्तेः पापक्षयकाम इत्येवं* वाक्यं कर्त्तव्यम् । कर्म्मस्वभावात् तदपनेयपापक्षयो भविष्यति ।

यथा अग्निहोत्रे दर्व्वीहोमरूपतया अल्पेतिकर्त्तव्यताके, दर्शपूर्णमासयोश्च प्रचुरेतिकर्त्तव्यताकयोः, ज्योतिष्टोमे चातिप्रचुरेतिकर्त्तव्यताके बहुधनव्ययप्रयासेऽपि, वेदे स्वर्गत्वार्थपदमविशिष्टं तदनुसारेण च अग्निहोत्रादिसङ्कल्पकरणं स्वर्गकामपदेनैव, स्वर्गे तु कर्म्मस्वभावाद्विशेषः । अविशेषे तु ज्योतिष्टोमाद्यानर्थक्यापत्तेः । अथवा एतत्कालीनगङ्गादिस्नानापनेयपापक्षयकाम इति वाच्यम् । यदि पुन"र्गवां कोटिसहस्रस्य" इत्याद्यर्थवादावगतविशिष्टार्थफलेन वाक्यरचनम्, तदा एकरात्रोपवासपूर्व्वं यथाशक्तिस्नानदानाद्यर्थमेव पापकोषविनिर्गमार्थवादावगतफलस्य रात्रिसत्रन्यायेन फलत्वाङ्गीकारात् अयत्नसिद्धः स्वर्गः स्यात् । पुण्यमात्रस्याविशिष्टत्वात् तस्य च सुखमात्रफलत्वात् उपभोगेन पुण्यस्यापि विनाशात् ।

त्रिरात्रपूर्व्वकस्य च ब्रह्मलोकप्राप्तिफलत्वादयत्नसिद्धो मोक्षः स्यादिति यथोक्तमेव रमणीयम् ।

---

* पापक्षयः स्यात् यद्येवं वाक्यमिति ख-पुस्तके पाठः ।

ग्रहणनिमित्तश्चोपवासः पुत्रवत एव गृहिणो निषिद्धः नान्येषाम् ।

यथा षट्त्रिंशन्मतम् ।

गृही त्रयोदशीश्राद्धं न तु कुर्व्वीत पुत्रवान् ।
उपवासञ्च संक्रान्तौ चन्द्रसूर्य्यग्रहे तथा ॥
त्रयोदश्यान्तु वै श्राद्धं न कुर्य्यात् पुत्रवान् गृही ।
नेष्यते चोपवासश्च कैश्चिदप्ययनद्वये ॥
मघासु कुर्व्वतः श्राद्धं ज्येष्ठपुत्रो विनश्यति ।
संक्रान्त्यामुपवासे च चन्द्रसूर्य्यग्रहे तथा ॥

चन्द्रसूर्य्यग्रहे श्राद्धं विहितम् ।

तदाह शातातपः ।

"सैंहिकेयो यदा भानुं ग्रसते पर्व्वसन्धिषु ।
गजच्छाया तु सा प्रोक्ता पितॄणां दत्तमक्षयम् ॥
व्यतीपातक्षणो यावान् चन्द्रसूर्य्यग्रहे क्षणः ।
गजच्छाया तु सा प्रोक्ता पितॄणां दत्तमक्षयम् ॥"

तथा ऋष्यशृङ्गः ।

"राहुग्रस्ते यदा सूर्य्ये यस्तु श्राद्धं प्रकल्पयेत् ।
तेन वै सकला पृथ्वी दत्ता विप्रस्य वै करे ॥"

तथा शातातपः ।

"सर्व्वस्वेनापि कर्त्तव्यं श्राद्धं वै राहुदर्शने ।
अकुर्व्वाणस्तत्र श्राद्धं पङ्के गौरिव सीदति ॥"

राहुदर्शन इत्युभयोर्ग्रहणम् ।

अतएव भविष्यपुराणे ।

"उपप्लवश्चन्द्रमसो रवेश्च
त्रिस्रोऽष्टकाश्चाप्ययनद्वयञ्च ।
पानीयमप्यत्र तिलैर्विमिश्रं
दद्यात्पितृभ्यः प्रयतो मनुष्यः ॥
श्राद्धं कृतं तेन समाः सहस्रं
रहस्यमेतत्पितरो वदन्ति ॥"

तथा याज्ञवल्क्यः ।

"व्यतीपातो गजच्छाया ग्रहणं चन्द्रसूर्य्ययोः ।
श्राद्धम्प्रति रुचिश्चैव श्राद्धकालाः प्रकीर्त्तिताः ॥"

यद्यपि मनुना ।

रात्रौ श्राद्धं न कुर्व्वीत राक्षसी सा हि कीर्त्तिता* ।
सन्ध्ययोरुभयोश्चैव सूर्य्ये चैवाचिरोदिते ॥

इति रात्रौ श्राद्धं निषिद्धम् । तथापि विष्णुना विशेषो दर्शितः ।

"सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम् ॥"

तथा यमः ।

"स्नानं दानं तपः श्राद्धमनन्तं राहुदर्शने ।
आसुरी रात्रिरन्यत्र तस्मात्तां परिवर्ज्जयेत् ॥"

सूतकमृतकाशौचानुवृत्तावपि चात्र स्नातव्यम् ।

यथा लिङ्गपुराणे ।

---

* कीर्त्तिता हि सा इति क-पुस्तके पाठः ।

"चन्द्रसूर्य्यग्रहे स्नायात्सूतके मृतके तथा ।
अस्नायी मृत्युमाप्नोति स्नायी पापं न विन्दति ॥
सूतके मृतके चैव न दोषो राहुदर्शने ।
तावदेव भवेच्छुद्धिर्यावन्मुक्तिर्न दृश्यते ॥"

सूतकादौ सकलकर्म्मणां निषेधादत्र स्नानमात्रोपदेशाच्छुद्ध्यभिधानस्य स्नानमात्रविषयत्वमेव। पूर्व्ववाक्ये चास्नानाद्दोषदर्शनात् तत्स्नानेन तत्पापमस्नानजं न प्राप्नोतीत्युक्तेऽपि आप्लवनमात्रस्यैव प्राप्तेरुत्तरवाक्ये विशुद्धिप्रतिपादनद्वारा साङ्गमदृष्टार्थं स्नानङ्कार्य्यमिति ज्ञाप्यते। न पुनरन्यदपि स्नानमात्रस्यैव पूर्व्वप्रक्रान्तत्वात्। सूतकादिशास्त्रस्य सर्व्वगोचरबाधायोगात्। ग्रहणञ्च दृष्टमेव निमित्तम्। "दृष्टे राहौ महाग्रहे" इति वचनात्। दर्शनञ्चात्र नोपलम्भमात्रं किन्तु चाक्षुषमपि।

ननु ग्रहणमात्रमेव निमित्तं दर्शनन्त्वर्थप्राप्तम्। अनवगते निमित्ते नैमित्तिकानुष्ठानानुपपत्तेः। अतो मेघाक्रान्ततया अनुपलब्धस्यापि निमित्तत्वमेवेति दीक्षितमतम्। तदयुक्तम्। सत्तामात्रेण निमित्तत्वे दिवा चन्द्रग्रहणस्य रात्रौ सूर्य्यग्रहणस्य निमित्तत्वापत्तेः अवश्यं विशेषणीयत्वात्।

अथोच्यते।

"रात्रौ सूर्य्यग्रहश्चन्द्रग्रहो यदि दिवा भवेत्।
नादेश्यं तु द्वयं श्राद्धे यच्च सूक्ष्मतमं भवेत् ॥"

इति वचनेन दिवासम्बन्धिनश्चन्द्रग्रहणस्य रात्रिसम्बन्धिनः सूर्य्यग्रहणस्य निमित्ततानिषेधात्। सूर्य्यस्य दिवा रात्रौ चन्द्रस्य

यदि ग्रहणं तदेव निमित्तमिति। तदपि तथाविधस्यैव सूक्ष्मतमस्य निमित्तत्वात् तस्याप्यनिर्दिश्यमानत्वात् अभिन्नं निमित्तमिति ।

एवं तर्हि रात्रिसूर्य्यग्रह-दिवासोमग्रह-व्यतिरिक्तसूक्ष्मग्रहणं तन्निमित्तमित्यभिधानात् त्रितयपर्य्युदासार्थं श्रुतित्रयं कल्पनीयम् । तदरं "दृष्टे रात्रौ महाग्रहे" इत्येकमेव विशेषणमस्तु लाघवात् ।

दर्शनं चक्षुर्मूलज्ञानं, तच्च स्वयमेव चक्षुषोपलब्धम् अन्येन च प्रत्ययितेन चक्षुषा उपलभ्य अभिहितमपि द्वयमपि चक्षुर्मूलम् । एतदुक्तं भवति गणितसंवादि*प्रमाणदृष्टमित्यर्थः । तावदवश्यं चक्षुर्ग्रहणयोग्यतया विवेचनीयं सूक्ष्मतमपरिमाणस्यानभिधानात् । दिवाचन्द्र-निशासूर्य्यग्रहयोरपि चक्षुर्ग्रहणयोग्यत्वाभावात् । त्रितयसाधारणमेव चक्षुर्ग्रहणयोग्यत्वं राहुग्रहणस्य विशेषणमस्तु । ततश्च मेघाक्रान्ततया अदृश्यमानस्यापि योग्यत्वसम्भवात् निमित्तत्वमव्याहतमिति ।

नैतत् सूर्य्याचन्द्रमसोर्हि दर्शनयोग्यतया राहुग्रहणस्यापि योग्यता न स्वतो नित्यमयोग्यत्वात् । न च रात्रौ सूर्य्यस्य दिवा चन्द्रस्य दर्शनयोग्यत्वम् । न हि विदूरगतस्य पुरुषस्य कतिपयकालीनादर्शनात् तस्यायोग्यतैव भवति । देशान्तरे तदानीन्तनस्य दर्शनान्नायोग्यत्वमिति चेत् सूर्य्याचन्द्रमसोरा-

* गणितसम्वादीति क-पुस्तके पाठः ।

षाढ़ादिष्वस्तमितयोर्मेघाक्रान्तयोरिव "चतुर्द्दिनावशिष्टाहोरात्रा-नुपलब्धौ" (?) अयोग्यताधिगमः।* तथा च पञ्चम्यादिकाले-ऽपि दर्शादिकालोपसंहारसामर्थ्यमस्त्येव। किन्तु तदानीं वि-पर्य्यस्तफलत्वाच्छक्तेः फलसम्भावनं कुर्व्वन्नधिकारिहेतुत्वादनधि-कारः। तदानीमपि अनधिकारकालविधेरनर्थकत्वाद्वाऽनधि-कार इत्युक्तं कालशौचे। अतएव चक्षुषापि न तद्ग्रहणयोग्यता-विनाशः। तथाविधविपर्य्यस्तफलं यच्चक्षुर्ग्रहणयोग्यत्वं तद्विशिष्टो राहुग्रहो निमित्तम्। दिवाचन्द्रग्रह-रात्रिसूर्य्यग्रहयोः सूक्ष्मस्य च योग्यत्वं विपर्य्यस्तफलं न निमित्तम्। मेघाक्रान्तस्य तु न विपर्य्यस्तं दर्शनमिति तत्र विशेषणपरम्परासिद्धार्थं बहुपदव-च्छ्रुतिकल्पनापत्तेः†। अविप्रतिपन्नचाक्षुषमेव ग्रहणम्। राहु-ग्रहविशेषणभावकल्पना न कृता स्यात्‡। दृष्टे राहाविति दर्शनस्यैव ग्रहणविशेषणत्वश्रुतेश्च। तथा सत्यनन्धादीनाम् अधि-कारो न स्यादिति चेन्न प्रयोजनमात्रत्वादस्य। दर्शनपदन्तु अधि-कारिविशेषणमेव। साक्षात्पारम्पर्य्यसाधारणचक्षुर्मूलगमितसम्ब-

---

* सूर्य्याचन्द्रमसोरपि राढ़ाद्यस्तमितयोर्मेघाक्रान्तयोरिव देशान्तरे दृश्यमानत्वा-विशेषात्पुनरुदयानन्तरञ्च तत्रापि दृश्यमानत्वात्। तथा चागस्त्यदर्शनं राढ़ादिषु सप्त-दिनावशिष्टे सौरभाद्रे उज्जयिन्यादिषु च चतुर्द्दिनैरपि भानोरहोरात्रानुपलम्भान्न योग्यता-विनिर्गमः। इति पाठः क-पुस्तके तथा च पञ्चम्यादीत्यादितः प्राक् दृश्यते।

† बहुतरश्रुतिकल्पनापत्तेरिति क-पुस्तके पाठः।

‡ चाक्षुषमेव ग्रहणं राहुग्रहणमस्तु विशेषणभावकल्पनाऽधिकं स्यात्। इति क-पुस्तके पाठः।

न्यादिज्ञानमस्तु । न तु श्रूयमाणस्य दर्शनस्य अन्यथाकरणे प्रमाणमस्ति । किञ्चास्मद्विमृष्ट एवार्थः स्पष्टीकृतो वैवस्वतेन ॥

तथा ।

"नाद्यः षोडश पूर्व्वेण संक्रान्तिस्तु परेण च ।
राहोर्दर्शनमात्रेण पुण्यकालः प्रकीर्त्तितः ॥"

राहुदर्शनमात्रादेव स्नानाद्यर्थं पुण्यकालतया ग्रहणं कीर्त्तितम् । न च गणितानुमानरूपदर्शनमात्रेण स्नानाद्याचरणे ग्रहणे तत्कृतं स्यात् । तस्य पूर्व्वमेव चिरसञ्जातत्वात् इदानीन्तनस्य स्मृतिविज्ञानरूपतया दर्शनपदानभिधेयत्वात् । तदभिप्रायेण राहोर्दर्शनमात्रेणेत्यनुपपत्तेः अन्यदेव चाक्षुषं चक्षुर्मूलाप्तवाक्यादिप्रभवं वा ज्ञानं दर्शनमात्रपदेनोपात्तम् । तेन तस्मिन् जातमात्रे स्नानादिकं कुर्य्यादिति वाक्यार्थे सति मेघाक्रान्ते कर्म्माचरणं सुदूरनिरस्तम् ।

"राहोश्च दर्शनं यावद्" इति तृतीयपादमस्य केचित्पठन्ति । तथा सुव्यक्तम् ।

तथा विष्णुः ।

"सन्ध्यारात्र्योर्न कर्त्तव्यं श्राद्धं खलु विचक्षणैः ।
तयोरपि च कर्त्तव्यं यदि स्याद्राहुदर्शनम् ॥
राहुदर्शनदत्तं हि श्राद्धमाचन्द्रतारकम् ।
गुणवत्सर्व्वकालीयं पितॄणामुपतिष्ठते ॥"

एतदपि यदिपदेन तत्कालीनमागन्तुकं विज्ञानं दर्शयति । न तु पूर्व्वजातं गणितविज्ञानम् । यथोक्तं दीक्षितेन ।

"नैक्षेतोद्यन्तमादित्यं नास्तं यान्तं कथञ्चन ।
नोपप्लुतं न वारिस्थं न मध्यं नभसो गतम् ॥"

तदीक्षणस्य निषेधात्कथं दृष्टरविग्रहणस्य स्नानोपदेशः । यथा क्षत्रियवैश्ययोरार्त्विज्यनिषेधान्न तद्दृत्विक्कर्त्तव्यत्वं कर्म्मण इत्युक्तं तद्वदेव कृतशास्त्रातिक्रमस्य विधिरिति नावकल्प्येत अन्यथैव वचनोपपत्तेरित्यन्तम् ।

तदपि न सम्भवति* । तत्र हि याजनाध्यापनप्रतिग्रहै-र्ब्राह्मणो धनमर्ज्जयेदिति विधिना ब्राह्मणस्य पारलौकिकरूप-र्त्विगुत्पत्तिर्प्रतिपादनात् अन्यथा याजनविधानानुपपत्तेः क्षत्रियवैश्ययोस्तु तदुत्पत्तौ प्रमाणाभावात् शास्त्रप्रसङ्गेन ब्राह्म-णस्यैवार्त्विज्यमित्यवधार्य्यते । तद्वदेव यत्राप्यनवलोकितराहु†-ग्रहणनरविषयकत्वं शास्त्रस्य, अर्थदृष्टरविग्रहणस्य‡ अनधिकार एव स्यात् । अनधिगतकर्त्तृकञ्च कृतमप्यलं शूद्रेणेव ज्योतिष्टोम इति तस्य स्नानादिकमफलं स्यात् इति सकलमहाजनविरोधः । ततश्च यथा यत्र क्रतौ अनृतवदनप्रतिषेधोऽनङ्गं तत्पुरुषार्थमनृत-वदनप्रतिषेधमतिक्रमतोऽपि तत्क्रतुसिद्धेरवैगुण्यम् । न पुनः पुरुषार्थनिषेधेन अनतिक्रान्तपुरुषार्थनिषेध-पुरुषपरत्वमधिकार-श्रुतेः भवति तद्वदेव अत्रापि पुरुषार्थदर्शननिषेधेनानधिकारि-विषयत्वं शास्त्रस्य । अतएव योगासक्तस्तु मध्यस्थः इत्यादि ।

---

* अनपनोदितराहु इति क-पुस्तके पाठः ।

† "तदप्ययुक्त"मिति क-पुस्तके पाठः ।

‡ भद्दृष्टरविग्रहणस्येति क-पुस्तके पाठः ।

किञ्च "दृष्टे राहौ महाग्रहे" "अक्षयं कथितं पुण्यम्" इत्यादि वचनेन न्यायगणितसंवादिप्रमाणविषयतां गतस्यैव ग्रहणकालस्य अङ्गत्वादङ्गे च विधितः प्रयुक्तेर्दर्शनमपि विधिप्रयुक्तम्। तेन संवादे जाते यदपरं प्राप्तं दर्शनं तदेव नोपप्लुतमिति निषिद्धमित्यदोषः।

तस्माद्गणितमात्रावगतमेघाक्रान्तेऽपि चन्द्रसूर्य्यग्रहणे स्नानादिकमाचरन्तः स्वतन्त्राः प्रमाणशरणैरवधीरणीया एव। सदाचारोपलम्भाच्च सूतकमपि राहुदर्शनादेव भवति।

षट्त्रिंशन्मतम्।

"सर्व्वेषामेव वर्णानां सूतकं राहुदर्शने।
स्नात्वा कर्म्माणि कुर्व्वीत शृतमन्नं विवर्ज्जयेत्॥"

राहुदर्शने गणितेतरप्रमाणावगतराहुसंयोगावच्छिन्नकाले सूतकं, न पूर्व्वं नापि परत इत्यर्थः। तत्संयोगस्य मुक्त्यवधिरिति राहुणा विभागे जाते नास्ति सूतकं वचनाभावात्।

ननु ग्रहणकाले सूतकिनः स्नानदानादिषु कथमधिकार इत्याह। ननु* व्यपगतमेवाशौचं अशुचेरनधिकारादपगते चाशौचे पुनरनुवृत्तौ न प्रमाणं पश्यामः।

यथा।

"कर्त्तुस्तात्कालिकी शुद्धिरशुद्धः पुनरेव सः।"

यथा चाग्निहोत्रार्थं स्नानोपस्पर्शनात्तत्कालं शुचिरित्यादि तथात्र नास्ति इति। सत्यमुक्तमेवैतत्। किन्त्वत्रापि षट्त्रिंशन्मतवचनं शृणु।

---

* तदा इति ख-पुस्तके पाठः।

"स्मार्त्तकर्म्मपरित्यागो राहोरन्यत्र सूतके ।
श्रौते कर्म्मणि तत्कालं स्नातः शुद्धिमवाप्नुयात् ॥"

अस्यार्थः । राहुदर्शनसूतकादन्यत्र सूतकान्तरे स्मार्त्तस्य कर्म्मणोऽननुष्ठानं राहुदर्शने तु स्मार्त्तस्याप्यनुष्ठानम् इति ब्रुवाणः सूतकं विमुक्तिपर्य्यन्तमनुवर्त्तते इति ज्ञापयति । अन्यथा स्नानमात्रापनीतेऽशौचे स्मार्त्तकर्म्मणां प्रतिप्रसवानुपपत्तेः । तस्मान्मुक्तिसमाप्तिपर्य्यन्तं सूतकम् ।

तदाह ब्रह्माण्डपुराणम् ।

"ग्रहणे शावमाशौचं विमुक्तौ सौतिकं स्मृतम् ।
तयोः सम्पत्तिमात्रेण उपस्पृश्य क्रियाक्रमः ॥"

ग्रहणकाले सूर्य्याचन्द्रमसोर्विपत्प्रवेशाच्छावमाशौचं विमुक्तौ तु पुनर्ज्जन्मावाप्तेः सूतकाशौचम् । यदा च ग्रहणमुक्तं समाप्तिः तदा स्नात्वा सकलकर्म्माधिकारिता ।

यद्यपि ग्रहणकाले सकलादृष्टकर्म्मार्हता नापगता न च परस्परं स्पर्शनार्हतापि सपिण्डाशौचिनामिव सर्व्वेषामेव तद्रूपत्वाविशेषात् । तथापि "ग्रहणे शावमाशौचमित्यस्य च पाकस्पर्शाद्यनधिकार एव तन्निमित्तेतरकर्म्मानर्हतापि वा । मुक्तौ तु जातायां स्नातस्य तत्राप्यधिकारः । अतो ग्रस्तास्तमितेऽपि गणित*प्रमाणावगतायां मुक्तावनन्तरं स्नात्वा पाकादिस्पर्शाधिकारो दुर्निवारः ।

एवञ्च यल्लिङ्गपुराणवचनम् ।

---

* ग्रहणगणित इति ख-पुस्तके पाठः ।

"सूतके मृतके चैव सूतकं राहुदर्शने ।
तावदेव भवेत् तच्च* यावन्मुक्तिर्न दृश्यते ॥"

इति तन्मुक्तिमात्रपरं दर्शनमर्थसिद्धम् एव अनूद्यते । राहुसंयोगावच्छिन्नकाले सूतकमिति वचनात् तदुपगमे सूतकाभावोऽर्थसिद्ध एवेति । नात्रावध्यपेक्षा येन मुक्तेरवधित्वं विधीयते । यथाहि ग्रहणे सूतकमित्युक्ते पूर्व्वावध्यपेक्षा नास्ति तथैव परावध्यपेक्षापि । न च सूतकोपदेशवाक्यावगतावधिबाधेनापेक्षितस्य प्रमाणान्तरदर्शना†वधित्वं विधातुं युक्तम् तदपेक्षप्रवृत्तित्वात्‡ । न च वाच्यं यथा संवादिप्रमाणदर्शनं ग्रहणस्य विशेषणं तथा मुक्तेरपि तद्भविष्यति । यतो दिवा चन्द्रग्रहादौ निमित्तत्वनिषेधात् तत्र तथाङ्गीकारो, न चात्र तथास्तीति गणितावगतैव मुक्तिः सूतकस्यावधिः । अनुवादकत्वेनाप्युपपत्तौ न मूलश्रुतिकल्पनापि कृता भवेत् । एवञ्च यथा ग्रहणे राहुग्रस्ते दिवाकरे इति ज्ञानरहितमेवोपात्तमित्युक्तं तथा मुक्तावपि । तयोः सम्पत्तिमात्रेण इत्युक्तम् । तेनोभयत्रापि ज्ञानमर्थप्राप्तमित्युचितमुक्तम् । ततो "दृष्टे राहौ महाग्रहे" इत्यत्र दर्शनपदमर्थप्राप्तोऽनुवादो यावन्मुक्तिर्न दृश्यते इति तु दर्शनपदस्य नानुवादता इति पक्षग्रहमात्रेणाभिधानम् ।

किञ्च विवक्षामभिधाय पुनरपि दर्शनपदस्य योग्यतामात्र-

---

* भवेच्छुद्धिरिति क-पुस्तके पाठः ।

† प्रमाणान्तरदर्शनस्य इति क-पुस्तके पाठः ।

‡ तदपेक्षितप्रवृत्तत्वादिति क-पुस्तके पाठः ।

परत्वमेव स्वीकृतम्। अन्यथोदितस्यापि मेघाक्रान्तौ सूतका-भोजने स्याताम्।

किञ्च ग्रस्तास्तमिते चन्द्रमसि दिवा मुक्तौ जातायामपि प्रमाणान्तरग्रहणयोग्यैव चेन्मुक्तिः कार्य्याय प्रभवति तदा ग्रहण-निमित्तमपि स्नानदानादिकं कुतो न स्यात्। तथाविधमुक्त्य-वधित्वात् स्नानदानादेः। ग्रहणकाल एव तद्विधिरिति चेन्न। सूतकेऽप्यविशेषात्। यथा "दृष्टे राहौ महाग्रहे। अक्षयं कथितं पुण्यम्" इति स्नानदानादिकं तत्काले विहितं नावधिमपेक्षते अर्थसिद्धत्वात् तत्कालविगमस्यावधिः। तथा सूतकं राहुदर्शने इत्यनेन स्नानदानादिविहिते सूतकेऽपि न विशेषं पश्यामः। न च दिवारात्रसम्बन्धिनोश्चन्द्रसूर्य्ययोरनङ्गत्वान्न तत्र स्नानदानादि-क्रिया इति वाच्यम् यतो दिवानिषेधस्य प्रमाणान्तरावगतिमात्र-परत्वेन पूर्व्वमेव दर्शितत्वात्। अतएव सर्व्वथा संवादिरूपेण गणितावगतस्य सूर्य्यग्रहणस्य अस्तमनकाले प्रमाणान्तरावगते ग्रहणे स्नानदानादिकम् अस्तमितेऽपि सूर्य्ये क्रियते एव प्रमाणा-न्तरसंवादमात्रपरत्वात् दर्शनस्य जातत्वात्। न च वाच्यम्—

"त्रिदशाः स्पर्शसमये तृप्यन्ति पितरस्तथा।
मनुष्या मध्यकाले तु मोक्षकाले तु राक्षसाः॥"

अनेन मुक्तिकालस्य निन्दितत्वात् न तत्र क्रिया इति।

यतः।

"अयनादौ सदा देयं द्रव्यमिष्टं गृहे तु यत्।
षड़शीतिमुखे चैव विमोक्षे चन्द्रसूर्य्ययोः॥"

इति शातातपेन मुक्तिकाल एव दानस्य विहितत्वात् स्नानादि-ष्वपि तस्य निमित्तत्वं बोद्धव्यम् ।

अतएव स्मृतिसमुच्चये ।

"उपमर्द्दे लक्षगुणं ग्रहणे चन्द्रसूर्य्ययोः ।
पुण्यं कोटिगुणं मध्ये मुक्तिकाले त्वनन्तकम् ॥"

तस्मादकामिनापि इदमेव वाच्यं ग्रहणकालस्यैव कर्म्माङ्गत्वा-दिति । अत्रापि तत्कालस्यैव सूतककालत्वात् इति वयमपि ब्रूमहे । भोजननिषेधस्तु तदवधिकः ।

तथाहि मनुः ।

"चन्द्रसूर्य्यग्रहे नाद्यादद्यात्स्नानात्तु मुक्तयोः ।
अमुक्तयोरस्तङ्गतयोरद्याद्दृष्ट्वा परेऽहनि ॥"

तथा विष्णुः ।

"चन्द्रार्कोपरागे नाश्नीयात् अमुक्तयोरस्तङ्गतयोः स्नात्वा दृष्ट्वा परेऽहनि ।"

तथा शातातपः ।

"अहोरात्रन्तु नाश्नीयाच्चन्द्रसूर्य्यग्रहो यदा ।
मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा विधानतः ॥
सूर्य्याचन्द्रमसोर्लोकानक्षयान् याति मानवः ।
धौतपाप्मा विशुद्धात्मा मोदते तत्र देववत् ॥"

ननु विष्णुवाक्याद्ग्रहणएव भोजननिषेधोऽवगम्यते । न तु ग्रह-णात् पूर्व्वं न वा मुक्तेः परस्तादपि निषेधः । ग्रस्तास्तमितयोस्तु मुक्तयोरपि उदयपर्य्यन्तं, शातातपवचनेनाहोरात्रं नाश्नीयात् ।

"मुक्तिं दृष्ट्वा तु भुञ्जीते"ति परस्परविरोधव्यवस्था विष्णुधर्म्मोत्तर-वचनेन ।

"चन्द्रस्य यदि वा भानोर्यस्मिन्नहनि भार्गव ।
ग्रहणन्तु भवेत्तत्र तत्पूर्व्वां भोजनक्रियाम् ॥
नाचरेत्सग्रहे चैव तथैवास्तमुपागते ।
यावत्स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु ॥
मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा परेऽहनि ।"

तदेवं निषेधत्रयम् । तस्मिन् अहोरात्रग्रहणात् पूर्व्वं नाश्नीयात् ग्रहणकाले चेति निषेधद्वये नावधेरपेक्षा निषेधबलादेवावगतत्वात् "अद्यात् स्नात्वा तु मुक्तयो"रिति मुक्तयोः स्नायादिति विधीयते मुक्त्यवधित्वात् सूतकस्य । भोजनन्तु रागप्राप्तमनूद्यते । ग्रस्तास्तमितयोर्मुक्तयोरपि नाश्नीयादिति तृतीयनिषेधेऽवधेरनवगमात् तदपेक्षायाम् उदयं यावदिति अवधिपरत्वम् । यथा रथन्तरे प्रस्तूयमाने सम्मीलेत स्वष्टशं प्रतीक्षेत* इति स्वष्टकपदोच्चारणं सम्मीलनस्यावधिः । स्नानन्तु मुक्तौ जातायामेव, मुक्तयोः स्नानादिति विधेः । अतएव मनुना अद्यादृष्टे इति पठितम् न तु स्नात्वा इति । पूर्व्वार्द्धेनैव स्नानस्य विहितत्वादित्यभिप्रायः । तदुत्कर्षे तु मनुरपि स्नात्वा इति ब्रूयात् । तेन शातातपवचनेऽपि एवं योजना कार्य्या । यदा चन्द्रसूर्य्यग्रहो ग्रस्तास्तमितो भवति तदा तस्मिन्नहोरात्रे न भुञ्जीत । चन्द्रग्रहे तु विशेषो

* प्रतिवीक्षेत इति क-पुस्तके पाठः ।

गणितेन मुक्तिं दृष्ट्वा । दृष्टेरुपलब्धिमात्रवचनत्वात् निवृत्ते सूतके दिवा स्नात्वा उदिते चन्द्रे भुञ्जीत ।

"यावत्स्यान्नोदयस्तस्य नाश्नीयात्तावदेव तु ।
मुक्तिं दृष्ट्वा तु भुञ्जीत स्नानं कृत्वा परेऽहनि ॥"

इति विष्णुधर्म्मोत्तरैकवाक्यत्वात् ।

अत्र हि "यावत्स्यान्नोदय" इत्यनेन उदयस्य भोजनावधित्वेन विधानादेव उदयानन्तरं रागप्राप्तं भोजनं तावन्न विधेयम् । ततश्च परेऽहनि स्नात्वा इति दिवास्नानं विधत्ते न त्वस्याहोरात्र-इत्यर्थः तल्लक्षणाकारणाभावात् । मुक्तिं दृष्ट्वेत्यपि मुख्यार्थमेव । गणितेन मुक्तिं दृष्ट्वा परेऽहनि स्नायादित्यर्थः । अतः सर्व्वमेव मुख्यार्थम् । अन्यथा मुक्तिं दृष्ट्वेत्युदयलक्षणा । अहनीत्यहोरात्रलक्षणा इति । विष्णुवचने "स्नात्वा दृष्ट्वा परेऽहनि" इति अयमेवार्थः । दृष्ट्वा स्नात्वा परेऽहनि इति प्रागेव सुव्यक्तएवायमर्थः । "दृष्ट्वा" "अहनि" इत्यनयोर्मुख्यार्थानुरोधात् गणितेन दिवा दृष्ट्वा स्नायादित्यर्थः ।

यथा भोजदेवपठितं वचनम् ।

"नाद्यात्सूर्य्यग्रहात्पूर्व्वमह्नि सायं शशिग्रहात् ।
ग्रहकाले च नाश्नीयात्स्नात्वाश्नीयात्तु मुक्तयोः ॥
मुक्ते शशिनि भुञ्जीत यदि न स्यान्महानिशा ।
स्नात्वा दृष्ट्वा परेऽह्न्याद्याद्ग्रस्तास्तमितयोस्तयोः ॥"

अत्रापि मुक्तिमात्रमेव निर्व्विशेषणं स्नाननिमित्ततयोपात्तं स्नानत्वर्थसिद्धम् । गणितमूलमपि भवत्येव । तेन मुक्तिमात्रान-

न्तरमेव स्नानं प्रतीयते। अनेन सूर्य्यग्रहात्पूर्व्वमह्नि नाश्नीयात् रात्रौ च चन्द्रग्रहणात्पूर्व्वमित्युक्तम्। तेन चन्द्रग्रहणात्पूर्व्वमह्नि भोजने दोषो नास्ति। तत्पूर्व्वं नाचरेत् भोजनक्रियाम् इति यथोक्तविषयमेव भवति। न स्नानमाचरेद्भुक्त्वा इति विरोधो नैमित्तिकत्वेन पुत्त्रजन्मादिनिमित्तकश्राद्धादिविधाविवात्रापि न भुक्तेति निषेधस्याप्रवृत्तेः।

त्रिरात्रैकरात्रादौ यथा फलाधिक्यं तथा कृतभोजनादकृतभोजनस्य, न तु सोमग्रहे दिवाभुक्तवतः स्नानदानादावनधिकार एव भवति। ननु शातातपेन अहोरात्राभोजनविधानात्* कथं चन्द्रग्रहणे दिवाभोजनमनिषिद्धमुच्यते। ग्रस्तास्तमितविषयोऽहोरात्रनिषेधस्य अस्य त्वतद्विषयत्वात्। अत्रापि परेऽहनि स्नात्वेति विधिः।

यत्तु भोजननिषेधेन सह सूतकस्य समानावधित्वं ब्रूते तस्य कोऽभिप्रायः? किं ग्रहणात् पूर्व्वं निषेधेन ग्रहणकालीनेन वा ग्रस्तास्तमितमुक्तिपरभूतेन वा? न तावत्पूर्व्वं निषेधेन सूर्य्योदयादिग्रहणोपक्रमावधित्वात् तस्य सूतकमपि तथा स्यादिति ग्रहणकाल एव सूतकं न स्यात्, अथ ग्रहणकालीनेन तदा तस्य मुक्त्यवधित्वात् कथं ततोऽपि परस्तात् सूतकमुच्यते। तस्य निषेधस्य ग्रहणात् ग्रहणात्परस्ताच्चाप्रवृत्तेः नापि मुक्तिपरभूतेन, तस्य मुक्तिसमाप्तेः प्रभृति दिनान्तरीयतदुदयावधित्वात् अस्यापि

---

* अहोरात्रभोजननिषेधादिति ख-पुस्तके पाठः।

तथात्वात् ग्रहणकाले सूतकाभावप्रसक्तिः । तथा ग्रस्तास्तमित-मन्तरेणापि दिनान्तरीयोदयान्तसूतकप्रसक्तिः । तस्मिन् दिने मुक्तस्याप्यनुदितत्वात् । समानयोगक्षेमस्य च भोजननिषेधस्य ग्रस्तास्तमितेऽप्रवृत्तत्वात् सूतकशास्त्रमपि न प्रवर्त्तते ।

यदप्युक्तं दीक्षितेन "यद्विध एव* ग्रहो रात्रिगामी निमित्तं तद्विध एव तदपगमोऽप्यवधिरिति धर्म्मकल्पनामात्रेणोपपत्तौ न दर्शनस्यावधित्वकल्पना उपपत्तिमर्हतीति" ।

तदप्ययुक्तम् । चन्द्रग्रहे रात्रिगामित्वस्य सूर्य्यग्रहे दिवा-गामित्वस्य पूर्व्वमप्रयोजकत्वव्युत्पादनात् गणितसंवादिविषयत्वं तु प्रयोजकं तद्द्वयद्व्यपगमस्यावधिभूतस्य तथात्वं तदा मेघाक्रान्ते कथं भुञ्जीरन् संवादिप्रमाणानुदयात् ।

किञ्च राहूणां (?) क्रियावचनत्वात् सूर्य्येन्दुसंयोगफलिका राहोः स्पन्दक्रिया ग्रहणमुच्यते विभागफलिका च मुक्तिः । सैव चापगमः तत्र ग्रस्तास्तमितचन्द्रमसि चन्द्रविभागपूर्व्वकोत्तरदेश-संयोगजनिकाया दिवाजातायास्तदैव विनाशान्न तस्य रजनी-पर्य्यन्तमनुवृत्तिः । एवं सूर्य्यग्रहणेऽपि रजनीगताया न दिन-पर्य्यन्तमनुवृत्तिः । ग्रहणस्य रात्रिगामिनो निमित्तत्वे मुक्तेरपि तत्कालीनाया अवधित्वे जगद्विपद्येत । तत्कालीनाया मुक्ते-रग्रस्तास्तमितग्रहणान्तरमन्तरेणासम्भवात् ।

किञ्च तद्विधस्याप्युपगमस्य कुत्रावधित्वं स्नानदानादौ वा

---

* यद्विषय एव इति ख-पुस्तके पाठः ।

सूतके वा भोजननिषेधे वा। तत्र पूर्व्वविकल्पद्वयेऽर्थसिद्धत्वात् तदपगमविधिः न तत्र विशेषणविवक्षा तस्यापि अर्थप्राप्तत्वात्। न च भोजननिषेधस्यापि तद्विधोपगमोऽवधिः। तृतीयस्य भोजननिषेधस्य ग्रस्तास्तमितनिमित्तस्य मुक्तौ सत्यां प्रवृत्तेर्न तस्य मुक्तिरेव परोऽवधिः सम्भवति येन तस्य विशेषणमालोच्यते। किन्तूदयान्तस्यावधिः "यावत्स्यान्नोदयस्तस्य" इत्यादिवचनात्।

दर्शनन्त्वर्थसिद्धत्वान्न श्रुतिविषयः तात्पर्य्यकल्पनागौरवात्। तदेवं स्थिते तदुदयस्य भोजनावधित्वं प्रसाध्य उक्तं दीक्षितेन "स चेदस्तु निमित्तं तदेव विशुद्धिरपि तावदेव स्यात् इति विना दर्शनान्न पाकस्पर्श" इत्यन्तम्।

तदपि निरस्तम्। यदि सूतकस्यापि उदयोऽपरोऽवधिः स्यात् तदा मुक्ते दृष्टेऽपि दिनान्तरीयोदयावधिसूतकं स्यात् पूर्व्वदिने उदयान्तराभावात्।

न तु क्वचिन्मुक्त्यवधित्वं क्वचिच्च उदयावधित्वम् इति सम्भवति सूतकशास्त्रस्य एकत्वात् भिन्नावधिसूतकपरत्वानुपपत्तेः। अथोपलम्भयोग्यमुक्त्यवधित्वं तथाच ग्रस्तास्तमिते उदितस्य उपलम्भयोग्या मुक्तिः अन्यत्र तु मुक्तिमात्रस्यैव इत्येक एवावधिः। तन्न मुक्त्यादेरुपलम्भयोग्यावधित्वेनाश्रवणात्।

"मुक्ते शशिनि भुञ्जीत"

"यावत्स्यान्नोदयस्तस्य"

इत्यादिषु मुक्तेस्तदुपलम्भस्य वा निमित्तत्वेनानवगमात्। कथमश्रुतयोग्यतया अवधित्वम् अश्रुतकल्पनापत्तेः। यदेव च

ग्रहणस्य उपलम्भयोग्यस्य स्नानादिनिमित्तत्वे दूषणमुक्तं तदेव सकलमत्रापि योजनीयम् ।

तस्माद्ग्रहणकालीनस्नानदानादिविधानात् तत्कालीनभोजन-निषेधेन सूतकस्य समानपूर्व्वापरावधित्वम् । न तु तृतीयेन मुक्त्यनुक्रमदिनान्तरोदयपर्य्यन्तभोजननिषेधेन इति सिद्धम् ।

तेनायमर्थः । सूर्य्यग्रहणात्पूर्व्वं दिवा न भोक्तव्यम् ग्रहणकाले च मुक्तिपर्य्यन्तं ग्रस्तास्तमिते च उदयं यावत् । चन्द्रग्रहे तु दिवाभोजनमनिषिद्धम् । न च तत्र दिवाभोजनादनधिकारः । अतोऽभोजने फलभूयस्त्वम् । सूतकन्तु ग्रहणोपक्रममुक्तिपर्य्यन्त-मुभयत्र । तत्कालीनस्नानदानाभोजनसूतके च गणितसंवादि-प्रमाणावगतं निमित्तम् । मुक्तिस्तु सर्व्वत्र स्वरूपेण निमित्तम् ।

ग्रस्तास्तमिते चन्द्रे गणितेन मुक्ताववगतायां सूतके निवृत्ते दिवास्नानदानपाकस्पर्शादिकं कार्य्यम् । भोजनमात्रन्तूदये वृत्ते इति स्थितम् ।

धवलेनाप्युक्तम् "ग्रस्तास्तमिते चन्द्रे स्नानदानादिकं कार्य्यम् । भोजनमात्रमेव परमुदिते चन्द्रे" । इति ।

आह चात्रिः ।

"यस्य स्वजन्मनक्षत्रे ग्रस्येते शशिभास्करौ ।
व्याधिं प्रवासं मृत्युञ्च राज्ञश्चैव महद्भयम् ॥
तस्माद्दानञ्च दातव्यं देवार्च्चनजपस्तथा ।
कुर्य्यात्तस्मिन्दिने युक्तस्तस्य शान्तिर्भविष्यति ॥"

बहुविधविवादतिमिर-
ग्रस्तं ग्रहणं रवेः शशाङ्कस्य ।
तद्धर्म्मरत्नदीपा-
ऽऽलोकात् सकलं विलोकयत ॥

इति पारिभद्रीयमहामहोपाध्यायजीमूतवाहनकृतौ
धर्म्मरत्ने कालविवेकः समाप्तः ।

समाप्तञ्चेदं भूरत्ने धर्म्मरत्नम् ।
इति शम् ।



कालविवेकधृतप्रमाणवचनानाम्

# अकारादिवर्णक्रमेण सूची।

## अ


अगतेऽपि रवौ कन्यां ३१३।४
अग्निमिष्ट्वा च हुत्वा च४०७।१
अग्न्याधेयं प्रतिष्ठाञ्च १२८।१६
अङ्गारकचतुर्थीन्तु ४१२।१३
अच्छिन्नरज्जुं दृढ़काष्ठमाढ़कं २८८।१८
अतः प्रभृति सर्व्वेषां २७६।४
अतिक्रामति यो मोहात् ४२६।४
अतो यमद्वितीयाया ४०५।१४
अथ प्रौष्ठपदे मासि २७६।२
अथ मधुसुरभिफलकुसुम- ५१७।१८
अथ वानप्रस्थद्वैविध्यं ४२७।१६
अथाश्वयुजके मासि ५१२।१५
अदत्तादाननिरतः ४०२।१३
अदत्तानामुपादानं ४०२।४
अधिमासनिपाते तु १९५।१२, २२१।९, २२३।८
अधिमासेऽपि पतिते १९५।१
अधिमासो न कर्त्तव्यः १४२।२
अध्यायानामुपाकर्म्म २७५।२
अध्येता नरकं याति ३४२।२०
अनादिदेवतां दृष्ट्वा १३२।६
अनिष्टे त्रिविधोत्पाते २९८।१०
अन्तकस्यादिमध्यान्त२९७।१०
अन्तपादो दिवाभागे५१४।११
अन्तपादो निशाभागे५१४।२२
अन्त्योपान्त्यौ त्रिभौ २४।१, २९।४
अन्यदातु यदा भानोः५२२।२१

अपत्नीकः प्रवासी च ३७४।६
अपत्यनाशमाप्नोति ४४२।१५
अपराधसहं तस्य २६५।११
अपराह्णे पिण्डपितृयज्ञः ३५९।४
अपामार्गपल्लवांस्तु ४७२।१४
अपेयं हि सदा तोयं ३४३।७
अप्रदीपा यथा रात्रिः ४।१
अप्राप्ते द्वादशीमध्ये १७६।१०, १७८।४
अप्राप्ते भास्करे कन्यां २९१।१२
अप्रायत्ये समुत्पन्ने ३३२।१०
अब्जेषु गोषु ५१९।१७
अभक्ष्यपरिहारस्तु ४५३।१६
अभावे देवखातानां ३३०।५
अभिजिन्नाम नक्षत्रं ~~४८४।५~~
अभ्यङ्गं स्पर्शनादेर ३४२।१०
अभ्यङ्गात्स्पर्शनाद्वापि ३४२।५
अमा नाम रवे रश्मिः ३५५।१
अमा या प्रतिपद्युक्ता ३५६।६
अमा वसेतामृक्षे तु ३५४।८
अमावास्यां तुलादित्ये १९६।१२, २३१।४, ४०३।१६
अमावास्यां न गच्छेत्तु ३३६।५
अमावास्यां न तु च्छिन्द्यात् ३३४।१
अमावास्यां नवम्यान्तु ३३८।८
अमावास्यां यदा मैत्र३६३।१२
अमावास्यां यदा वारो२६३।८
अमावास्याद्वयं यत्र ५५।४, १३९।४, १७३।३
अमावास्यापरिच्छिन्नं १२७।२, १७४।४
अमावास्यापरिच्छिन्नः ६।२
अमावास्यामतिक्रम्य १७०।६, १७१।२, २५३।९
अमावास्या यदा रौद्रे३६३।१४
अमावास्यायामपराह्णे ३५९।२
अमावास्याष्टमी चैव ३३७।६
अमावास्याष्टमी षष्ठी४७६।१८
अमा वै सोमवारेण ४९३।७
अमाशब्दः सहार्थे ३५४।१४

अमा स्यात्प्रतिपद्युक्ता २६१।१०
अयनद्वितये श्राद्धं २९१।१०
अयनस्योत्तरस्यादौ १७।७
अयनादौ सदा देयं ५३६।२१
अयने कोटिपुण्यन्तु ३८१।२१
अयने द्वे विषुवे द्वे ३८१।३
अयने विषुवे चैव ३८८।१८,
३८९।१, ५२४।४
अयने विषुवे पुण्ये ३२१।११
अरुणोदयवेलायां ३५९।२२,
४४२।१९
अर्काङ्गं शुचिगोमयं ४१९।१२
अर्चयित्वाच्युतं तस्यां ४५९।१६
अर्चयेत्पुण्डरीकाक्षं ४६६।१
अर्द्धरात्रादधस्तोर्द्ध्वं ४९३।१२
अर्द्धरात्रादधस्तस्मिन् ३८५।११
अर्द्धरात्रेण योगोऽयं ४९३।१०
अर्व्वाक् षोड़शनाड्यस्तु ३८२।१४
अवमानेषु तोयेषु ३३०।१८
अवषट्कारहोमस्य १४१।५
अव्दमम्बुघटं दद्यात् १६२।२
अशिरस्कं भवेत्स्नानं ३२१।१५
अशुभमपि विलोक्य ५२०।४
अशून्यशयना नाम ४०७।१३।
१७
अशोककलिकाश्चाष्टौ ४२२।११
अष्टकान्यपि तत्रैव ३५४।२
अष्टमी बुधवारेण ४२२।८
अष्टम्याञ्च चतुर्द्दश्यां ३३७।१
अष्टम्याञ्च नवम्याञ्च ५१३।२०
अष्टम्यान्तु सिते पक्षे ४२४।१
अष्टम्यामथ रोहिण्यां
४९३।१६, ४९९।३
असकृज्जलपानाच्च ४५२।१३
असत्यभाषणं द्यूतं ४५२।२
असामर्थ्ये शरीरस्य ४५०।२
अस्तङ्गते यदा सूर्य्ये ३८३।१७
अस्ते सन्ध्यागते काले १३७।५
अहःसु तिथयः पुण्याः
५०४।१९
अहोरात्रन्तु नाश्नीयात्
५३७।१६
अहोरात्रस्य यः सन्धिः
३३०।२१

अङ्गः पञ्चदशांशो ३६८।४
अङ्कि संक्रमणे पुण्यं ३८७।८
अङ्कोरायन्तयोर्भक्तं ४९८।९

### आ

आकाङ्क्षन्ति पितरः ३०६।११
आग्नेयं वारुणञ्चैव ३३२।६
आग्रहायण्या ऊर्द्धं ३५३।२
आदित्यस्योदये यत्र ३५९।१९
आदित्येऽहनि संक्रान्तौ ४३५।६
आदिपादार्द्धमात्रेण ४८।२
आदौ कर्कटके देवी २८६।२१
आद्यश्राद्धे त्रिपक्षे वा
३२०।१२।१४
आपोहिष्ठेति वै मान्त्वं
३३१।२०
आभाकाद्येषु मासेषु १७६।११
आभाका सितपक्षेषु १७५।८,
१८५।१
आमपात्रन्तु पूर्वाह्ने ३६७।१२,
२७४।११
आमिषं मैथुनञ्चैव ३२४।१७
आरभ्य कुतपे श्राद्धं ३७२।१९
आर्द्राद्यपादेऽश्वयुजि ५१४।४
आर्द्रायां बोधयेद्देवीं ५११।१८,
५१४।९
आह्निके पितृकार्य्ये च ७।२
आह्निके पितृकृत्ये च ३७५।५
आश्विनं सकलं मासं ३२७।१
आश्विने पौर्णमास्याञ्च ४०३।५
आश्विने पौर्णमास्यान्तु
२२३।१२
आषाढ़द्वयसंयुक्तं ११५।१२
आषाढ़शुक्लपक्षान्ते १८८।२
आषाढ़स्य सिते पक्षे ३३२।१७
आषाढ़स्यापि दशमी ५२०।१६
आषाढ़ी कार्त्तिकी माघी
३४६।१४।१६
आषाढ़ीमवधिं कृत्वा ३०६।१४
आषाढ़े कार्त्तिके वापि ६२।६
आषाढ़े मासि भूताहे ४७१।८
आषाढ्यां सरयूतोये ३२३।१९
आषाढ्यादिचतुर्मासं ३३२।१४

आषाढ्यामथ कार्त्तिक्यां २२०।१८
आसतमकुलं हन्ति २३४।११
आसन्नत्वाद्यदुर्योर्धर्मस्य २९२।४
आसु यत्क्रियते पापं ३२२।३
आहाराज्जायते व्याधिः ३४३।२०

## इ

इत्येषा कथिता वीर४१६।१३, ४१८।४
इदं व्रतं मया देव ३३३।२
इन्दुक्षयेऽर्कसंक्रान्त्यां ४२८।३, ४२९।१७, ४३५।१५

## ई

ईषत्प्रभिन्नेऽरुणरश्मिजाले २९२।१५

## उ

उच्चैः प्रदीपमाकाशे ३२५।१४
उत्तरमयनमायाते १७२।६, २४४।१६
उत्तराहस्तचित्रर्क्षे ३०४।१
उत्तराहस्तचित्रासु ३०४।५
उदगयने पुण्याहे ४७५।१४
उदयन्निव सविता ४७३।१७
उदयात्प्राक् दशम्यान्तु ४४४।९
उदयाद्वर्द्धमानैश्च ३६०।५
उद्धृत्य चापि त्रीन् पिण्डान् ३२९।७
उपप्लवश्चन्द्रमसो रवेश्च ५२७।२
उपमर्दे लक्षगुणं ५२७।४
उपयामगृहीतोऽसि १६।९
उपवासनिषेधे तु ४३१।५, ४६५।३
उपवासासमर्थानां ४६०।२
उपवासे तथा श्राद्धे ४५२।४
उपाकर्म्म च कर्त्तव्यं २७५।८

उपाकर्म्मणि चोत्सर्गे२८०।१७,
२८१।१
उपाकर्म्म तथोत्सर्गः १४४।७
उपावृत्तस्य पापेभ्यो ४५३।२
उपासीत प्रत्यहं सन्ध्यां ३३१।२
उपोषितव्यं नक्षत्रं ५०८।९
उपोषितस्य व्रतिनः ३३६।११
उपोष्यैकादशीं यस्तु ४४०।१९
उभयत्र प्राप्तौ ४८८।१६
उभयोस्तस्य निष्पत्तौ ४८०।१
उभे सन्ध्ये तु स्नातव्यं ३३१।११
उमां शिवं हुताशञ्च ४०७।१०
उषस्युषसि यत्स्नानं ३२८।२

ऊ

ऊर्ज्जे मासि प्रदीपञ्च३२५।१२
ऊर्द्ध्वं मुहूर्त्तात्कुतपात्३७०।११

ऋ

ऋक्षत्रये तु मूलादौ२१०।१६,
५१६।३
ऋक्षादिपादयोगे च १८२।७
ऋक्षैकमन्दिरगतौ १३८।२
ऋचो यजूंषि सामानि४६१।१५
ऋषिभिर्देवताभिश्च ३३०।१५

ए

एकजप्यात्सहस्रस्य ४६१।६
एकभक्तेन नक्तेन ४३०।१०
एकभक्तेन यो मर्त्त्यः ४५७।५
एकरात्रमुपोष्यैव ५२४।१
एकराशिगतौ स्यातां३४७।१४
एकसंज्ञौ यदा मासौ ९५।११
एकादशाहे प्रेतस्य ३२०।१०
एकादशीं दशायुक्तां४४३।११,
४४७।६
एकादशी ऋषीणान्तु२२५।१०
एकादशी कलायुक्ता ४४०।१०
एकादशी दशायुक्ता ४४३।१३,
४४७।८, ४९१।६
एकादशी द्वादशी च ४३८।२,
४४०।६, ४४७।१३,
४४८।१७, ४६४।७

एकादशी प्रवृद्धा चेत् ४३८।६
एकादशीमुपवसेत् ४४३।४
एकादशीमुपोष्येत ४४४।२१५
एकादशीमुपोष्यैव ४४०।१६, ४६३।८
एकादशी यत्र लुप्ता ४४६।१६
एकादश्यष्टमी षष्ठी ४७६।५, ४७७।११
एकादश्यां द्वादश्याञ्च १८२।१
एकादश्यां द्वादश्यान्तु ४६५।१६
एकादश्यां न भुञ्जीत ४२६।१।१६
एकादश्यां निराहारो४२६।१२, ४२६।११, ४५६।८
एकादश्यां यदा राम४२७।१२
एकादश्यां समारभ्य ३३८।५
एकादश्यां सिते पक्षे ४५५।१।७।१६
एकादश्यान्तु गृह्णीयात् ३३२।१८
एकादश्यान्तु नक्तेन ४५०।१६
एकादश्यामुपवसेत् ४३०।१८
एकालिप्तासमायुक्ता ४३८।१७
एकैनैवोपवासेन ४८३।२
एकैकस्य तिलान्मिश्रान्४७२।३
एकोद्दिष्टञ्च यच्छ्राद्धं १४१।१०
एकोदिष्टन्तु यच्छ्राद्धं ३७३।२१
एतानेव हि हिंसन्ति ३०५।५
एते प्रयच्छन्त्यभयं ४१३।१८
एवंविधा सिनीबाली३५७।१३
एवं षष्टिदिनो मासः १३८।१०
एषा धन्या पापहरा ४१५।८
एषु जागरणं कृत्वा ४१८।७

ऐ

ऐन्द्रे गुरुः शशी चैव ३४८।८
ऐन्द्रे मैत्रे यदा जीवः ३५०।५
ऐन्द्रे शशी सुराचार्य्यः ३४८।२१, ३४८।२१

ओ

ॐ वज्रहस्त सुरारिघ्न २८६।४

क

कनकाश्वतिला नागा १३१।३
कन्यां गते सवितरि ३००।७, २०३।३।६, २०४।१०, ४२०।७
कन्यागते सवितरि ५१३।१८
कन्यायां कर्किसंस्थे १३७।९
कन्यायाः कृष्णपक्षे तु ५११।६
कन्यायामगते सूर्य्ये २९१।२०
कन्याराशौ महाराज३०२।१०
कन्यासंस्थे रवौ वत्स ५१३।१
कर्कटे संक्रमणं ३९१।१५
कर्किण्यर्के हरौ सुप्ते १९१।६, १९७।९, २०५।१, २०७।६, २२०।१२, २२१।१२, २३५।६, २४१।८
कर्णिकैः करवीरैश्च ४१७।१३
कर्त्तुस्तात्कालिकी शुद्धिः ५३३।१८
कर्षेणात्यधिकैः षड्भिः ३४५।१३
कलधौतं तथा चान्नं ४०८।११
कलयापि च संसृष्टां ४४२।६
कलाप्येकादशी यत्र ४४०।८
कलार्द्धेनापि विद्धा या४४३।१
कलार्द्धेनापि विद्धा स्यात् ४४५।१७
कषायेण शिरः स्नात्वा३२६।१५
कांस्यं मत्स्यं सुरां क्षौद्रं४६८।८
कांस्यं माषं मसूरञ्च ४५१।१९
कामदेवस्त्रयोदश्यां ४६९।७
कार्त्तिकं सकलं मासं ३२४।१२
कार्त्तिकस्य तु मासस्य १५।५, ४२५।५
कार्त्तिकीं पुष्करे स्नातः३२३।२
कार्त्तिकी फाल्गुनी चैत्री ५२०।१८
कार्त्तिकी फाल्गुन्याषाढ़ी ३५३।१४
कार्त्तिके कृष्णपक्षे तु ४७२।१२
कार्त्तिके ग्रहणं पुण्यं ५२४।१०
कार्त्तिके पुष्येण मासपुण्यानि ३२५।४

कार्त्तिके भौमवारेण ४७१।११
कार्त्तिके मासि योदीपं ३२६।१४
कार्त्तिके मासि शुक्लादौ ४०४।१५
कार्त्तिके शुक्लपक्षस्य ४०५।१२
कार्त्तिक्यान्तु यदा ऋक्षं ५१।८, ६१।७
कार्य्या विद्यापि सप्तम्या ४९३।१४
कालान्यूनेऽर्द्धरात्रे तु ३८६।१२
काले तूत्थापिते शक्रे २८६।१७
काले धनिष्ठा यदि नाम ३६४।४
कालोत्तरैः सुरभिभिः २९२।१९
किन्त्वमैताद्यपादेन १७९।२
कीदृशस्तु भवेद्देधो ४४४।१८
कुम्भे वा सितवस्त्रे वा ४६९।९
कुर्य्यादलाभे संयुक्तां ४४४।७
कुशाः शाकाश्च पुष्पञ्च ३३४।३
कुहूपूर्णेन्दुसंक्रान्त्यां ३८०।७
कृतोपवासाः सलिलं ३९२।५
कृत्तिकादिभरण्यन्तं ३०३।१५, ३६५।५
कृत्तिकानां यदा सूर्य्यः ३९०।१
कृष्णचित्रागताभूता ४७१।१५
कृष्णपक्षे चतुर्थ्यान्तु ४१२।९
कृष्णपक्षे त्रयोदश्यां १७२।१, ३९८।१९
कृष्णपक्षेऽथ संक्रान्त्यां ४३५।१३
कृष्णो गलेऽस्य बिन्दुः ५१८।५
केतुभङ्गपतने २९९।१०
केशरिणि सुरसचिवे १३५।१९
कोटिजन्मकृतं पापं ५२३।१३
कौमारे यौवने बाल्ये ४९४।१९
कौमुद्यां पूजयेल्लक्ष्मीं ४०३।७
क्रव्यादकौशिककपोतक २९९।६
क्रियते खेदबाहुल्यात् ३३९।१६
क्षणा मुहूर्त्ता दिवसा ९९।८
क्षमा सत्यं दया दानं ४५४।८
क्षारोदके चाप्यवगाह्य ४५८।१५

क्षीराब्धौ शेषपर्य्यङ्के १८८।७
क्षौरे शनैश्चरादित्य ३३५।२

## ख

खं यत्र गोपतिर्गोभिः ३७२।७
खञ्जनको नामायं ५१७।५
खर्व्वो दर्पस्तथा हिंसा ५००।२

## ग

गङ्गाकनखले पुण्ये ५२३।१०
गङ्गाद्वारे तु वैशाखी ३५१।१०
गङ्गास्नानात्सिताज्येष्ठे ४०१।१४
गणेशे कारयेत्पूजां ४१२।६
गतेऽब्दद्वितये सार्द्धे ११४।४
गन्धपुष्पोपहारैश्च ४१३।८
गयाशीर्षवटे स्नातः २२३।५
गर्हितः पितृदेवाभ्यां ३९६।७
गवां कोटिसहस्रस्य ५२१।२०
गुड़पूपपायसाद्यैः २९४।१०
गुड़पूपाश्च दातव्या ४१०।६
गृहपटलेऽर्थभ्रंशः ५१८।१२
गृहीतेऽस्मिन् व्रते देव २२३।४
गृही त्रयोदशीश्राद्धं ५२६।४
गृहीत्वौदुम्बरं पात्रं ४५६।२
गृही बलिपलितदर्शने ४२७।७
गोगोष्ठसत्समागम ५१७।२०
गोदावरी महापुण्या ५२४।१८
गोधूममाषमधुमैथुनमद्यमांस ४१९।१७
गौतमादीन् ऋषीन् सप्त २८०।१२
ग्रस्तास्तमिते चन्द्रे ५४३।१५
ग्रहणे शावमाशौचं ५२४।९
ग्रहणोद्वाहसंक्रान्ति ३८६।५
ग्रैष्महैमन्तिकान्मासान् १११।७

## घ

घटिकार्द्धं विभागं वा ४७८।२०
घटिकैकाप्यमावास्या २६०।१२, ४९१।९
घृतेन दीपं प्रज्वाल्य ३२६।१६

## च


चतुर्णामपि वर्णानां ३२११।३
चतुर्थाहे त्रिपचे च १६३।८
चतुर्थी भरणीयोगे ४१०।१६
चतुर्थे प्रहरे प्राप्ते २६८।६
चतुर्दशीभरणीयोगे ३२४।३
चतुष्पथेषु रथ्यासु ३२६।१०
चत्वारि यानि कर्म्माणि
२४३।१८
चन्द्रभागाम्भसिस्नातो ३२३।१५
चन्द्रमा एकऋचञ्च २४७।२१
चन्द्रसूर्य्यग्रहे चैव ५२२।५
चन्द्रसूर्य्यग्रहे नाद्यात् ५२७।१०
चन्द्रसूर्य्यग्रहे स्नायात् ५२८।१
चन्द्रस्य यदि वा भानोः
५२८।२
चन्द्रार्कोपरागे ५२७।१२
चन्द्रे वा यदि वा सूर्य्ये ५२१।१०
चातुर्मासे निवृत्ते तु २४४।१
चान्द्रः शुक्लादिदर्शान्तः ५।८
चित्राकृष्णचतुर्द्दश्यां ४७१।१२
चैत्रकृष्णचतुर्द्दश्यां ४७१।२४
चैत्राष्टम्यादिपूर्णिमां ४२३।१
चैत्रे मासि सिते पक्षे ४६७।१०
चैत्रे शुक्लत्रयोदश्यां ४६८।२
चैत्रे सितचतुर्द्दश्यां ४७०।४
चैत्रे सितादेरुदयात् १००।२


## ज


जन्मनान्तु सहस्रेण ५२३।१७
जन्ममासं हितं श्राद्धे ३७६।३
जन्ममासे न कर्त्तव्यं ३७६।८
जन्मोदये जन्मनि वासरे वा
३७५।१८
जयञ्च तपश्च तथा ४५८।११
जयन्त्यामुपवासन्तु ४८४।१७
जयन्त्यामुपवासश्च ४८५।३
जातकर्म्मणि यच्छ्राद्धं १४१।१२
जातीतगरकैश्चैव ४१७।१०
जीवे केसरिसंस्थिते १२५।८
ज्यैष्ठशुक्लदशम्याञ्च ४०१।५
ज्यैष्ठस्य शुक्लदशमी ४००।१४

ज्यैष्ठे मासि सिते पक्षे ४०१।१, ४६८।५

त

ततस्तेनाम्भसा पूर्णां ३४५।१७
ततो वृश्चिकमायाते ३००।९
ततो रात्रिः क्षयं याति १७।११
तत्परायुतभागस्तु ३८२।१०
तत्र पूज्ये विधेर्वृत्तिः ३७८।७
तत्रार्च्चनमुपवासं ४९९।१३
तत्रैव चन्द्रमास्यैव २५१।२२
तत्रैव चेन्नाद्रपदास्तु ३६४।८
तथा कृष्णचतुर्द्दश्यां ४७२।६
तथा भाद्रपदे मासि ४१३।११
तथा मन्वन्तरादौ च ५२०।१२
तथा सिततृतीयायां ४०८।३
तदा च नवरात्रन्तु ५१३।१४
तदा तु सा महापुण्या ४२१।१२
तदा दानानि देयानि ३९०।७
तदा वाध एव तन्मासि ३५८।६
तदेव विषुवाख्योऽयं ३९०।२
तद्व्रतं धनदस्येदं ४५०।१८
तन्निमित्तोपवासस्य ३८९।१४, ४६४।१७
तपनस्य सुता गङ्गा २८७।६
तस्मात्तस्यां सदा देवि ४२१।८
तस्मात्प्रमादे दुःखे वा ४४९।१७
तस्माद्दानञ्च दातव्यं ५४३।२०
तस्माद्वृषादिराशिस्थे २७८।१
तस्मिन्नुपोष्य विधिवत् ४६४।१२
तस्मिन् हि गोभूमिहिरण्य ४६७।१९
तस्यां जगत्पतिर्द्देवः ४५५।५
तस्यां यद्दीयते किञ्चित् ४०९।६
तस्यां सम्पूज्य देवेशं ४१७।४, ५०८।२
तस्यां स्नातः सर्व्वतीर्थे ४६१।४
तस्यां स्नातो विधानेन ४६१।१३
तस्यां स्नानं जपो होमः ४२१।६
तस्यां स्नानं तथा दानं ४११।४
तस्यामनग्निपक्वाशी ४५१।२

तस्यामेव दशम्याञ्च ५१६।१४
तस्यार्को दर्शकस्यैव १२६।६
ताः सर्व्वाः सुभगाः स्युर्वै ४११।८
तारापतौ त्रिदशदानक २९६।२०
तिथावस्यान्तु यत्पुण्यं ३५२।२
तिथिक्षये सिनीवाली ३५५।१०
तिथिर्द्वैधं यदैकस्मिन् २९६।११
तिथिनक्षत्रवारादि ३।३
तिथिभान्ते च पारणं ४६५।७
तिथिस्त्रयोदशं हन्ति ४९३।१८
तिथीनां पूज्यता नाम ३७८।९
तिथीनां प्रसवा यस्मात् ४०६।१०
तिलैर्होमस्तिलैः स्नानं ४६६।१४
तिलोद्वर्त्ती तिलस्नायी ३४४।१९
तिस्रोऽष्टकास्तु कर्त्तव्या ३५३।६
तिस्रो ह्येताः पुरा प्रोक्ताः ४०६।१२
तुलामकरमेषेषु ३२७।१५, २६३।२
तुष्यत्यामलकैर्विष्णुः ३४४।१२
तृतीया चैव माघस्य ५२०।१४
तृतीया चैव वैशाखे ४२४।१४
तृतीया तु भवान्याश्च २२५।६
तृतीयायां यजेद्देवीं ४१०।११
तैलं मांसं भगं क्षौरं ३३४।६
तैलस्त्रीमांससेवी च ३३७।८
तैलैः स्नानं महापुण्यं ३४४।१०
तोयदानं विशेषेण ४०९।८
त्रयोदश्यां तृतीयायां ३४०।११
त्रयोदश्यान्तु वै श्राद्धं २९८।२२, ५२६।६
त्रयोदश्यान्तु शुद्धायां ४४७।१
त्रयोदश्यामश्वयुजे ३२४।१
त्रिंशत्कर्कटके नाड्यो ३८३।१
त्रिंशत्कर्कटके पुण्यं ३८३।११
त्रिंशन्मुहूर्त्तं कथितं १४।९
त्रिदशाः स्वर्गसमये ५३६।१७
त्रिरात्रफलदा नद्यो ३३१।८
त्रिष्वेतेष्वथ भक्तेषु १७।९

त्यहस्पृग्दिवसश्चैव ३२२।१०
त्वामशोक हराभीष्ट ४२२।१४

द

दर्ग्नोदराय दण्डाय ४७२।१
दन्तकाष्ठे त्वमावास्या ३३६।२
दया सर्व्वेषु भूतेषु ४५३।६
दर्भं पुष्पाणि समिधं ३४१।१२
दर्शद्वयं यदैकस्मिन् ११५।८
दर्शस्नानं गयाश्राद्धं ३३९।८
दर्शाद्दर्शश्चान्द्रः ५।५, ९८।४
दर्शे स्नात्वा पितृभ्यस्तु३६२।१४
दर्शे स्नानं न कुर्व्वीत ३३९।१०
दशजन्मकृतं पापं ४०१।१२, ५२३।१५
दशमी च तिथिस्तासां४२५।७
दशमी ज्यैष्ठशुक्लस्य ४००।१८
दशमी नवमी चैव ३३९।२१
दशमीमिश्रिता वैश्य ४४२।११
दशमी शेषसंयुक्ता ४४१।१९
दशम्यनुगता हन्ति ४४२।३
दशम्यां नारभेन्नैव ४४१।६
दशम्यां नियताहारो ४२६।१०
दशम्यां बलहृद्धर्थं ५१६।१६
दशम्यां शुक्लपक्षे च ४०१।८
दशम्यान्तैलमस्पृष्ट्वा ३४२।१२
दशम्येकादशी यत्र ४४१।१५
दशम्येकादशीविद्धा ४४८।९
दशम्यैकादशीयुक्तां ४४५।९
दशम्यैकादशीविद्धा ४४१।१०
दशहरास्वनुत्कर्षः १४५।४, २७७।१२, ३९३।५
दानं यद्दीयते किञ्चित् ४५५।१२
दामोदराय नभसि ३२६।४
दिनक्षयेऽर्कसंक्रान्त्यां ४४७।१८
दिवसस्य हरत्यर्कः ११३।२
दिवसस्याष्टमं भागं ३६६।९
दिवसस्याष्टमे भागे ३६९।१४, ३७२।१२
दिवा कपित्थच्छायास्वि३३६।२०
दिवा रात्रौ व्रतं यच्च ४९७।१२, ५०२।१९

दिव्यान्तरीक्षभौमानि २०४।१२
दीर्घं ददाति यो नित्यं ३२६।२०
दीपदानपरो नित्यं ३२६।१८
दुर्गायाश्च त्रिभिर्मासैः १९१।१९
दुर्गोत्थानस्य नवमी ३५२।१३
दृष्टचन्द्रा सिनीवाली ३५५।१८
देवतास्तस्य तुष्यन्ति ४५६।५
देवमभ्यर्च्चंय पुष्पैश्च ५०२।१३
देवादीनां प्रतिष्ठाञ्च १३५।१७
देवानुद्दिश्य यत्श्राद्धं ५०९।१८
देशकाल उपायेन ३२१।८
दैवे कर्म्मणि सम्प्राप्ते ४७४।१
द्वयोरयनयोश्चैव ३२०।२०
द्वादशी श्रवणायुक्ता ४६२।६, ४६४।११
द्वादशी श्रवणोपेता ४६०।७
द्वादश्यां कृष्णपक्षे तु ३४०।८
द्वादश्यां यस्तिलैरर्च्चेत् ४६५।२०
द्वादश्यां विजयाख्यायां ४६६।६
द्वादश्यां शुक्लपक्षे तु ४६२।१६
द्वादश्यां षट्तिलाचारं ४६७।४
द्वादश्यां सन्धिसमये १८३।११
द्वादश्याञ्च तथा भुक्त्वा ४४९।१३
द्वादश्यान्तु सिते पक्षे २९४।१६
द्वादश्यामष्टम्यां ५१७।१
द्वादश्यामुपवासन्तु ४४६।२, ४४९।३
द्वादश्यामुपवासोऽत्र ४४६।८, ४६१।१७, ४६५।११
द्वादश्यामेकभक्तन्तु ५१२।१९
द्विजो यथालाभमुपाकृतार्घः २९३।५
द्वितीयादिकयुग्मानां ४८५।४
द्विमासं सरितः सर्व्वाः २८२।१०
द्विराषाढ़ः स विज्ञेयः २१९।६
द्विराषाढ़क्रिया तावत् १०३।१
द्विराषाढ़विकल्पोऽयं २००।४, २४०।१३
द्विराषाढ़े तु कन्यायां ५१६।१२

द्विराषाढ़े तु सम्प्राप्ते २००।७
द्विराषाढ़े समुत्पन्ने १८६।१५
द्वे चाष्टम्यौ तु मासस्य २२२।१७
द्वे पौर्णमास्यौ ३५८।२१
द्वौ तिथ्यन्तावेकवारे १२७।६, ४४८।२, ४८३।६

ध

धनधान्यवती पुण्या ४६५।११
धनधान्यसमृद्धिस्तु ३२६।११
धनुःसहस्राण्यष्टौ च २८५।५
धनुर्मिथुनकन्यासु ३८१।१२
धर्म्मविन्नाचरेत्स्नानं ३४१।२
धवलितकलसन्यस्ता ४७१।६
धान्यमन्नं तथा शाकं ४०६।१७
ध्वजस्तु शतयज्ञस्य २०५।३

न

न कुर्य्यान्मलमासे तु १४१।८
नक्तं भुञ्जीत च नरो ५०२।१५
नक्तं हविष्यान्नमनोदनं वा ४३१।८
नखे कृत्ते कृते श्मश्रू ३३६।१३
न गुणान् गुणिनो हन्ति ४५३।१४
न चाभीक्ष्णं शिरःस्नानं ३३६।१७
न चाल्पत्वबहुत्वाभ्यां ७६।२
न चिरमेकत्र वसेत् १११।१२
न तत्कुर्य्यात्तृतीयायां २३६।१८
न तु काष्ठममावास्यां २३४।१६
न दिवा स्वपिति गोविन्दो १७७।१४
नदीषु देवखातेषु ३३०।१
न पर्व्वसु तैलं ३३३।१६
न पालयन्ति ये पर्व्व ४७०।१
नभस्यस्यापरे पक्षे ३०३।६
नभोनभस्ययोर्मध्ये २८२।१४
नरकाय प्रदातव्यो ४७२।१७
नरपतिरिदमर्घं २६३।१
नरस्य द्विगुणच्छाया ३७०।३
न राहुदर्शनवर्ज्जं ३२७।२०

नर्म्मदातोयसंसर्गात् ५२४।२०
नवमी पुत्त्रनाशाय ३४०।५
नवमी शुक्लपक्षस्य ४७०।१६
नवम्यां दर्शसप्तम्यां ३३८।१४
नवम्यां पूजयेद्देवीं ४२५।१
नवम्यां यस्तु पिष्टाशी ४२४।९
नवम्यान्तु सदा पूज्या ४२४।७
न वर्त्तयति यः श्राद्धं२६२।१९
नवश्राद्धं दशाहानि १४३।४
नवसृतेष्वमावास्या २६३।२०
न स्नानमाचरेत् भुक्त्वा३४०।१५
न स्नायात् वत्सरेऽतीते३४०।२१
नागविद्धा च या षष्ठी४७८।१६
नागविद्धा तु या षष्ठी४७८।२।
८।११
नागो द्वादशनाड़ीभिः५०८।१४
नाचरेत् सग्रहे चैव ५२८।५
नाड़ीद्वयं मुहूर्त्तन्तु २४५।१९
नाद्यः षोड़शपूर्व्वेण ३८२।१७,
५२१।४
नातिद्रुतं न च विलम्बित
२९९।१
नाद्यात्सूर्य्यग्रहात्पूर्व्वं ५३९।१७
नानुलिप्तो न चाजस्रं३४०।१८
नान्यथा स्नापयेद्देवं २३७।१२
नाभ्यङ्गं भुक्तरणकाम ३३५।७
नावर्त्तयेत् पुनः कर्म्म ३४१।४
नित्यनैमित्तिके कुर्य्यात्
१४०।२
निम्बस्य भक्षणात्तैलं ३३७।१८
निरुद्धासु न कुर्व्वीरन् ३२९।४
निर्निमित्तमदीक्षायां २६५।९
निर्व्वर्त्त्यं द्वादशीकर्म्म ४४८।१९
निशायामन्तपादे च २९४।६,
२९७।६
निशि स्नापो दिवोत्थानं
१७६।४, १७७।७
नीराजननिवृत्ते ५१७।२
नीलभद्रविमोक्षेण २६२।१७
नृपतिरपि शुभं ५१७।७
नेक्षेतोद्यन्तमादित्यं ५३२।१
नैष्टकचिते पितॄंस्तर्पयेत्
३२९।१४
न्यूनातिचारे दुर्भिक्षं ११९।७

प

पक्षं वृद्धस्तु पूर्व्वेण १३५।२
पक्षद्वयं श्रावणादि २८१।६
पक्षद्वयेऽपि संक्रान्तिः १३९।८
पक्षादावेव कुर्व्वीत ३५७।२
पक्षादौ च रवौ षष्ठ्यां ३३६।९
पक्षान्ते पौर्णमास्यान्तु ३४६।११
पक्षान्ते स्रोतसि स्नातः ३४६।१३
पक्षिमत्स्यमृगैर्य्ये तु ३२०।६
पक्षौ धुन्वन्न शुभः ५१९।५
पङ्के स्वादन्नाप्तिः ५१८।२
पञ्च पिण्डाननुद्धृत्य ३२९।१८
पञ्चमी दयिता राजन् ४१३।२
पञ्चमी दशमी चैव ३४२।३।८
पञ्चमोऽथ दिनांशो यः ३६७।२२
पञ्चम्यां स्नपयन्तीह ४१३।३
पञ्चाननस्थौ गुरुभूमिपुत्त्रौ ३६४।१९, ४६७।१५
पतितपापपाषण्ड ४५२।१६
पत्नीविमुक्तस्य नरो ४०७।१५
पयः पीत्वा ततो गव्यं ४५४।१५
परकीयनिपानेषु ३२८।१२
परकृतनिपानकूपांश्च ३२८।२०
परद्रव्याण्यभिध्यायन् ४०२।९
परद्रव्येष्वभिध्यानं ४०१।२२
परनिपानेषु न स्नानमाचरेत् ३२९।१०
परे वा बन्धुवर्गे वा ४५३।१०
परैर्नाक्षिप्यते यस्तु ५१४।१९
पर्व्वसु नाधीयीत ३३३।१३
पानीयमप्यत्र तिलैर्विमिश्रं ३९७।१
पारणान्तं व्रतं ज्ञेयं ४६३।१६
पारुष्यमनृतञ्चैव ४०२।२
पार्व्वणेन विधानेन ३१९।१७
पिचुमर्द्दस्य पत्राणि ४१४।४
पिण्डान्वाहार्य्यकं श्राद्धं ३५९।७, ३७०।७
पितृयज्ञन्तु निर्वर्त्त्य ३५४।५

पित्र्य रात्र्यहनी मासः३०८।८
पुण्यं कन्यागतन्तावत् ३१६।१
पुण्याख्यविष्णुपद्याञ्च ३८४।२२
पुण्ये च जन्मनक्षत्रे ३२२।५
पुत्रजन्मनि संक्रान्त्यां ३४१।१०
पुत्राणां वर्द्धनं धान्यं ३०५।३
पुनर्व्वसौ देवगुरौ ४५८।७
पुनर्व्वसौ वृषे लग्ने ४२२।१८
पुरुषोऽनृतवादी च ४०२।११
पुष्पालङ्कारवस्त्राणि ४५४।५
पुष्पैर्गन्धैर्नवैर्वस्त्रैः ४०५।१
पुष्ये तु छन्दसां कुर्य्यात्२७४।७
पूजयिष्यन्ति ये मर्त्त्या ४६८।१६
पूजयेद्गन्धपुष्पैश्च ४१३।१२
पूर्णाप्येकादशी त्याज्या ४३८।११
पूर्णे चेदर्द्धरात्रे तु ३८३।८
पूर्व्वः पक्षो देवानाम् ४७५।१२
पूर्व्वसङ्कल्पितं यत्तु ४४८।५
पूर्व्वाह्ने चेदमावास्या३५८।१७
पूर्व्वाह्ने दैविकं कार्य्यं३६७।१०
पूर्व्वाह्ने दैविकं श्राद्धं३७०।१७, ५०८।२२
पूर्व्वाह्नो वै देवानां ४७४।६
पूर्व्वेद्युरुपवासः स्यात् २६८।६, ३६५।१४
पूर्व्वोक्ते तु व्रते चीर्णे ४४८।१५
पूर्व्वोत्तरगते भागे ३८७।२
पृथिव्यां यानि तीर्थानि ४२२।१७
पौर्णमासीव्यतीपातौ३४७।१८, ३५१।१७
पौर्णमास्यां सिते पक्षे३४८।१५
पौर्णमास्याममावास्यां ३२२।१५
पौर्णमास्यो भवन्त्यन्याः१४८।४
पौषमासस्य या शुक्ला ३२३।१३
पौषमासस्य रोहिण्यां २७५।४
पौषे तु नर्म्मदा पुण्या५२४।१२
पौषे मासि यदा देवि ४२१।४।१०
पौष्णभेषो यदा नाक्रि १८४।४

पौष्यामतीतायां ४६८।१२
प्रतिपत्ता त्वमावास्या ३५७।५
प्रतिपत्सु त्वमावास्या ३६१।६
प्रतिपत्सु नवम्याञ्च ३३६।७
प्रतिपदाप्यमावास्या ४७५।२१
प्रतिपद्रनदस्योक्ता २२५।४
प्रतिपद्ब्राह्मणांश्चैव ४०६।१६
प्रतिपद्यनपत्यं स्यात् ३४०।२
प्रतिसंवत्सरश्राद्धे ३९५।१
प्रतिस्रोतो रजोयोगो २८८।९
प्रत्यब्दमग्निपूजा च ४१४।१७
प्रथमेऽह्नि द्वितीये वा
१९९।१०, २१५।२
प्रशस्ताचरणं नित्यं ४५३।२०
प्राच्यामस्तङ्गमने १३५।५
प्राजापत्यर्त्तसंयुक्ता ४९३।८
प्राजापत्येऽथ सौम्येऽर्कें
३४८।१९, ३५०।७
प्रातः सङ्कल्पयेद्विद्वान्
४५६।११, ५०७।६
प्रातःस्नायी च सततं ३२७।१२
प्राप्त आषाढ़मासे तु १७०।१३
प्राप्ते आषाढ़मासे तु २५३।६
प्रावृट् श्रावणभाद्राख्यौ १४।४
प्रेतमासस्य यः पक्षः ३७३।१०
प्रौष्ठपद्यां हस्तेन ७३।४,
२७५।१८
प्रौष्ठपद्यामतीतायां ३१९।९

फ

फाल्गुनामलपक्षस्य ४६८।१७
फाल्गुने पौर्णमास्याञ्च ३५२।९

ब

बन्धुदत्तन्तु बन्धूनां ४२८।१३
बन्धुनापहृतं द्रव्यं ४२८।९
बन्धुर्बन्धूनबन्धूंश्च ४०४।१०
बन्धूनामविभक्तानां ४२८।११
बहुकालिकसङ्कल्पो ४४९।७
बाल्ये वा यदि वा वृद्धे १२२।२
बुधवारेण संयुक्ता ४५९।१४
बुधश्रवणसंयुक्ता ४१०।२

ब्रह्मचर्य्यफलं यच्च ३२२।२१
ब्रह्मभूतममावास्यां ४३३।१५
ब्रह्महा स भवेत्स्तेनः ४२५।१८

# भ

भक्ष्यं भोज्यं तथा लेह्यं ४५४।१२
भक्ष्यभोज्यसमायुक्तां ४०८।११
भगलिङ्गाभिधानैश्च ५१४।१७
भविष्यत्ययने पुण्यं ३८३।२१
भाद्रपदशुक्लपक्षे २९८।१२
भाद्रे सितचतुर्दश्यां ४७०।८
भार्य्या भर्त्तुर्व्रतं कुर्य्यात् ४५०।७
भास्करातपसङ्काशः ३२५।८
भीष्मः शान्तनवो वीरः ४२२।७
भूतविद्धाप्यमावास्या ४७८।४
भूतविद्धाममावास्यां ३५७।१५
भृगावस्ते गुरौ सिंहे १२७।२
भोगार्थं क्रियते यत्र ३३९।१२

# म

मघासु पित्रेऽह्नि सुते च जाते ४२०।१२
मदुत्थाने मच्छयने २६५।७
मधुमासे तु सम्प्राप्ते ४६८।१४
मधुमासे कृषे चैव ४३५।१७
मध्याह्नात्परतो यत्र २५७।१०, २६२।७
मध्ये विषुवतोर्भानुः ११५।३
मनसा सङ्कल्पयति ४०३।१
मलं वदन्ति कालस्य १२८।४
मसूरं निम्बपत्राभ्यां ३८१।१
महागुरौ विपन्ने च १३७।७
महानवम्यां प्रथमं ४२४।११
महानिशा तु विज्ञेया २४३।११। ४।१४
महानिशे द्वे घटिके २४३।१२
महापुण्यतिथिरियं ४०६।१४
महाभाद्री बदर्य्याञ्च २५१।१२
महामाघी प्रयागे तु २५१।८
महिषोष्ट्रगर्दभास्थि ५१८।१
मांसाशने पञ्चदशी ३३३।१०
माघ एव यदा माघी ३४५।३
माघशुक्लैकादश्यामुपोष्य ४३३।९

माघस्नानं सदा पुण्यं २२८।८
माघस्य शुक्लपक्षे तु ४१५।१७
माघादिमासषट्के ३४४।१८
माघासिते पञ्चदशी २०।५,
२६३।२२
माघे मासि चतुर्थ्यान्तु १०१।८
माघे मासि तथा शुक्ला
४११।१०
माघे मासि तृतीयायां
१०१।११, ४१०।४
माघे मासि रटन्त्यापः २२८।५,
३९५।१२
माघे मासि सिताष्टम्यां ४२३।३
माघे मासि सिते पक्षे ४१८।११
माघे सितचतुर्थ्यान्तु ४१२।१७
माघ्यान्तु समतीतायां ४६६।१२
माधवादिषु षट्केषु ११५।६,
१७३।६
माधवाद्येषु षट्स्वेक २४०।८
मान्त्वं भौमं तथाग्नेयं २११।१८
मार्गशीर्षशुक्लपञ्चदश्यां ५५।१०
मार्गान्मासात्प्रभृति ३४४।५
मासः कार्त्तिकोऽग्निदैवत्यो
३२४।८
मासः पक्षद्वयेनोक्तः १४।११
माससंज्ञे यदा ऋक्षे ३४६।१९
मासाख्यर्क्षे चन्द्रगुरू ३४८।११।
१३
मासि कन्यागते भानुः ३१०।६,
३९७।९
मासिकान्नञ्चेदधिमासपातो
१६३।५
मासि प्रौष्ठपदे हस्त २८०।६
मासि भाद्रपदे शुक्ला ४५९।१०
मासि भाद्रपदे शुक्ले ४१६।१
मासि माघ्यसिते पक्षे ३६२।२१
मासि संवत्सरे चैव ३९६।२
मासे चाश्वयुजे वीर ५१३।१२
मिथुनस्थे सहस्रांशौ १९४।११
मिथुनस्थो यदा भानुः ५५।६,
१७०।१, २५३।४
मुक्तिं दृष्ट्वा तु भुञ्जीत ५३८।७
मुक्ते भगिनि भुञ्जीत
५३९।१९

मुहूर्त्ततिथिनक्षत्रा ४।३
मुहूर्त्तमप्यमावास्या २६०।२०
मुहूर्त्तेनापि संयुक्ता ४४१।१२, ५०८।१९
मुहूर्त्तोनं दिनं केचित् ४४८।५
मूनोच्चारं महारात्री २४३।९
मूलर्क्षगे शशधरे ४६७।२
मूलेन प्रतिपूजयेत् ५१५।६
मूले श्रीफलशाद्वलैः ५१५।१४
मृगकर्कटसंक्रान्तौ ३८१।५
मृतविकलभिन्नरोगितः ५१९।१०
मृताहनि तु कर्त्तव्यं ३७३।१
मेषपृष्ठे यदा सौरिः ३५१।१
मेषादौ तु तुलादौ च ३९०।१०
मेषान्ते तु तुलान्ते च ३९०।१८
मैत्राद्यपादे स्वपतीह विष्णुः १७५।४
मोदकानुदकुम्भांश्च ४०९।१५
मोहात्प्रतिपदं षष्ठीं ३३८।१९


## य


यः कुर्य्यात्कार्त्तिके मासि ३२५।६
यजेद्दः पितृदैवत्ये ३१९।१२
यज्ञोत्सवविवाहेषु ३२१।१५
यत्किञ्चिद्दीयते दानं ४०८।९
यत्तु स्नातपवर्षेण ३३१।२२
यत्नेन भगिनीहस्तात् ४०५।१६
यथा चैवापरः पक्षः ३६६।१४
यथा तिथिर्वै श्रवणेन युक्ता ४६६।१७
यथा शिखा मयूराणां ३।११
यथा शुक्ला तथा कृष्णा ४३२।१९
यथाश्वमेधो यज्ञानां ३२४।१५
यथैव गौरो वै विप्रो ४३३।१
यथोत्पन्नेन सन्तोषः ४५४।२
यदपरपक्षश्राद्धं ३००।२
यदहस्त्वेव चन्द्रमा ३५८।२
यदाक्रान्ता दशम्या तु ४४६।१२

यदा चतुर्द्दशी यामं २५९।१९,
२६८।१५
यदा चास्तमिते सूर्य्ये ३४६।१८
यदा चैकादशीं प्राप्य १८२।५
यदा तु शुक्लद्वादश्यां ४६१।१२
यदाधिमास: पतति १७३।१,
२४४।१२
यदा याम्यन्तु भवति ५।११०
यदार्थस्य विसंवाद: ९३।५
यदा वक्रातिचाराभ्यां ११९।१५
यदा शशी याति गभस्ति-
मण्डलं १२९।१९
यदा शुक्लचतुर्थ्यान्तु ४१२।२,
४९१।२०
यदीच्छेद्विपुलान् भोगान्
३२७।१९
यदीच्छेद्विष्णुना वासं४३६।१४
यदुक्तं यदहस्त्वेव २५९।११
यद्गोषपञ्चकमिति ३२४।२१
यमाय धर्म्मराजाय ४७१।२०
ययास्तं सविता याति
४७३।२०
ययास्तमेति सविता २५६।११
यश्चोपवासं कुरुते ४१७।६,
४५५।११
यस्तिष्ठत्येकपादेन ४६८।३
यस्तु केशवमुद्दिश्य ३२५।१६
यस्तु भाद्रपदस्यान्ते २९२।१९
यस्त्रिरात्रमुपोष्यैव ५२३।२१
यस्मात्तामनुमन्यन्ते ३४६।१६
यस्मान्मन्वन्तरस्यादौ १०१।१४,
४१८।१
यस्मिन्निरंशक: सूर्य्य: ३२२।१२
यस्मिन्राशिगते भानौ१४१।१५,
१६८।६, २७३।७
यस्य यस्य तु देवस्य २२५।१५
यस्य स्वजन्मनक्षत्रे ५४३।१८
यस्यां सन्ध्यागत: सोमो
२५७।१८
यस्यान्तिथावभ्युदियात्
५००।१८
यस्यान्तिथौ यमुनया ४०६।१२
यां काञ्चित्सरितं प्राप्य
४००।१६, ४७१।१८

यां तिथिं समनुप्राप्य ११६।१, ४७३।१२।१४, ५०३।१३।१५

याः काश्चित्तिथयः प्रोक्ताः ४६४।१

या तिथिः स्पृशति राजन् ४४५।१

यातुधानप्रियो मासः ३१०।६

या तु मार्गशिरे मासि ४१६।७

यात्रा चौरविवाहौ १३७।१

यात्राजसिंहतुरगोपगते ६।१

या त्वेषा कुरुशार्दूल ४०८।७

या याः सन्निहिता नाद्यः ३८७।१७

यावत्प्रदीपसंख्यानं ३२५।१०

यावत्स्नानोदयस्तस्य ५३९।३

यावन्नोदेति भगवान् ३८६।२१

यास्त्वस्यां कुरुशार्दूल ४११।६

युक्ते शशिनि भुञ्जीत ४९८।१६

युगादयः स्मृता ह्येताः ३९२।३

युग्माग्निकृतभूतानि ४७५।१९

ये पिचुमर्द्दलाभ्यां ३९१।४

येयं दीपान्विता राजन् ३०२।१५

येयं भाद्रपदे मासि ४१४।७

यैः कृता दशमीमिश्रा ४४२।८

यो जन्ममासे क्षुरकर्मयानां ३७६।५

यो ददाति तिलप्रस्थं ४५५।३

यो ददाति तु मेषादौ ३८८।१५

योऽस्यान्ददाति करकान् ४०८।२१

र

रविचक्रार्द्धमात्रापि ४४२।२१

रविणा लङ्घितो मासः ३९८।२

रविणा संयुते जीवे १३५।१२

रविवारेण संक्रान्त्यां ४२८।१७

रविवारेऽर्कसंक्रान्त्यां ४३६।१

रविसंक्रमणे पुण्ये ३८१।१६

राका चानुमतिश्चैव ३४६।३

राजसूयाश्वमेधाभ्यां ३०४।७

राज्ञीविनाशं पतिता पताका
२८८।१४
रात्रावुदयमापन्ने २६८।८
रात्री प्रबोधो विनिहन्ति
१७८।१२, २७०।१८
रात्री श्राद्धं न कुर्व्वीत
२६१।१७, ५२७।१२
रात्री संक्रमणे भानोः३८५।१८
रात्री सूर्य्यग्रहश्चन्द्रग्रहो
५२८।१८
राशिचतुष्केण यदा २८१।३
राहुग्रस्ते यदा सूर्य्ये ५२६।१७
राहुदर्शनदत्तं हि ५३१।१८
रेवतीऋक्षपर्य्यन्ते १७७।३
रेवत्यन्तौ यदा रात्री १८०।२
रेवत्यादिरथान्तो वा १८७।२
रेवत्यादीनि ऋक्षाणि३०४।१५
रोहिणीसहिता कृष्णा
४८५।१४
रोहिण्यामर्द्धरात्रेण ४८३।६
रौद्रश्वैत्रस्य मैत्रस्य ३७०।२१
रौहिणेयो विरिञ्चिश्च ३७१।२

## ल

लब्धात्मिका सती रूढ़िः २५।२
लवणञ्च गुड़ं शाकं ४११।१६
लिङ्गस्थां पूजयेद्देवीं ५१३।७
लेखाप्रभृत्यथादित्ये ३६७।१८
लोकस्य फाल्गुने दृष्टौ
११८।१३

## व

वचनाप्राप्तकाले तु २८६।१५
वत्सरान्तर्गतः पापो १२८।१
वनं पश्चाश्रतो व्रजेत् ४२७।१०
वनस्पतिं गते सोमे ३७०।१
वनस्पतिगते सोमे १४०।७
वर्त्तमाने तुला मेषे ३८५।२
वर्द्धमानस्य पक्षस्य ४७४।८।
१२, ५००।८।११
वर्द्धमानाममावास्यां ३५६।२२
वर्द्धमानेन्दुपक्षस्य ५०१।५
वर्षे वर्षे तु यच्छ्राद्धं १४१।१७

